स ते विप्रस्सह वज्रेण बाहुम्
अपागृह्णात् तपसा जातमन्युः ॥ ३२

ततो रोषात् सर्वतो घोररूपं
[1]सपत्नं ते जनयामास विप्रः ।
मधुनामानमसुरं विश्वरूपं
यं त्वं दृष्ट्वा चक्षुषी संन्यमील्यः ॥ ३३

हनुरेका जगतीस्था तथैका
दिवं गता महतो दानवस्य ।
सहस्रं दन्तानां शतयोजनानां
सुतीक्ष्णानां घोररूपं बभूव ॥ ३४

[2]वृत्तास्स्थूला राजतस्तम्भवर्णा
दंष्ट्राश्चतस्रो द्वे शते योजनानाम् ।
स त्वां दन्तान् विदशन्नभ्यधावज्
जिघांसया शूलमुद्यम्य घोरम् ॥ ३५

तं नापश्यस्त्वं तदा घोररूपं
सर्वे त्वदन्ये ददृशुर्दर्शनीयम् ।
यस्माद्भीतः प्राञ्जलिस्त्वं महर्षिं
गच्छेश्शीघ्रं शरणं दानवघ्न ॥ ३६

1. अ—संहर्तं । 2. क—वृत्तादशूला रजत ।

क्षात्रादेव ब्रह्मबलं गरीयो
न ब्रह्मतः किञ्चिदन्यद्गरीयः ।
सोऽहं जानन् ब्रह्मतेजो यथाव-
न्न संवर्तं गन्तुमिच्छामि शक्र ॥ ३७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि नवमोऽध्यायः ॥ ९ ॥
॥ ९१ ॥ अश्वमेधपर्वणि नवमोऽध्यायः ॥ ९ ॥
[ अस्मिन्नध्याये ३७ श्लोकाः ]

---

## ॥ दशमोऽध्यायः ॥

---

इन्द्रेण गन्धर्वमुखाद् याचनाथ बृहस्पतिवरणं चोदितेनापि मरुत्तेन तदनङ्गीकारे यज्ञविघाताय साटोपं यज्ञवाटं प्रत्यागमनम् ॥ १ ॥ संवर्तेन मरुत्तप्रार्थनया विद्याबलेनेन्द्रादीनां संस्तम्भनम् ॥ २ ॥ ततः संवर्तानुवर्तिनेन्द्रेण सभानिर्मापणादिना यज्ञनिर्वर्तनपूर्वकं देवैः सह हविर्ग्रहणम् ॥ ३ ॥ व्यासेनैवं युधिष्ठिरं प्रति मरुत्तयज्ञप्रवृत्तिप्रकारकथन-पूर्वकं तच्छिष्टद्रव्याहरणेनाश्वमेधकरणविधानम् ॥ ४ ॥

---

इन्द्रः—

एवमेतद्ब्रह्मबलं गरीयो
न ब्रह्मतः किञ्चिदन्यद्गरीयः ।
आविक्षितस्येह बलं न मृष्ये
वज्रमस्मै प्रहरिष्यामि घोरम् ॥ १

धृतराष्ट्र गच्छ प्रहितो मरुत्तं
संवर्तेन संहितं तं वदस्व ।
बृहस्पतिं त्वमुपशिक्षस्व राजन्
वज्रं वा ते प्रहरिष्यामि घोरम् ॥ २

व्यासः—
ततो गत्वा धृतराष्ट्रो नरेन्द्रं
प्रोवाचेदं वचनाद् वासवस्य ॥ २॥

धृतराष्ट्रः—
गन्धर्वं मां धृतराष्ट्रं निबोध
त्वामागतं वक्तुकामं नरेन्द्र ।
ऐन्द्रं वाक्यं शृणु मे राजसिंह
यत् प्राह लोकाधिपतिर्महात्मा ॥ ३॥

बृहस्पतिं याजकं त्वं वृणीष्व
वज्रं वा ते प्रहरिष्यामि घोरम् ।
वचश्चेदेतन्न करिष्यसे मे
प्राहैतदेतावदचिन्त्यकर्मा ॥ ४॥

बृहस्पतिं याजयितुं न चेच्छेद्
वज्रं तस्मै प्रहरिष्यामि घोरम् ॥ ५

मरुत्तः—
त्वं चैव तद्वेत्थ पुरुहूतश्च साध्या
विश्वे देवा वसवश्चाश्विनौ च ।

मित्रद्रोहे निष्कृतिर्वै यथेह
नास्तीति लोकेषु सदैव वादः ॥ ६

बृहस्पतिर्याजयिता महेन्द्रं
देवं श्रेष्ठं वज्रभृतां वरिष्ठम् ।
संवर्तो मां याजयिताऽद्य राजन्
न ते वाक्यं तस्य वा रोचयामि ॥ ७

धृतराष्ट्रः—

घोरो नादश्श्रूयते वासवस्य
नभस्तले गर्जतो राजसिंह ।
व्यक्तं वज्रं मोक्ष्यते ते महेन्द्रः
क्षेमं राजंश्चिन्त्यतामेष कालः ॥ ८

व्यासः—

इत्येवमुक्तो धृतराष्ट्रेण राजन्
श्रुत्वा नादं नदतो वासवस्य ।
तपोनित्यं ब्रह्मविदां वरिष्ठं
संवर्तं तं ज्ञापयामास कार्यम् ॥ ९

मरुत्तः—

पश्यात्मानं प्लवमानं त्वमाराद्
[1]अदूरतो देवराजं त्वमद्य ।

---

1. अ-ख-घ—अःवा दूरं तेन न दृश्यतेऽद्य ।

प्रपद्येऽहं शर्म विप्रेन्द्र भूयः
प्रयच्छ तस्मादभयं विप्रमुख्य ॥ १०

अयमायाति वै वज्री दिशो विद्योतयन् दश ।
[1]अमानुषेण नादेन सदस्यान् भीषयन्निव ॥ ११

संवर्तः—

भयं शक्राद्व्येतु ते राजसिंह
प्रणोत्स्येऽहं भयमेतत् सुघोरम् ।
संस्तम्भिन्या विद्यया [2]वज्रमेव
मा भैस्त्वमस्माद्भव चापि प्रतीतः ॥ १२

अहं संस्तम्भयिष्यामि मा भैस्त्वं शक्रतो नृप ।
सर्वेषामेव देवानां क्षपितान्यायुधानि मे ॥ १३

दिशो वज्रं व्रजताद् वायुरेतु
वर्षं भूत्वा वर्षतात् काननेषु ।
आपः प्लवन्त्वन्तरिक्षाद्दृढा च
सौदामिनी विद्यते मा बिभेस्त्वम् ॥ १४

[3]अधो वह्निस्त्रातु वा सर्वशस्ते
कामाद्वर्षं वर्षतु कामतो वा ।

---

1. ख-घ—तस्य सेनानिनादेन सदस्यास्त्रासिता हि मे ।
2. अ-ख-घ—क्षिप्रमेव ।
3. अ-घ—अधो वह्निस्स्थास्यतु सर्वशोऽपि

वज्रं तथा स्थापयिता च वायुः
महाघोरं प्लवमानं जलौघैः ॥ १५

मरुत्तः—
घोरश्शब्दश्श्रूयते वै महास्वनो
वज्रस्यैष संहितो मारुतेन ।
आत्माऽपि मे प्रव्यथते मुहुर्मुहुर्
न मे स्वास्थ्यं जायते ह्यद्य विप्र ॥ १६

संवर्तः—
वज्रादुग्राद्व्येतु भयं तवाद्य
वातो भूत्वा हन्मि नरेन्द्र वज्रम् ।
भयं त्यक्त्वा वरमन्यं वृणीष्व
कं ते कामं तपसा [1]योजयामि ॥ १७

मरुत्तः—
इन्द्रस्साक्षात् [2]सहसाऽभ्येतु विप्र
हविर्विद्वन् प्रतिगृह्णातु चैव ।
स्वं स्वं हविश्चैव जुषन्तु देवास्
सुतं सोमं प्रतिगृह्णन्तु चैव ॥ १८

संवर्तः—
अयमिन्द्रो हरिभिर्याति राजन्
देवैस्सर्वैस्सहितैस्सोमपीथी ।

1. ख-घ—साधयामि । 2. ख-घ—स्वयमागत्य यज्ञे ।

मन्त्राहूतो यज्ञमिमं मयाऽद्य
　　पश्यस्वैनं मन्त्रवित्रस्तकायम् ॥　　१९

व्यासः—
ततो देवैस्सहितो देवराजो
　　रथे युक्त्वा तान् हरीन् वाजिमुख्यान् ।
आयाद्यज्ञमथ राज्ञः पिपासुर्
　　[1]आविक्षितस्याप्रमेयस्य सोमम् ॥　　२०

तमायान्तं सहितं देवसङ्घैः
　　प्रत्युद्ययौ सपुरोधा मरुत्तः ।
चक्रे पूजां देवराजाय चाग्र्यां
　　यथाशास्त्रं विधिवत् प्रीयमाणः ॥　　२१

संवर्तः—
सुस्वागतं ते पुरुहूतेह विद्वन्
　　[2]यज्ञोऽप्ययं सन्निहिते त्वयीन्द्र ।
शोशुभ्यते बलवृत्रघ्न भूयः
　　पिबस्व सोमं [3]सुखमुद्यतं मया ॥　　२२

मरुत्तः—
शिवेन मां पश्य नमश्च तेऽस्तु
　　प्राप्तो यज्ञस्सफलं जीवितं मे ।

1. क—आवीक्षितस्याप्रमेयस्य कामम् ।
2. क—यज्ञश्चायं स्वस्ति हुतस्त्वदिन्द्र ।
3. अ-ख-ब—सुतं मया मरुत्तः ।

अयं यज्ञं कुरुते मे सुरेन्द्र
बृहस्पतेरवरो जन्मना च ॥ २३

इन्द्रः—
जानामि ते गुरुमेतं तपोधनं
बृहस्पतेरनुजं तिग्मतेजसम् ।
[1]यस्याह्वानादागतोऽहं नरेन्द्र
प्रीतिर्मेऽद्य त्वयि मन्युः प्रणष्टः ॥ २४

संवर्तः—
यदि प्रीतस्त्वमसि वै देवराज
तस्मात् स्वयं शाधि यज्ञे विधानम् ।
स्वयं [2]सर्वान् कुरु मार्गान् नरेन्द्र
जानात्वयं सर्वलोकश्च देव ॥ २५

व्यासः—
एवमुक्तस्त्वाङ्गिरसेन शक्रस्
स व्यादिदेश स्वयमेव देवान् ॥ २५॥

इन्द्रः—
सभाः क्रियन्तामावसथाश्च मुख्यास्
सहस्रशश्चित्रभौमास्समृद्धाः ॥ २६

1. क—यस्याभ्याशादागतो मे नरेन्द्र।
2. क—सर्वान् कुरु मूर्तानरेन्द्र जानात्वयं सर्वलोकांश्च।
ख-घ—सर्वान् कुरुवर्गान्।

कृप्तास्स्थूणाः कुरुतारोहणानि
गन्धर्वाणामप्सरसां च शीघ्रम् ।
येषु नृत्यन्त्यप्सरसस्सहस्रशस्
स्वर्गोद्देशः क्रियतां यज्ञवाटः ॥ २७

व्यासः—

इत्युक्तास्ते चक्रुराशु प्रतीता
[1]दिवौकसश्शक्रवाक्यान्नरेन्द्र ।
ततो वाक्यं प्राह [2]राजानमिन्द्रः
प्रीतो राजन् पूजयानो मरुत्तम् ॥ २८

इन्द्रः—

एष त्वाऽहमिह राजन् समेत्य
ये चाप्यन्ये तव पूर्वे नरेन्द्राः ।
सर्वाश्चान्या देवताः प्रीयमाणा
हविस्त्वत्तः प्रतिगृह्णन्तु राजन् ॥ २९
आग्नेयं वै लोहितमालभन्तां
वैश्वदेवं बहुरूपं च राजन् ।
नीलं चोक्षाणं मेध्यमद्यालभन्तां
विलोभ्य च्छित्वा मत्प्रतिष्ठां द्विजेन्द्राः ॥ ३०

---

1. क—दीक्षाकरा । 2. क—राजानमेत्य ।

व्यासः—

ततो यज्ञो ववृधे तस्य राज्ञो
यत्र देवास्स्वयमन्नानि जह्रुः ।
यस्मिन् शक्रो ब्राह्मणैः पूज्यमानस्
सदस्योऽभूद्धरिवान् देवराजः ॥ ३१

ततस्संवर्तश्चित्यगतो महात्मा
यथा वह्निः प्रज्वलितो द्वितीयः ।
हवींष्युच्चैराह्वयन् देवसङ्घान्
जुहावाग्नौ मन्त्रवत् सुप्रणीते ॥ ३२

ततः पीत्वा बलभित् सोममग्र्यं
ये चाप्यन्ये सोमपा वै दिवौकसः ।
सर्वेऽनुज्ञाताः प्रययुः पार्थिवेन
यथाजोषं तर्पिताः प्रीयमाणाः ॥ ३३

ततो राजा जातरूपस्य राशिं
पदे पदे कारयामास हृष्टः ।
[1]द्विजातिभ्यो विसृजन् भूरि वित्तं
रराज वित्तेश इवारिहन्ता ॥ ३४

---

1. क—द्विजातीनां निस्सृजन् ।

ततो वित्तं [1]विधिवत् सन्निधाय

यथोत्साहं कारयित्वा च कोशम् ।

अनुज्ञातो गुरुणा सन्निवृत्त्य

शशास गामखिलां सागरान्ताम् ॥ ३५

एवङ्गुणस्सम्बभूवेह राजा

यस्य क्रतौ तत् सुवर्णं प्रभूतम् ।

तत् त्वं समादाय नरेन्द्र वित्तं

यजस्व देवांस्तपनीयैर्विधानैः ॥ ३६

वैशम्पायनः—

ततो राजा पाण्डवो हृष्टरूपश्

श्रुत्वा वाक्यं सत्यवत्यास्सुतस्य ।

मनश्चक्रे तेन वित्तेन यष्टुं

ततोऽमात्यैर्मन्त्रयामास भूयः ॥ ३७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि दशमोऽध्यायः ॥ १० ॥

॥ ९१ ॥ अश्वमेधपर्वणि दशमोऽध्यायः ॥ १० ॥

[ अस्मिन्नध्याये ३७ श्लोकाः ]

---

1. अ-ख-घ—विविधं ।

## ॥ एकादशोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति शरीरस्थशत्रुजयार्थं इन्द्रवृत्रासुरयुद्धप्रकार-कथनम् ॥ १ ॥

वैशम्पायनः—

इत्युक्ते नृपतौ तस्मिन् व्यासेनाद्भुतकर्मणा ।
वासुदेवो महातेजास् ततो वचनमाददे ॥ १

तं नृपं दीनमनसं निहतज्ञातिपबान्धवम् ।
उपप्लुतमिवादित्यं सधूममिव पावकम् ॥ २

[1]विषण्णमनसं पार्थं ज्ञात्वा वृष्णिकुलोद्वहः ।
आश्वासयन् धर्मसुतं [2]प्रवक्तुमुपचक्रमे ॥ ३

श्रीभगवान्—

सर्वं जिह्मं मृत्युपदम् आर्जवं ब्रह्मणः पदम् ।
एतावान् ज्ञानविषयः किं प्रलापः करिष्यति ॥ ४

नैव तेऽनुष्ठितं कर्म नैव ते शत्रवो जिताः ।
कथं शत्रुं शरीरस्थम् आत्मनो नावबुध्यसे ॥ ५

अत्र ते वर्तयिष्यामि यथाधर्मं यथाश्रुतम् ।
इन्द्रस्य सह वृत्रेण यथा युद्धमवर्तत ॥ ६

वृत्रेण पृथिवी व्याप्ता पुरा किल नराधिप ॥ ६॥

1. ख—निर्विण्ण । 2. ख-घ—ततो वचनमब्रवीत् ।

दृष्ट्वा च पृथिवीं व्याप्तां गन्धस्य विषये हृते ।
धराहरणनिर्गन्धो विषयस्समपद्यत ॥　　७।

[1]शतक्रतुश्चुकोपाथ गन्धस्य विषये हृते ।
वृत्रस्य यततः क्रुद्धो घोरं वज्रमवासृजत् ॥　　८॥

स वध्यमानो वज्रेण सुभृशं भूरितेजसा ।
विवेश सहसाऽम्भांसि जग्राह विषयं ततः ॥　　९॥

व्याप्ते चाम्भसि वृत्रेण रसस्य विषये हृते ।
[2]शतक्रतुरभिक्रुद्धस् तत्र वज्रमवासृजत् ॥　　१०॥

[3]स वध्यमानो वज्रेण सलिले भूरितेजसा ।
विवेश सहसा ज्योतिर् जग्राह विषयं ततः ॥　　११॥

व्याप्ते ज्योतिषि वृत्रेण रूपस्य विषये हृते ।
शतक्रतुरभिक्रुद्धस् तत्र वज्रमवासृजत् ॥　　१२॥

स वध्यमानो वज्रेण सुभृशं भूरितेजसा ।
विवेश सहसा वायुं जग्राह विषयं ततः ॥　　१३॥

व्याप्ते वायौ च वृत्रेण स्पर्शस्य विषये हृते ।
शतक्रतुरभिक्रुद्धस् तत्र वज्रमवासृजत् ॥　　१४॥

स वध्यमानो वज्रेण तस्मिन्नमिततेजसा ।

---

1. ख-घ—शतक्रतुश्च चुक्रोध ।　　2. क—अर्धद्वयं नास्ति ।
3. ख—नास्तीदमर्धम् ।

[1]विवेश सहसाऽऽकाशं जग्राह विषयं ततः ॥ १५॥

आकाशे वृत्रभूतेऽथ शब्दस्य विषये हृते ।
शतक्रतुरभिक्रुद्धस् तत्र वज्रमवासृजत् ॥ १६॥

स वध्यमानो वज्रेण तस्मादमिततेजसा ।
[2]विवेश सहसा शक्रं जग्राह विषयं ततः ॥ १७॥

तस्य वृत्रगृहीतस्य मोहस्सम[3]भवन्महान् ।
रथन्तरेण तं साम्ना वसिष्ठः प्रत्यबोधयत् ॥ १८॥

ततो वृत्रं शरीरस्थं जग्राह भरतर्षभ ।
शतक्रतुरदृश्येन [4]वज्रेणेतीह नश्श्रुतम् ॥ १९॥

इदं धर्मरहस्यं तु शक्रेणोक्तं महर्षिषु ।
ऋषिभिश्च मम प्रोक्तं तन्निबोध नराधिप ॥ २०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आश्वमेधिकपर्वणि एकादशोऽध्यायः ॥ ११ ॥

॥ ९१ ॥ अश्वमेधपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[ अस्मिन्नध्याये २०॥ श्लोकाः ॥

---

1. क-ध—इतश्श्लोकद्वयं नास्ति
2. ख-ध—अभिदुद्राव तं ।
3. ख-ध—भवत् तदा ।
4. क—वज्रेण न्यहनद्भुतम् । ख—वज्रेणेति हि ।

## ॥ द्वादशोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति शारीरमानसभेदेन व्याधेर्द्वैविध्याभिधानपूर्वकं तत्परिहारोपायकथनम् ॥ १ ॥

---

श्रीभगवान्—

द्विविधो जायते व्याधिश् शारीरो मानसस्तथा ।
परस्परं तयोर्जन्म निर्द्वन्द्वं [1]नोपलभ्यते ॥ १

शरीराज्जायते व्याधिश् शारीरो नात्र संशयः ।
मानसो जायते व्याधिः मनस्येवेति निश्चयः ॥ २

शीतोष्णे चैव वायुश्च गुणा राजन् शरीरजाः ।
तेषां गुणानां साम्यं चेत् तदाहुस्स्वस्थलक्षणम् ॥ ३

उष्णेन [2]बाध्यते शीतं शीतेनोष्णं च [2]बाध्यते ॥ ३॥

[3]सत्वं रजस्तमश्चेति त्रयस्त्वात्मगुणास्स्मृताः ।
तेषां गुणानां साम्यं चेत् तदाहुस्स्वस्थलक्षणम् ॥ ४॥

तेषामन्यतमोत्सेके विधानमुपदिश्यते ।
हर्षेण बाध्यते शोको हर्षश्शोकेन बाध्यते ॥ ५॥

कश्चिद्दुःखे वर्तमानस् सुखस्य स्मर्तु[4]मर्हति ।
कश्चित् सुखे वर्तमानो दुःखस्य स्मर्तुमर्हति ॥ ६॥

---

1. क—नोपपद्यते । 2. ख—त्रध्यते ।
3. क—सत्वं रजस्तम इति त्रयस्त्वात्मगुणा मताः
4. ख-घ—मिच्छति । क—मर्हसि ।

स त्वं न दुःखी दुःखस्य न सुखी त्वं सुखस्य च ।
स्मर्तु[1]मर्हसि कौन्तेय दैवं हि बलवत्तरम् ॥ ७॥

अथवा ते स्वभावोऽयं येन पार्थावकृष्यसे ॥ ८

दृष्ट्वा सभागतां कृष्णाम् एकवस्त्रां रजस्वलाम् ।
मिषतां पाण्डवेयानां [2]न तत् संस्मर्तुमर्हसि ॥ ९

प्रव्राजनं च नगराद् अजिनैश्च विवासनम् ।
महारण्यनिवासं च न तस्य स्मर्तुमर्हसि ॥ १०

जटासुरात् परिक्लेशं चित्रसेनेन चाहवम् ।
सैन्धवाच्च परिक्लेशं न तस्य स्मर्तुमिच्छसि ॥ ११

पुनरज्ञातचर्यायां कीचकेन [3]पदा वधम् ।
याज्ञसेन्यास्तथा पार्थ न तस्य स्मर्तुमिच्छसि ॥ १२

यच्च ते द्रोणभीष्माभ्यां युद्धमासीदरिन्दम ।
[4]मनसैकेन बोद्धव्यं तत् ते युद्धमुपस्थितम् ॥ १३

[5]तस्मादभ्युपगन्तव्यं युद्धाय भरतर्षभ ।

---

1. अ-ख-घ—मिच्छसि ।
2. क—स्मर्तुं तत् त्वमिहार्हसि । ख—न तत् संस्मर्तुमिच्छसि ।
3. क—पराभवम् ।
4. क—मन्येऽहं केन योद्धव्यं न ते । ख—मनसैकेन योद्धव्यं ।
5. घ—इतश्श्लोकचतुष्टयं नास्ति । क—अर्धद्वयं नास्ति । ख—अर्धचतुष्टयं नास्ति ।

परमव्यक्तरूपस्य परं युक्त्वा स्वकर्मभिः ॥ १४
[1]यच्च ते वशगैः कार्यं न मित्रैर्न च सैनिकैः ।
आत्मनैकेन [2]कर्तव्यं तत् ते युद्धमुपस्थितम् ॥ १५

तस्मिन्ननिर्जिते युद्धे कामवस्थां गमिष्यसि ।
एतज्ज्ञात्वा तु कौन्तेय कृतकृत्यो भविष्यसि ॥ १६

एतां बुद्धिं विनिश्चित्य भूतानामागतिं गतिम् ।
पितृपैतामहे [3]वृत्ते शाधि राज्यं यथोचितम् ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

॥ ९१ ॥ अश्वमेधपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

[ अस्मिन्नध्याये १७ श्लोकाः ।

---

## ॥ त्रयोदशोऽध्यायः ॥

---

कामस्य शक्तिकथनेन दुर्जयत्वकथनपूर्वकं तज्जयोपायकथनम् ॥ १ ॥

---

श्रीभगवान्—

न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत ।
शारीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा न वा ॥ १

बाह्यद्रव्यविमुक्तस्य शारीरेषु च [4]गृध्यतः ।

---

1. क—यच्च नैव शरैः कार्यं न मित्रैर्न च सैनिकैः।
2. क—योद्धव्यं तत् ते। 3. ख-घ—राज्ये। 4. ख-घ—गृह्यतः।

यो धर्मो यत् सुखं चैव द्विषतामस्तु तत् तव ॥ २

द्व्यक्षरस्तु भवेन्मृत्युस् त्र्यक्षरं [1]ब्रह्म शाश्वतम् ।
ममेति द्व्यक्षरो मृत्युर् न ममेति च शाश्वतम् ॥ ३

जन्ममृत्यू ततो राजन्नात्मन्येव व्यवस्थितौ ।
अदृश्यमानौ भूतानि योधयेतामसंशयम् ॥ ४

अविनाशोऽस्य तत्त्वस्य नियतो यदि भारत ।
[2]हत्वा शरीरं भूतानाम् अहिंसा प्रतिपद्यते ॥ ५

लब्ध्वाऽपि पृथिवीं सर्वां सहस्थावरजङ्गमाम् ।
ममत्वं यस्य नैव स्यात् किं तया स करिष्यति ॥ ६

अथवा वसतः पार्थ वने वन्येन जीवतः ।
ममता यस्य वित्तेषु मृत्योरास्ये स वर्तते ॥ ७

बाह्यान्तराणां शत्रूणां स्वभावं पश्य भारत ।
योऽनुपश्यति तद्भूतं मुच्यते स महाभयात् ॥ ८

कामात्मानं न प्रशंसन्ति [3]सर्वे
न चाकामात् काचिदस्ति प्रवृत्तिः ।
दानं हि वेदाध्ययनं तपश्च
कामेन कर्माणि च वैदिकानि ॥ ९

---

1. अ-क—धर्म । 2. ख-घ—जित्वा ।
3. लोके ।

व्रतं यज्ञान् नियमान् ध्यानयोगान्
कामेन यो नारभते विदित्वा ।
[1]यदव्ययं कामयते स धर्मो
योऽयं धर्मो नियमस्तस्य मूलम् ॥　　१०

अत्र गाथाः कामगीताः कीर्तयन्ति पुराविदः ।
शृणु सङ्कीर्त्यमानास्ता निखिलेन नराधिप ॥　　११

कामः—

नाहं शक्योऽनुपायेन हन्तुं भूतेन केनचित् ॥　　११॥

यो मां प्रयतते हन्तुं ज्ञात्वा प्रहरणे बलम् ।
तस्य तस्मिन् प्रहरणे पुनः प्रादुर्भवाम्यहम् ॥　　१२॥

यो मां प्रयतते हन्तुं यज्ञैर्विविधदक्षिणैः ।
जङ्गमेष्विव कर्मात्मा पुनः प्रादुर्भवाम्यहम् ॥　　१३॥

यो मां प्रयतते हन्तुं वेदैर्वेदाङ्गसाधकैः ।
स्थावरेष्विव शान्तात्मा [2]पुनः प्रादुर्भवाम्यहम् ॥　　१४॥

यो मां प्रयतते हन्तुं धृत्या सत्यपराक्रमः ।
भावो भवामि तस्याहं स च मां नावबुध्यते ॥　　१५॥

यो मां प्रयतते हन्तुं तपसा संशितव्रतः ।
ततस्तपसि तस्याथ पुनः प्रादुर्भवाम्यहम् ॥　　१६॥

---

1. अ—यदप्ययं । क—यदि व्ययं ।　2. ख—तस्य ।

यो मां प्रयतते हन्तुं मोक्षमास्थाय पण्डितः ।
तस्य मोक्षमतिस्थस्य नृत्यामि च हसामि च ॥ १७॥
अवध्यस्सर्वभूतानाम् अहमेकस्सनातनः ॥ १८

श्रीभगवान्—

तस्मात् त्वमपि तं कामं यज्ञैर्विविधदक्षिणैः ।
धर्मे कुरु महाराज तत्र ते न भविष्यति ॥ १९

[1]यजस्व वाजिमेधेन विधिवद्दक्षिणावता ।
अन्यैश्च विविधैर्यज्ञैस् समृद्धैराप्तदक्षिणैः ॥ २०
[2]धर्मं कुरु महाराज तत्र ते न भविष्यति ॥ २०॥

मा ते व्यथा भून्निहतान् बन्धून् वीक्ष्य पुनः पुनः ।
न शक्यास्ते पुनर्द्रष्टुं हता येऽस्मिन् रणाजिरे ॥ २१॥

स त्वमिष्ट्वा महायज्ञैस् समृद्धैराप्तदक्षिणैः ।
लोके कीर्तिं परां प्राप्य गतिमग्र्यां गमिष्यसि ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

॥ ९१ ॥ अश्वमेधपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

[ अस्मिन्नध्याये २२॥ श्लोकाः ]

---

1. क—नास्त्ययं श्लोकः 2. ख-घ—नास्तीदमर्धम्

## ॥ चतुर्दशोऽध्यायः ॥

व्यासनारदकृष्णादिभिर्बन्धुनिधनपरिशोचिनो युधिष्ठिरस्य समाश्वासनेन ऋषीणां तत्रैवान्तर्धानम् ॥ १ ॥ युधिष्ठिरेण भीष्मादीनामौर्ध्वदैहिकं कृत्वा हास्तिननगरप्रवेशः ॥ २ ॥

वैशम्पायनः—

एवं बहुविधैर्वाक्यैर् मुनिभि[1]स्तैस्तपोधनैः ।
समाश्वस्तस्तु राजर्षिर् हतबन्धुर्युधिष्ठिरः ॥ १

सोऽनुनीतो भगवता विष्टरश्रवसा स्वयम् ।
द्वैपायनेन [2]कृष्णेन देवस्थानेन [3]चैव हि ॥ २

नारदेनाथ भीमेन नकुलेन च पार्थिव ।
कृष्णया सहदेवेन विजयेन च धीमता ॥ ३

अन्यैश्च पुरुषव्याघ्रैर् ब्राह्मणैश्शास्त्रदृष्टिभिः ।
व्यजहाच्छोकजं दुःखं सन्तापं चैव मानसम् ॥ ४
अर्चयामास देवांश्च ब्राह्मणांश्च युधिष्ठिरः ॥ ४॥

कृत्वा च प्रेतकार्याणि सर्वेषां कुरुनन्दनः ।
अन्वशासत धर्मात्मा पृथिवीं सागराम्बराम् ॥ ५॥

प्रशान्तचेताः कौरव्यस् स्वराज्यं प्राप्य केवलम् ।

---

1. ख-घ—स्तैर्महात्मभिः । 2. ख-घ—व्यासेन ।
3. क—चाभिभूः । ख—चाभिभो ।

व्यासं च नारदं चैव तांश्चान्यानब्रवीन्नृपः ॥ ६ ॥

युधिष्ठिरः—

आश्वासितोऽहं [1]प्राग्वृद्धैर् भवद्भिर्मुनिपुङ्गवैः ।
न स्तोकमपि नः किञ्चिद् व्यलीकमिह विद्यते ॥ ७ ॥

अर्थश्च सुमहान् प्राप्तो येन यक्ष्यामि देवताः ।
पुरस्कृत्येह भवतस् समानेष्याम्यतो मखम् ॥ ८ ॥

हिमवन्तं त्वया गुप्ता गमिष्यामः पितामह ।
बह्वाश्चर्यो हि देशस्स श्रूयते द्विजसत्तम ॥ ९ ॥

तथा भगवता चित्रं कल्याणं बहु भाषितम् ।
देवर्षिणा नारदेन देवस्थानेन चैव ह ॥ १० ॥

नाभागधेयः पुरुषः कश्चिदेवंविधान् [2]गुरून् ।
लभते व्यसनं प्राप्य सुहृदस्साधुसम्मतान् ॥ ११ ॥

वैशम्पायनः—

एवमुक्तास्तु ते राज्ञा सर्वे एव महर्षयः ।
अभ्यनुज्ञाप्य राजानं तथोभौ कृष्ण[3]फल्गुनौ ॥ १२ ॥

पश्यतामेव सर्वेषां तत्रैवादर्शनं ययुः ॥ १३

ततो धर्मसुतो राजा तत्रैवोपाविशत् प्रभुः ।
एवं नातिमहान् कालस् स तेषामत्यवर्तत ॥ १४

1. क-ख—भगवन् पूर्ववृत्तैर्महर्षिभिः ।
2. क—बहून् । 3. ख-घ—पाण्डवौ ।

कुर्वतां शौचकर्माणि भीष्मस्य निधने तथा ।
महादानानि विप्रेभ्यो ददतामौर्ध्वदैहिकम् ॥ १५

भीष्मकर्णपुरोगाणां कुरूणां कुरुनन्दन ।
सहितो धृतराष्ट्रेण स ददावौर्ध्वदैहिकम् ॥ १६

ततो दत्त्वा बहु धनं विप्रेभ्यः पाण्डुनन्दनः ।
धृतराष्ट्रं पुरस्कृत्य विवेश गजसाह्वयम् ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

॥ ९१ ॥ अश्वमेधपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

[ अस्मिन्नध्याये १७ श्लोकाः ]

---

## ॥ पञ्चदशोऽध्यायः ॥

---

वैशम्पायनेन जनमेजयं प्रति युधिष्ठिरस्य प्रजापालनकाले प्रजादीनामभ्युदयप्रकारवर्णनम् ॥ १ ॥

---

वैशम्पायनः—

स समाश्वास्य पितरं प्रज्ञाचक्षुषमीश्वरम् ।
अन्वशासत धर्मात्मा पृथिवीं भ्रातृभिस्सह ॥ १

यथा मनुर्महाराजो रामो दाशरथिर्यथा ।
तथा भरतसिंहोऽपि पालयामास मेदिनीम् ॥ २

नाधर्म्यमभवत् तत्र सर्वो धर्मरुचिर्जनः ।
बभूव नरशार्दूल यथा कृतयुगे तथा ॥ ३

कलिमासन्नमाविष्टं [1]निवार्य नृपनन्दनः ।
भ्रातृभिस्सहितो धीमान् [2]बभौ धर्मबलोद्धतः ॥ ४

ववर्ष भगवान् देवः काले देशे [3]यथेप्सितम् ।
निरामयं जगद्भूत् क्षुत्पिपासे न किञ्चन ॥ ५

आधिर्नास्ति मनुष्याणां व्यसने नाभवन्मतिः ।
ब्राह्मणप्रमुखा वर्णास् ते स्वधर्मोत्तरा[4]श्शिवाः ॥ ६

धर्मस्सत्यप्रधानश्च सत्यं सद्विषयान्वितम् ॥ ६॥
[5]धर्मासनस्थस्सद्भिस्स स्त्रीबालातुरवृद्धकान् ।
[6]वर्णाश्रमान् पूर्वकृतान् सकलान् रक्षणोद्यतः ॥ ७॥

अवृत्तिवृत्तिदानाद्यैर् [7]यज्ञार्थैर्दापितैरपि ।
आमुष्मिकं भयं नास्ति ऐहिकं कृतमेव तु ॥ ८॥

स्वर्गलोकोपमो लोकस् तदा तस्मिन् प्रशासति ।
बभूव सुखमेकाग्रं तद्विशिष्टतरं परम् ॥ ९॥

---

1. ख—निवार्य । 2. ख-ब—ययौ ।
3. ख-व—यथाविधि । 4. क—शुभाः ।
5. अ—नास्तीदमधर्म्
6. ख—वर्णश्रमान् पूर्वकृतान् नाकाले रक्षणोद्यतः ।
7. अ-क—यज्ञाद्यैर्याधितैरपि ।

नार्यः पतिव्रतास्सर्वा रूपवत्यस्स्वलङ्कृताः ।
यथोक्तवृत्तास्स्वगुणैर् बभूवुः प्रीतिहेतवः ॥ १०॥

पुमांसः पुण्यशीलाढ्यास् स्वं स्वं धर्ममनुव्रताः ।
सुखिनस्सूक्ष्ममप्येनो न कुर्वन्ति कदाचन ॥ ११॥

सर्वे नराश्च नार्यश्च सततं प्रियवादिनः ।
अजिह्ममनसश्शुक्ला बभूवुश्श्रमवर्जिताः ॥ १२॥

भूषिताः कुण्डलैर्हारैः कटकैः कटिसूत्रकैः ।
सुवाससस्सुगन्धाढ्याः प्रायशः पृथिवीतले ॥ १३॥

सर्वे ब्रह्मविदो विप्रास् सर्वत्र परिनिष्ठिताः ।
वलीपलितहीनास्तु सुखिनो दीर्घ[1]जीविनः ॥ १४॥

इच्छा न जायतेऽन्यत्र वर्णेषु च न सङ्करः ।
मनुष्याणां महाराज मर्यादासु व्यवस्थिताः ॥ १५॥

तस्मिन् शासति राजेन्द्रे मृगव्यालसरीसृपाः ।
अन्योन्यमपि चान्येषु न बाधन्ते कदाचन ॥ १६॥

[2]गावस्सुक्षीरभूयिष्ठास् सुवालधिमुखोदराः ।
अपीडिताः कर्षकाद्यैर् हृतव्याधितवत्सकाः ॥ १७॥

अवन्ध्यकाला मनुजाः पुरुषार्थेषु च क्रमात् ।
विषयेष्वनिषिद्धेषु वेदशास्त्रेषु चोद्यताः ॥ १८॥

---

1. क—दर्शिनः 2. अ—नास्तीदमर्धम्

सुवृत्ता वृषभाः पुष्टास् सुस्वभावास्सुखोदयाः ॥ १९

अतीव मधुरश्शब्दस् स्पर्शश्चातिसुखं रसम् ।
रूपं दृष्टिक्षमं रम्यं मनोज्ञं गन्धवद्बभौ ॥ २०

धर्मार्थकामसंयुक्तं मोक्षाभ्युदयसाधनम् ।
प्रह्लादजननं पुण्यं सम्बभूवाथ मानसम् ॥ २१

स्थावरा बहुपुष्पाढ्याः फलच्छायावहास्तथा ।
सुस्पर्शा विषहीनाश्च सुपत्रत्वक्प्ररोहिणः ॥ २२

मनोनुकूलास्सर्वेषां चेष्टा भूतापवर्जिताः ।
तथा बभूव राजर्षिस् तद्वृत्तमभवद्भुवि ॥ २३

सर्वलक्षणसम्पन्नाः पाण्डवा धर्मचारिणः ।
ज्येष्ठानुवर्तिनस्सर्वे बभूवुः प्रियदर्शनाः ॥ २४

सिंहोरस्का जितक्रोधास् तेजोबलसमन्विताः ।
आजानुबाहवस्सर्वे दानशीला जितेन्द्रियाः ॥ २५

तेषु शासत्सु धरणीम् ऋतवस्स्वगुणैर्बभुः ।
सुखोदयाय वर्तन्ते ग्रहास्तारागणैस्सह ॥ २६

मही सस्यप्रवहुला सर्वरत्नगुणोदया ।
कामधुग्धेनुवद्भोगान् फलति स्म सहस्रधा ॥ २७

मन्वादिभिः कृताः पूर्वं मर्यादा मानवेषु याः ॥ २७॥

[1]अनतिक्रम्य तास्सर्वाः कुलेषु समयानि च ।
अन्वशासन्त राजानो धर्मपुत्रप्रियङ्कराः ॥ २८॥

महाकुलानि धर्मिष्ठा वर्धयन्तो विशेषतः ।
मनुप्रणीतया वृत्त्या तेऽन्वशासन् वसुन्धराम् ॥ २९॥

राजवृत्तिर्हि सा शश्वद् धर्मिष्ठाऽभून्महीतले ।
प्रायो लोकमतिस्तात राजवृत्तानुगामिनी ॥ ३०॥

एवं भरतवर्षं स्वं राजा स्वर्गे सुरेन्द्रवत् ।
शशास विष्णुना सार्धं गुप्तो गाण्डीवधन्वना ॥ ३१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

॥ ९१ ॥ अश्वमेधपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

[ अस्मिन्नध्याये ३१॥ श्लोकाः ]

---

## ॥ षोडशोऽध्यायः ॥

वैशम्पायनेन कुरुविजयानन्तरं हास्तिनपुरे कृष्णार्जुनविहारप्रकारवर्णनम् ॥१॥ कृष्णेनार्जुनं प्रति युधिष्ठिरे स्वस्य निजनगरजिगमिषानिवेदनचोदना ॥ २ ॥

---

जनमेजयः—

विजिते पाण्डवेयैस्तु प्रशान्ते च द्विजोत्तम ।
राष्ट्रे किं चक्रतुर्वीरौ वासुदेवधनञ्जयौ ॥ १

---

1. ख-ध—इतश्श्लोकद्वयं नास्ति

वैशम्पायनः—

[1]विजिते पाण्डवै राजन् प्रशान्ते च विशाम्पतौ ।
राष्ट्रे बभूवतुर्हृष्टौ वासुदेवधनञ्जयौ ॥ २

विजह्राते मुदा युक्तौ दिवि देवेश्वराविव ॥ २॥

तौ वनेषु विचित्रेषु पर्वतानां च सानुषु ।
शैलेषु [2]गह्वरारण्ये पल्वलेषु नदीषु च ॥ ३॥

चङ्क्रम्यमाणौ संहृष्टावश्विनाविव नन्दने ।
इन्द्रप्रस्थे महात्मानौ रेमाते कृष्णपाण्डवौ ॥ ४॥

प्रविश्य तां सभां रम्यां विजह्राते च भारत ॥ ५

तत्र युद्धकथाश्चित्राः परिक्लेशांश्च भारत ।
कथायोगे कथायोगे कथयामासतुस्सदा ॥ ६

[3]ऋषीणां देवतानां च वंशान् व्याहरतां तदा ।
प्रीयमाणौ महात्मानौ पुराणावृषिसत्तमौ ॥ ७

मधुरास्तु कथाश्चित्राश्चित्रार्थपदनिश्चयाः ।
निश्चयज्ञस्स पार्थाय कथयामास केशवः ॥ ८

पुत्रशोकाभिसन्तप्तं ज्ञातीनां च सहस्रशः ।
कथाभिश्शमयामास पार्थं शौरिर्जनार्दनः ॥ ९

---

1. अ-घ—अर्धद्वयं न दृश्यते
2. ख-घ—रमणीयेषु । क—च रम्येषु ।
3. घ—नास्तीदमर्धम्

स तमाश्वास्य विधिवद् विधानज्ञो महातपाः ।
अपहृत्यात्मनो भारं विशश्राम ससात्वतः ॥ १०

ततः कथान्ते गोविन्दो गुडाकेशमुवाच ह ।
सान्त्वयन् श्लक्ष्णया वाचा हेतुयुक्तमिदं वचः ॥ ११

**श्रीभगवान्—**

विजितेयं धरा कृत्स्ना सव्यसाचिन् परन्तप ।
त्वद्बाहुबलमाश्रित्य राज्ञा धर्मसुतेन ह ॥ १२

असपत्नां महीं भुङ्क्ते धर्मराजो युधिष्ठिरः ।
भीमसेनप्रतापेन यमयोश्च नरोत्तम ॥ १३

धर्मेण राज्ञा धर्मज्ञ प्राप्तं राज्यमकण्टकम् ।
धर्मेण निहतस्सङ्ख्ये स च राजा सुयोधनः ॥ १४

अधर्मरुचयो लुब्धास् सदा चाप्रियवादिनः ।
धार्तराष्ट्रा दुरात्मानस् सानुबन्धा निपातिताः ॥ १५

प्रशान्तामखिलां पार्थ पृथिवीं पृथिवीपतिः ।
भुङ्क्ते धर्मसुतो राजा त्वया गुप्तः कुरूद्वह ॥ १६

रमे चाहं त्वया सार्धम् अरण्येष्विह पाण्डव ।
किमु यत्र जनोऽयं वै पृथा चामित्रकर्शन ॥ १७

यत्र धर्मसुतो राजा यत्र भीमो महाबलः ।
यत्र माद्रवतीपुत्रौ रतिस्तत्र परा मम ॥ १८

तथैव स्वर्ग[1]कल्पेषु सभोद्देशेषु भारत ।
रमणीयेषु पुण्येषु सहितस्य त्वयाऽनघ ॥ १९

कालो महांस्त्वतीतो मे शूरपुत्रमपश्यतः ।
बलदेवं च कौरव्य तथाऽन्यान् वृष्णिपुङ्गवान् ॥ २०

सोऽहं गन्तुमभीप्सामि पुरीं द्वारवतीं प्रति ।
रोचतां गमनं तुभ्यं ममापि भरतर्षभ ॥ २१

उक्तो बहुविधं राजा तत्र तत्र युधिष्ठिरः ।
सह भीष्मेण यद्युक्तम् अस्माभिश्शोककर्शितः ॥ २२

शिष्टो युधिष्ठिरोऽस्माभिश् शास्ता सन्नपि पाण्डवः ।
तेन तच्च वचस्सम्यग् गृहीतं सुमहात्मना ॥ २३

धर्मपुत्रे हि धर्मज्ञे कृतज्ञे सत्यवादिनि ।
सत्यं धर्मो मतिश्चाग्र्या स्थितिश्च सततं स्थितौ ॥ २४

तद्गत्वा तं महात्मानं यदि ते रोचतेऽर्जुन ।
अस्मद्गमनसंयुक्तं वचो ब्रूहि जनाधिपम् ॥ २५

न हि तस्याप्रियं कुर्यां प्राणत्यागेऽप्युपस्थिते ।
कुतो गन्तुं महाबाहो पुरीं द्वारवतीं प्रति ॥ २६

सर्वमेतदहं पार्थ त्वत्प्रीतिहितकाम्यया ।
ब्रवीमि सत्यं कौरव्य न मिथ्यैतत् कथञ्चन ॥ २७

1. क—लोकेषु सल्लोकेषु च भारत ।

[1]प्रयोजनं च निर्वृत्तम् इह वासेन मेऽर्जुन ।
[2]धार्तराष्ट्रो हतो राजा सबलस्सपदानुगः ॥ २८

पृथिवी च वशे तात धर्मपुत्रस्य धीमतः ।
स्थिता समुद्रवसना सशैलवनकानना ॥ २९
[3]चिता रत्नैर्बहुविधैः कुरुराजस्य पाण्डव ॥ २९॥
धर्मेण राजा धर्मज्ञः पातु सर्वां वसुन्धराम् ।
उपास्यमानो मुनिभिस् सिद्धैश्चापि महात्मभिः ॥ ३०॥
संस्तूयमानस्सततं वन्दिभिर्भरतर्षभ ॥ ३१
त्वं मया सह गत्वाऽद्य राजानं कुरुवर्धनम् ।
आपृच्छ कुरुशार्दूलं गमनं द्वारकां प्रति ॥ ३२

इदं शरीरं वसु यच्च मे गृहे
निवेदितं पार्थ सदा युधिष्ठिरे ।
प्रियश्च मान्यश्च हि मे युधिष्ठिरस्
सदा कुरूणामधिपो महामतिः ॥ ३३

प्रयोजनं चापि विवासकारणे
न विद्यते मे त्वदृते महाभुजे ।
स्थिता हि पृथ्वी तव पार्थ शासने
गुरोस्सुवृत्तस्य युधिष्ठिरस्य हि ॥ ३४

---

1. अ—इदमर्धं न दृश्यते 2. क—धर्मेण राजा धर्मज्ञस् सबल ।
3. क—धार्तराष्ट्रो हतो राजा सबलस्सपदानुगः । (अधिकः पाठः)

इतीदमुक्तस्स तदा महात्मना
जनार्दनेनामितविक्रमोऽर्जुनः ।
तथेति कृच्छ्रादिव वाचमीरयन्
जनार्दनं सम्प्रतिपूज्य पार्थिवः ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि षोडशोऽध्यायः ॥ १६ ॥
॥ ९१ ॥ अश्वमेधपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[ अस्मिन्नध्याये ३५ श्लोकाः ]
[ अश्वमेधपर्वं समाप्तम् ]

---

## ॥ सप्तदशोऽध्यायः ॥

---

[ अनुगीतापर्व ]

अर्जुनेन कृष्णं प्रति पूर्वोपदिष्टगीतार्थस्य विस्मरणोक्त्या पुनस्तदुपदेशप्रार्थना ॥ १ ॥ कृष्णेनार्जुनं प्रति स्वस्मै ब्राह्मणोक्तसिद्धकाश्यपसंवादानुवादः ॥ २ ॥

---

जनमेजयः—

सभायां वसतोस्तस्यां निहत्यारीन् महात्मनोः ।
केशवार्जुनयोः का नु कथा समभवद् द्विज ॥ १

वैशम्पायनः—

कृष्णेन सहितः पार्थस् स्वराज्यं प्राप्य केवलम् ।
तस्यां सभायां रम्यायां विजहार मुदा युतः ॥ २

ततः कश्चित् सभोद्देशं स्वर्गोद्देशोपमं नृप ।
यदृच्छया तौ मुदितौ जग्मतुस्स्वजनावृतौ ॥ ३

तत्र प्रतीतः कृष्णेन सहितः पाण्डवोऽर्जुनः ।
निरीक्ष्य तां सभां रम्याम् इदं वचनमब्रवीत् ॥ ४

अर्जुनः—

विदितं मे महाबाहो सङ्ग्रामे समुपस्थिते ।
माहात्म्यं देवकी[1]पुत्र तच्च ते रूपमैश्वरम् ॥ ५

यत्तु तद्भवता प्रोक्तं तदा केशव सौहृदात् ।
तत् सर्वं पुरुषव्याघ्र नष्टं मे व्यग्रचेतसः ॥ ६

मम कौतूहलं त्वस्ति तेष्वर्थेषु पुनः प्रभो ।
भवांस्तु द्वारकां गन्ता न चिरादिव केशव ॥ ७

वैशम्पायनः—

एवमुक्तस्ततः कृष्णः फल्गुनं प्रत्यभाषत ।
परिष्वज्य महातेजा वचनं वदतां वरः ॥ ८

श्रीभगवान्—

श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम् ।
धर्मस्वरूपिणं पार्थ सर्वलोकांश्च शाश्वतान् ॥ ९

अबुद्ध्या यन्न गृह्णीथास् तन्मे सुमहदप्रियम् ।
नूनमश्रद्दधानोऽसि दुर्मेधाश्चासि पाण्डव ॥ १०

---

1: अ-ख-ब—मातस् ।

स हि धर्मस्सुपर्याप्तो ब्रह्मणः पदवेदने ।
न शक्यं तन्मया भूयस् तथा वक्तुमशेषतः ॥ ११

परं हि ब्रह्म कथितं योगयुक्तेन तन्मया ।
इतिहासं तु वक्ष्यामि तस्मिन्नर्थे पुरातनम् ॥ १२

[1]यथा तां बुद्धिमास्थाय गतिमग्र्यां गमिष्यसि ।
शृणु धर्मभृतां श्रेष्ठ गदतस्सर्वमेव मे ॥ १३

आगच्छद्ब्राह्मणः कश्चित् स्वर्गलोकादरिन्दम ।
ब्रह्मलोकाच्च दुर्धर्षस् सोऽस्माभिः पूजितोऽवसत् ॥ १४

परिपृष्टश्च स तदा यदाह द्विजसत्तमः ।
दिव्येन विधिना पार्थ तच्छृणुष्वाविचारयन् ॥ १५

ब्राह्मणः—

मोक्षधर्मं समाश्रित्य कृष्ण यन्माऽनुपृच्छसि ।
भूतानामनुकम्पार्थं [2]यन्मोहच्छेदनं प्रभो ॥ १६

तत् तेऽहं सम्प्रवक्ष्यामि [3]यथावन्मधुसूदन ।
शृणुष्वावहितो भूत्वा गदतो मम माधव ॥ १७

कश्चिद्विप्रस्तपोयुक्तः काश्यपो [4]नाम धर्मवित् ।

---

1. अ—इदमर्धं न दृश्यते
2. ख–घ—यन्मोहच्छेदकारकम्। क—यन्मोहावेदनं प्रभो।
3. घ—यन्मोहच्छेदकारणम्। ख—यन्मोहच्छेदकं प्रभो।
4. ख–घ—धर्मवित्तमः।

आससाद द्विजं कञ्चिद् [1]धर्माणामागमागमम् ॥　　१८

गतागमं सुबहुशो ज्ञानविज्ञानपारगम् ।
लोकतत्त्वार्थकुशलं ज्ञातारं सुखदुःखयोः ॥　　१९

जातिस्मरणतत्त्वज्ञं कोविदं पापपुण्ययोः ।
द्रष्टारमुच्चनीचानां कर्मभिर्देहिनां गतिम् ॥　　२०

चरन्तं मुक्तवत् सिद्धं प्रशान्तं संयतेन्द्रियम् ।
दीप्यमानं श्रिया ब्राह्मया क्रममाणं च सर्वशः ॥　　२१

अन्तर्धानगतिज्ञं च श्रुत्वा तत्त्वेन काश्यपः ।
तथैवान्तर्हितैस्सिद्धैर् यान्तं चानुचरैस्सह ॥　　२२

सम्भाषमाणमेकान्ते समासीनं च तैस्सह ।
यदृच्छया च गच्छन्तम् असक्तं पवनं यथा ॥　　२३

तं समासाद्य मेधावी स तदा द्विजसत्तमः ।

चरणौ धर्मकामो वै स तस्य सुसमाहितः ॥　　२४
प्रतिपेदे यथान्यायं भक्त्या परमया युतः ॥　　२४॥

विस्मितश्चाद्भुतं दृष्ट्वा काश्यपस्तं द्विजोत्तमम् ।
[2]परिचारेण महता गुरुं वै पर्यतोषयत् ॥　　२५॥

---

1. घ—धर्मात्मानं गतागमम्। क—धर्माणामागमं गतम्।
   ख—धर्माणामागतागमम्।
2. ख-घ—अर्धमिदं नास्ति।

[1]उपसन्नश्च धर्मात्मा श्रुतचारित्रसंयुतः ।
भावेनातोषयत् तं वै गुरुवृत्तिं [2]समाश्रितः ॥ २६॥

तस्मै तुष्टस्स शिष्याय यत् प्रसन्नोऽब्रवीद्गुरुः ।
सिद्धिं परामभिप्रेक्ष्य शृणु तन्मे जनार्दन ॥ २७॥

सिद्धः—
विविधैः कर्मभिस्तात पुण्ययोगैश्च केवलैः ।
गच्छन्तीह गतिं मर्त्या [3]देवलोके च वा स्थितिम् ॥ २८॥

न क्वचित् सुखमत्यन्तं न क्वचिच्छाश्वती स्थितिः ।
स्थानाच्च महतो भ्रंशो दुःखलब्धात् पुनः पुनः ॥ २९॥

अशुभा गतयः प्राप्ताः [4]कष्टा मे पापसेवनात् ।
काममन्युपरीतेन तृष्णया मोहितेन च ॥ ३०॥

पुनः पुनश्च मरणं जन्म चैव पुनः पुनः ।
आहारा विविधा भुक्ताः पीता नानाविधास्स्तनाः ॥ ३१॥

मातरो विविधा दृष्टाः पितरश्च पृथग्विधाः ।
सुखानि च विचित्राणि दुःखानि च मयाऽनघ ॥ ३२॥

प्रियैर्विवासो बहुशस् संवासश्चाप्रियैस्सह ।

---

1. ख-घ—उपसन्नश्च तुष्टात्मा श्रुत्वा चारित्रसंयुतः ।
   क—स प्रसन्नश्च धर्मात्मा श्रुतचारित्रसंयुतः ।
2. ख-घ—समास्थितः । क—भौमेनातोषयत्तं वै गुरुवृत्तिं समास्थितः ।
3. ख-घ—इह लोकेऽपि च स्थितम् ।
4. ख-घ—दुष्टा । क—कष्टं मे ।

धननाशश्च सम्प्राप्तो [1]लब्ध्वा दुःखेन तद्धनम् ॥ ३३॥

अवमानास्सुकष्टाश्च परतस्स्वजनात् तथा ।
शारीरा मानसाश्चापि वेदना [2]भृशदारुणाः ॥ ३४॥

[3]प्राप्ता विमाननाश्चोग्रा वधं बन्धाश्च दारुणाः ।
पतनं निरये चैव यातनाश्च यमक्षये ॥ ३५॥

जरा रोगाश्च सततं व्यसनानि च भूरिशः ।
लोकेऽस्मिन्ननुभूतानि द्वन्द्वजानि भृशं मया ॥ ३६॥

[4]ततः कदाचिन्निर्वेदान्निकारान्निकृतेन च ।
लोकतन्त्वं परित्यक्तं दुःखार्तेन भृशं मया ॥ ३७॥

ततस्सिद्धिरियं प्राप्ता प्रसादादात्मनो मया ॥ ३८

नाहं पुनरिहागन्ता लोकानालोकयाम्यहम् ॥ ३८॥

[5]आसिद्धेराप्रजासर्गाद् आत्मनोऽपि गतीश्शुभाः ।
उपलब्धा द्विजश्रेष्ठ तथेयं सिद्धिरुत्तमा ॥ ३९॥

इतः परं गमिष्यामि ततः परतरं महत् ।
ब्रह्मणः पदमव्यग्रं मा तेऽभूदत्र संशयः ॥ ४०॥

नाहं पुनरिहागन्ता मर्त्यलोकं द्विजोत्तम ।
प्रीतोऽस्मि ते महा[6]प्राज्ञ ब्रूहि किं करवाणि ते ॥ ४१॥

---

1. अ-क—लब्धं । 2. क—बहु ।
3. क—इदमर्धं नास्ति । 4. अ—अर्धद्वयं न दृश्यते ।
5. अ—अर्धद्वयं नोपलभ्यते । 6. अ-क—ब्रह्मन् ।

[1]यदीप्सुरुपसम्पन्नं तस्य कालोऽयमागतः ।
अभिजाने च तदहं [2]यदर्थं मां त्वमागतः ॥ ४२॥

[3]अचिरात्तु गमिष्यामि येनाहं त्वामचूचुदम् ॥ ४३

भृशं प्रीतोऽस्मि भवतश् चारित्रेऽथ विचक्षण ।
परिपृच्छ यावद्भवतो भाषे यद्यत् तवेप्सितम् ॥ ४४

बहु मन्ये च बुद्धिं ते भृशं सम्पूजयामि च ।
येनाहं भवता बुद्धो मेधावी ह्यसि काश्यप ॥ ४५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
॥ ९२ ॥ अनुगीतापर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये ४५ श्लोकाः ]

## ॥ अष्टादशोऽध्यायः ॥

ब्राह्मणेन कृष्णं प्रति प्राणिनां जननमरणादिप्रतिपादकसिद्धकाश्यपसंवादानुवादः ॥ १ ॥

ब्राह्मणः—

ततस्तस्योपसङ्गृह्य पादौ [4]स द्विजसत्तमः ।
[5]प्रश्नांश्चैतान् स धर्मात्मा प्राह धर्मभृतां वरः ॥ १

---

1. घ—यदीप्सुरिह सम्प्राप्तः । क-ख—यदीप्सुरुपसम्पन्नः ।
2. घ—येनाहं त्वामचूचुदम् ।
3. घ—अर्धमिदं नास्ति ख—अचिराच्च गमिष्येऽहं ।
4. ख-घ—प्रश्नान् सुदुर्वचान् । 5. ख-घ—पप्रच्छ तांश्च सर्वान् वै ।

काश्यपः—

कथं शरीराच्च्यवते कथं चैवोपपद्यते ।
[1]कथं कष्टाच्च संसारात् संसारी परिमुच्यते ॥ २

आत्मानं वा कथं युक्तं तच्छरीरं विमुच्यते ।
शरीरे तच्च निर्मुक्तो कथमन्यत् प्रपद्यते ॥ ३

कथं शुभाशुभे चायं [2]कर्मणी स्वकृते नरः ।
उपभुङ्क्ते क वा कर्म विदेहस्योपतिष्ठति ॥ ४

ब्राह्मणः—

एवं सञ्चोदितस्सिद्धः प्रश्नांस्तान् प्रत्यभाषत ।
आनुपूर्व्येण वार्ष्णेय [3]यथा तन्मे वचश्शृणु ॥ ५

सिद्धः—

अस्मिन्नेवाशु फलदा आयुष्यास्तु क्रियास्स्मृताः ।
आयुःकृत्यकराणीह यानि कर्माणि सेवते ॥ ६

शरीरग्रहणेऽन्यस्मिंस् तेषु क्षीणेषु सर्वशः ।
आयुःक्षयपरीतात्मा विपरीतानि सेवते ॥ ७

बुद्धिर्व्यावर्तते चास्य विनाशे प्रत्युपस्थिते ॥ ७॥

सत्त्वं बलं च [4]कालं चाप्यविदित्वाऽऽत्मनस्तथा ।
अतिवेलमुपाश्नाति तैर्विरुद्धान्यनात्मवान् ॥ ८॥

---

1. घ—इतः अर्धत्रयं नास्ति
2. ख-घ—कर्माणि कुरुते नरः ।
3. ख-घ—यथावत्ते तथा शृणु ।
4. ख-घ—कार्यं च ।

यदाऽयमतिकष्टानि सर्वाण्युपनिषेवते ।
अत्यर्थमपि वा भुङ्क्ते न वा भुङ्क्ते कदाचन ॥ ९॥

दुष्टान्नं विषमान्नं वा [1]सात्वतेन विरोधि च ।
गुरु वाऽपि समं भुङ्क्ते नातिजीर्णेऽपि वा पुनः ॥ १०॥

व्यायाममतिमात्रं च व्यवायं वोपसेवते ।
सततं कर्मलोभाद्वा प्राप्तवेगविधारणम् ॥ ११॥

रसानुयुक्तमन्नं वा दिवा स्वप्नं निषेवते ।
अपक्वान्नं गते काले स्वयं दोषान् प्रकोपयेत् ॥ १२॥

स्वदोषकोपनाद्रोगं लभते मरणान्तिकम् ॥ १३

अथ चेद्बन्धनादीनि परीतानि व्यवस्यति ।
तस्य तैः कारणैर्जन्तोश् शरीराच्च्यवते यथा ॥ १४

जीवितं प्रोच्यमानं तद् यथावदुपधारय ॥ १४॥

ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः ।
शरीरमनुपर्येत्य सर्वान् प्राणान् रुणद्धि च ॥ १५॥

अत्यर्थं बलवानूष्मा शरीरे परिकोपितः ।
भिनत्ति [2]जीवस्थानानि तानि मर्माणि विद्धि च ॥ १६॥

ततस्सवेदनस्सद्यो जीवः प्रच्यवते क्षरन् ।
शरीरं त्यजते जन्तुश् छिद्यमानेषु मर्मसु ॥ १७॥

---

1. घ—सातत्येन । क—सान्तत्येन ।
2. ख-घ—कोपस्थानानि । क—हिनस्ति जीवस्थानानि ।

वेदनाभिः परीतात्मा तद्विद्धि द्विजसत्तम ॥ १८

जन्ममरणसंविग्नास् सततं सर्वजन्तवः ।
दृश्यन्ते सन्त्यजन्तश्च शरीराणि द्विजर्षभ ॥ १९

गर्भसङ्क्रमणे चापि गर्भाणामपसर्पणे ।
तादृशीमेव लभते वेदनां मानवः पुनः ॥ २०

भिन्नसन्धिरथ क्लेदम् अद्भिस्स लभते नरः ॥ २०॥

यथा पञ्चसु भूतेषु संश्रितत्वं निगच्छति ।
श्लेष्मा प्रकुपितः काये तीव्रवायुसमीरितः ॥ २१॥

यस्य पञ्चसु भूतेषु प्राणापानौ व्यवस्थितौ ।
स गच्छत्यूर्ध्वगो वायुः कृच्छ्रान्मुक्त्वा शरीरिणम् ॥ २२॥
शरीरं च जहात्येव निरुच्छ्वासश्च दृश्यते ॥ २३

स निरूष्मा निरुच्छ्वासो निश्श्रीको गतचेतनः ।
कर्मणा सम्परित्यक्तो मृत इत्युच्यते नरः ॥ २४

स्रोतोभिर्यैर्विजानाति त्विन्द्रियार्थाञ् शरीरभृत् ।
तैरेव नाभिजानाति प्राणमाहारसम्भवम् ॥ २५
तत्रैव कुरुते काये यस्स जीवन् सनातनः ॥ २५॥

तेषां यद्यद्भवेन्मुक्तं सन्निपाते क्वचित् क्वचित् ।
तत्तन्मर्म विजानीहि शास्त्रदृष्टं हि तत् तथा ॥ २६॥
तेषु मर्मसु भिन्नेषु ततस्स समुदीरयन् ।

आविश्य हृदयं जन्तोस् सत्त्वं चाशु रुणद्धि वै ॥ २७॥

ततस्सचेतनो धातुर् नाभिजानाति किञ्चन ॥ २८

तमसा संवृतज्ञानस् संवृतेष्वथ मर्मसु ।
स जीवो निराधिष्ठानश् चाल्यते मातरिश्वना ॥ २९

ततस्स तं महोच्छ्वासं भृशमुच्छ्वस्य दारुणम् ।
निष्क्रामन् कम्पयत्याशु तच्छरीरमचेतनम् ॥ ३०

स जीवः प्रच्युतः कायात् कर्मभिस्स्वैस्समावृतः ।
अङ्कितस्स्वैश्शुभैः पुण्यैः पापैर्वाऽप्युपपद्यते ॥ ३१

ब्राह्मणा ज्ञानसम्पन्ना यथाव[1]च्छ्रुतनिश्चयाः ।
इतरं कृतपुण्यं वा तं विजानन्ति लक्षणैः ॥ ३२

यथाऽन्धकारे खद्योतं दीप्यमानं ततस्ततः ।
चक्षुष्मन्तः प्रपश्यन्ति तथा तं ज्ञानचक्षुषः ॥ ३३

पश्यन्त्येवंविधास्सिद्धा जीवं दिव्येन चक्षुषा ।
क्षरन्तं जायमानं च योनिं चानुप्रवेशितम् ॥ ३४

तस्य स्थानानि दृष्टानि [2]विविधानीह शास्त्रतः ।
कर्मभूमिरियं भूमिर् यत्र तिष्ठन्ति जन्तवः ॥ ३५

इतश्शुभाशुभं कृत्वा लभन्ते [3]कर्म देहिनः ।
इहैवोच्चावचान् भोगान् प्राप्नुवन्ति स्वकर्मभिः ॥ ३६

---

1. ख—च्छुद्ध । क—च्छ्रुति ।

2. ख-घ—स्त्रिविधानीह ।  3. ख-घ—सर्वं ।

इहैवाशुभकर्मा तु कर्मभिर्निरयं गतः ।
[1]अवाक् स निरये पापो मानवः पात्यते भृशम् ॥　　३७
तस्मात् सुदुर्लभो मोक्ष आत्मा रक्ष्यो भृशं ततः ॥　　३७॥
ऊर्ध्वं तु जन्तवो गत्वा येषु स्थानेष्ववस्थिताः ।
कीर्त्यमानानि तानीह तत्त्वतस्सन्निबोध मे ॥　　३८॥
तच्छ्रुत्वा नैष्ठिकीं बुद्धिं बुद्ध्येथाः कर्मनिश्चयात् ॥　　३९
[2]ताराख्पाणि सर्वाणि यत्रैतच्चन्द्रमण्डलम् ।
[3]यत्र विभ्राजते लोके स्वभासा सूर्यमण्डलम् ॥　　४०
स्थानान्येतानि जानीहि नराणां पुण्यकर्मणाम् ॥　　४०॥
कर्मक्षयाच्च तेभ्यो हि च्यवन्ते वै पुनः पुनः ।
तत्रापि च विशेषोऽस्ति दिवि नीचोच्चमध्यमः ॥　　४१॥
न तत्राप्यस्ति सन्तोषो दृष्ट्वा दीप्तां परश्रियम् ।
इत्येता गतयस्सर्वा [4]पृथक् ते समुदीरिताः ॥　　४२॥
उपपत्तिं तु गर्भस्य वक्ष्याम्यहमतः परम् ।
यथावत् तां निगदतश् शृणुष्वावहितो द्विज ॥　　४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आश्वमेधिकपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
॥ ९२ ॥ अनुगीतापर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ४३॥ श्लोकाः ]

---

1. घ—अवाक्य निरये । क—अवाक् स निरये पापो मानवः पच्यते ।
ख—अवाक् स निरये पापो मानवश्च्यवते ।
2. ख-घ—नानारूपाणि '　　3. अ—अर्धद्वयं नास्ति ।
4. क—पृथगेव समीरिताः ।

## ॥ एकोनविंशोऽध्यायः ॥

ब्राह्मणेन कृष्णं प्रति जीवस्य गर्भप्रवेशादिप्रतिपादककाश्यपसिद्धसंवादानुवादः ॥ १ ॥

ब्राह्मणः—

शुभानामशुभानां च नेह नाशोऽस्ति कर्मणाम् ।
प्राप्य प्राप्य तु पच्यन्ते क्षेत्रं क्षेत्रं तथा तथा ॥ १

[1]यथा प्रसूयमानस्तु समादद्यात् फलं बहु ।
तथा स्याद्विपुलं पुण्यं शुद्धेन मनसा कृतम् ॥ २

[2]पापं चापि तथैव स्यात् पापेन मनसा कृतम् ।
पुरोधाय मनो [3]हीह कर्मण्यात्मा प्रवर्तते ॥ ३

यथा कर्मसमाविष्टः काममन्युसमावृतः ।
नरो गर्भं प्रविशति तत्रापि शृणु चोत्तरम् ॥ ४

[4]शुक्रं शोणितसंयुक्तं स्त्रिया गर्भाशयं गतम् ।
[5]क्षेत्रधर्ममवाप्नोति शुभं वा यदि वाऽशुभम् ॥ ५

सौक्ष्म्यादव्यक्तभावाच्च न स क्वचन सज्जति ।

---

1. अ—प्रसूयमानस्तु फली समादद्यात् फलं बहु ।
   ख-घ--फलं दद्यात् फलं बहु ।
2. ख-घ—अर्धमिदं नास्ति क—पापं त्वपि ।
3. ख—पीह कर्मण्या । घ—कर्माण्यात्मा । क—हिंसां कर्माण्यात्मा ।
4. ख—शुक्रं शोणितसंस्पृष्टं ।
   क--शुक्रशोणितसंहृष्टं प्रियागर्भाशयं गतम् ।
5. ख-घ—क्षेत्रं कर्मजमाप्नोति

सम्प्राप्य ब्रह्मणः कार्यं तस्मात् तद्ब्रह्म शाश्वतम् ॥ ६

तद्बीजं सर्वजन्तूनां तेन जीवन्ति जन्तवः ॥ ६॥

स जीव[1]स्सर्वजन्तूनां गर्भमाविश्य भागशः ।
[2]स याति तेजसा सम्यक् प्राणस्थानेष्ववस्थितः ॥ ७॥

ततस्स्पन्दयतेऽङ्गानि स गर्भश्चेतनान्वितः ॥ ८

[3]यथा लोहितविष्यन्दो निषिक्तो बिम्बविग्रहम् ।
उपैति तद्वज्जानीहि गर्भे जीवप्रवेशनम् ॥ ९

लोहपिण्डं यथा वह्निस् [4]स प्रविश्यातितापयेत् ।
तथा त्वमपि जानीहि गर्भे जीवोपपादनम् ॥ १०

यथा च दीपश्शरणं दीप्यमानः प्रकाशयेत् ।
एवमेव शरीराणि प्रकाशयति चेतना ॥ ११

यद्यच्च कुरुते कर्म शुभं वा यदि वाऽशुभम् ।
पूर्वदेहकृतं सर्वम् अवश्यमुपभुज्यते ॥ १२

ततस्तु क्षीयते चैव पुनश्चान्यत् प्रचीयते ।
यावत् तु मोक्षयोगस्थं धर्मं नैवावबुध्यते ॥ १३

---

1. ख-घ—स्सर्वगात्राणि गर्भस्याविश्य सर्वशः ।
   क—स्सर्वभूतानां गर्भमाविश्य -
2. ख-घ—तथाऽतितेजसा सद्यः । क—तथाऽपि तेजसा सम्यक् ।
3. क-ख—यथा हि लोहविष्यन्दो ।
4. क-घ—प्रविशत्यतितापयन् । ख—प्रविशत्यतितापनम्

तत् ते धर्मं प्रवक्ष्यामि सुखी भवति येन वै ।
आवर्तमानो जातीषु यथाऽन्योन्यासु सत्तम ॥ १४

दानं व्रतं ब्रह्मचर्यं यथोक्तव्रतधारणम् ।
दमः प्रशान्तता चैव भूतानां चानुकम्पनम् ॥ १५

संयमश्चानृशंस्यं च परस्वादानवर्जनम् ।
व्यलीकानामकरणं भूतानामनुकम्पनम् ॥ १६

मातापित्रोश्च शुश्रूषा देवतातिथिपूजनम् ।
गुरुपूजा घृणा शौचं नित्यमिन्द्रियसंयमः ॥ १७

प्रवर्तनं शुभानां च तत् सतां व्रतमुच्यते ॥
ततो धर्मः प्रभवति यः प्रजाः पाति शाश्वतम् ॥ १८

[1]सद्भिराचरितो धर्मस् सदाचारे प्रतिष्ठितः ।
उभयार्थो भवत्येव स्वर्गार्थो मोक्षदस्तथा ॥ १९

एवं सत्सु सदा पश्येत् तत्र ह्येषा ध्रुवा स्थितिः ।
आचारो धर्ममाचष्टे [2]यस्मिन् सन्तो व्यवस्थिताः ॥ २०

तेषु तद्धर्मनिक्षिप्तो यस्स धर्मस्सनातनः ।
यस्तं समभिपद्येत न स दुर्गतिमाप्नुयात् ॥ २१

अतो नियम्यते लोकः प्रमुह्यन् धर्मवर्त्मसु ।
यस्तु योगी च मुक्तश्च स वै तेभ्यो विशिष्यते ॥ २२

1. अ-क—अर्धद्वयं न दृश्यते। 2. ख-घ—यस्मिन् धर्मो व्यवस्थितः

वर्तमानस्य धर्मेण पुरुषस्य यथा तथा ।
संसारतारणं यस्य कालेन महता भवेत् ॥ २३

एवं पूर्वकृतं कर्म सर्वो जन्तुर्निषेवते ।
सर्वं तत् कारणं येन निकृतोऽयमिहागतः ॥ २४

शरीरग्रहणं चास्य केन पूर्वं प्रकल्पितम् ।
इत्येवं संशये लोके तच्च वक्ष्याम्यतः परम् ॥ २५

शरीरमात्मनः कृत्वा [1]सर्वलोकपितामहः ।
त्रैलोक्यमसृजद्ब्रह्मा कृत्स्नं स्थावरजङ्गमम् ॥ २६

ततः प्रधानमसृजच्च् चेतनानां शरीरिणाम् ।
मया सर्वमिदं व्याप्तं यां लोके परमां विदुः ॥ २७

इह तत् क्षरमित्युक्तं परं त्वमृतमक्षरम् ।
त्रयाणां मिथुनं सर्वम् एकैकस्य पृथक् पृथक् ॥ २८

असृजत् [2]सर्वभूतानां पूर्वसृष्टिं [3]प्रजापतिः ।
स्थावराणां च बीजानि इत्येषा पौर्विकी श्रुतिः ॥ २९

तस्य कालपरीणामम् अकरोत् स पितामहः ।
भूतेषु परिवृत्तिं च पुनरावृत्तिमेव च ॥ ३०

यथाऽत्र कश्चिन्मेधावी [4]दृष्ट्वा कर्म तु पूर्वकम् ।

---

1. क—सर्वभूतपितामहः ।
2. अ—सर्वभूतानि पूर्वसृष्टः ।　　3. ख-घ—पितामहः ।
4. क—यथा तु+दुष्टात्मा पूर्वजां मतिम् ।　　ख—दुष्टात्मापूर्वजन्मनि ।

यत् प्रवक्ष्यामि तत् सर्वं यथावदुपपद्यते ॥ ३१

सुखं दुःखं यथा सम्यग् अनित्ये यः प्रपश्यति ।
कायं चामेध्य[1]सङ्घातं विनाशं कर्मसंहितम् ॥ ३२

यच्च किञ्चित् सुखं दृष्टं तच्च दुःखमिति स्मरन् ।
संसारसागरं घोरं तरिष्यति सुदुस्तरम् ॥ ३३

जनीमरणरोगैश्च समाविष्टः प्रधानवित् ।
चेतनावत्सु चैतन्यं समं भूतेषु पश्यति ॥ ३४

निर्विद्यते स्वतः कश्चिन्मार्गमाणः परं पदम् ।
तस्योपदेशं वक्ष्यामि याथातथ्येन सत्तम ॥ ३५

शाश्वतस्याव्ययस्याथ पदस्य ज्ञानमुत्तमम् ।
प्रोच्यमानं मया विप्र निबोधेदमशेषतः ॥ ३६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

॥ ९२ ॥ अनुगीतापर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[ अस्मिन्नध्याये ३६ श्लोकाः ]

---

1. क—संस्थानं ।

## ॥ विंशोऽध्यायः ॥

कृष्णेनार्जुनं प्रति मोक्षसाधनादिप्रतिपादकसिद्धकाश्यपसंवादरूपानुगीतोपदेशः ॥ १ ॥

---

ब्राह्मणः—

यस्मादेकान्तमासीनस् तूष्णीं किञ्चिदचिन्तयन् ।
पूर्वं पूर्वं परित्यज्य स [1]निरारम्भको भवेत् ॥ १

सर्वमित्रस्सर्वसहस् [2]समरक्तो जितेन्द्रियः ।
व्यपेतभयमन्युश्च कामहा मुच्यते नरः ॥ २

आत्मवत् सर्वभूतेषु यश्चरेन्नियतश्शुचिः ।
नित्यमेव यथान्यायं यश्चरेन्नियतेन्द्रियः ॥ ३

अमानी निरभीमानस् सर्वतो मुक्त एव सः ॥ ३॥

जीवितं मरणं चोभे सुखदुःखे तथैव च ।
[3]लाभालाभौ प्रियद्वेष्यौ यस्य साम्येन वर्तते ॥ ४॥

[4]कश्चिन्न तु स्पृहायेत नाभिजानाति किञ्चन ।
निर्द्वन्द्वो वीतरागात्मा सर्वतो मुक्त एव सः ॥ ५॥

---

1. ख-घ—निरालम्बनो ।
2. अ—सहलाभो क—सम एको ।
3. अ-क—लाभालाभे प्रियं द्वेष्यं यस्समत्वेऽनुवर्तते ।
4. ख-घ—किञ्चिन्न तु प्रहायेत

[1]अनमित्रो न बद्धश्चाप्यनपत्यश्च यः कचित् ।
त्यक्तधर्मार्थकामश्च निराकाङ्क्षी स मुच्यते ॥ ६॥

[2]नैव धर्मी न चाधर्मी पूर्वोपचितहा च यः ।
[3]क्षीणधातुः प्रशान्तश्च निर्द्वन्द्वस्स विमुच्यते ॥ ७॥

अकर्मा चाविकाङ्क्षश्च पश्यञ्जगदशाश्वतम् ।
अस्वस्थमवशं नित्यं जन्मसंसारमोहितम् ॥ ८॥

वैराग्यबुद्धिस्सततं तापदोषव्यपेक्षकः ।
आत्मबन्धविनिर्मोक्षं स करोत्यचिरादिव ॥ ९॥

अगन्धरसमस्पर्शम् अशब्दमपरिग्रहम् ।
अरूपमनभिज्ञेयं दृष्ट्वाऽऽत्मानं विमुच्यते ॥ १०॥

पञ्चभूतगुणैर्भिन्नम् अमूर्तिमविलेपनम् ।
अगुणं गुणभोक्तारं यः पश्यति स मुच्यते ॥ ११॥

विहाय सर्वसङ्कल्पान् बुद्ध्या शारीरमानसान् ।
शनैर्निर्वाणमाप्नोति निरिन्धन इवानलः ॥ १२॥

[4]विमुक्तस्सर्वसंस्कारैस् ततो ब्रह्म सनातनम् ।

---

1. अ—अनिमित्तोऽनिबन्धश्च अनपत्यश्च ।
   क—अनिमित्रो त्रिबन्धुश्च अनमित्रश्च ।
2. ख-ब—अर्धमिदं नास्ति
3. ब—धातुक्षयप्रशान्तश्च । क—क्षीणधातुप्रशान्तश्च ।
   ख—धातुक्षयः प्रशान्तानि
4. अ—नास्तीदमर्धम् ।

परमाप्नोति वै शान्तो ह्यचलं दिव्यमक्षरम् ॥ १३॥

अतः परं प्रवक्ष्यामि योगशास्त्रमनुत्तमम् ।
यज्ज्ञात्वा सिद्धमात्मानं लोके पश्यन्ति योगिनः ॥ १४॥

तस्योपदेशं वक्ष्यामि यथावत् तन्निबोध मे ।
यैर्योगैर्भावयन् नित्यं पश्यत्यात्मानमात्मनि ॥ १५॥

इन्द्रियाण्युपसंहृत्य मन आत्मनि धारयेत् ।
तीव्रं तप्त्वा तपः पूर्वं ततो योक्तुमुपक्रमेत् ॥ १६॥

तपस्वी [1]नित्यसङ्कल्पो दम्भाहङ्कारवर्जितः ।
मनीषी मनसा [2]विप्रः पश्यत्यात्मानमात्मनि ॥ १७॥

न चेच्छक्नोत्ययं साधुर् योक्तुमात्मानमात्मनि ।
[3]तत एकान्तशीलस्सन् पश्यत्यात्मानमात्मनि ॥ १८॥

[4]संयतस्सततं युक्त आत्मवान् नियतेन्द्रियः ।
यथाऽयमात्मन्यात्मानं साधु युक्तः प्रपश्यति ॥ १९॥

यथा हि पुरुषं स्वप्ने दृष्ट्वा पश्यत्यसाविति ।
तथारूपमिवात्मानं साधु युक्तः प्रपश्यति ॥ २०॥

इषीकां वा यथा मुञ्जात् कश्चिन्निर्हृत्य दर्शयेत् ।
योगी निष्कृष्टमात्मानं तथा सम्पश्यते तनौ ॥ २१॥

---

1. ख-घ—त्यक्त
2. क—विप्र
3. अ—नास्तीदमर्धम् ।
4. क—अर्धचतुष्टयं नास्ति

मुञ्जं शरीरं तस्याहुर् इषीकामात्मनि श्रिताम् ।
एतन्निदर्शनं प्रोक्तं योगविद्भिरनुत्तमम् ॥ २२॥

यदा हि युक्तमात्मानं सम्यक् पश्यति देहभृत् ।
[1]तदाऽस्य केशवे भक्तिस् त्रैलोक्यस्यापि यः प्रभुः ॥ २३॥

अन्या अन्याश्च तनवो यथेष्टं प्रतिपद्यते ।
विनिर्भिद्य जरां मृत्युं न हृष्यति न शोचति ॥ २४॥

देवानामपि देवत्वं युक्तः कारयते वशी ।
ब्रह्म चाव्ययमाप्नोति हित्वा देहमशाश्वतम् ॥ २५॥

विनश्यत्स्वपि लोकेषु न भयं तस्य जायते ।
क्लिश्यमानेषु भूतेषु न स क्लिश्यति केनचित् ॥ २६॥

दुःखशोकमलैर्घोरैस् सङ्गस्नेहसमुद्भवैः ।
न विचाल्येत युक्तात्मा निस्पृहश्शान्तमानसः ॥ २७॥

नैनं शस्त्राणि विध्यन्ते न मृत्युश्चास्य विद्यते ।
नातस्सुखतरं किञ्चिल्लोके क्वचन विद्यते ॥ २८॥

सम्यग्युक्तो यदाऽऽत्मानम् आत्मन्येव प्रपश्यति ।
तदैव न स्पृहयति साक्षादपि मरुत्पतेः ॥ २९॥

निर्वेदस्तु न गन्तव्यो युञ्जानेन कथञ्चन ॥ ३०

योगमेकान्तशीलस्तु यथा विन्दति तच्छृणु ॥ ३०॥

1. अ—तथा स्वने शते (?) कश्चित्। ख—तदा ज्ञेनं गतः कश्चित्।

दृष्टपूर्वां दिशं ध्यात्वा यस्मिन् सन्निवसेत् पुरे ।
पुरस्याभ्यन्तरे तस्य मनश्चार्यं न बाह्यतः ॥ ३१॥

पुरस्याभ्यन्तरे तिष्ठन् यस्मिन्नावसथे वसेत् ।
तस्मिन्नावसथे चार्यं न बाह्याभ्यन्तरे मनः ॥ ३२॥

प्रचिन्त्यावसथं कृत्स्नं यस्मिन् कायेऽवतिष्ठते ।
तस्मिन् काये मनश्चार्यं न कथञ्चन बाह्यतः ॥ ३३॥

सन्नियम्येन्द्रियग्रामं निर्घोषे निर्जने शुभे ।
कायमभ्यन्तरे कृत्स्नम् एकाग्रः परिचिन्तयेत् ॥ ३४॥

दन्तांस्तालु च जिह्वां च गलं ग्रीवां तथैव च ।
हृदयं चिन्तयेच्चापि तथा हृदयबन्धनम् ॥ ३५॥

इत्युक्तस्स मया शिष्यो मेधावी मधुसूदन ।
पप्रच्छ पुनरेवेमं मोक्षधर्मं सुदुर्वचम् ॥ ३६॥

शिष्यः—

भुक्तं भुक्तं कथमिदं अन्नं कोष्ठे विपच्यते ।
कथं रसत्वं व्रजति शोणितं जायते कथम् ॥ ३७॥

कथं मांसं च मेदश्च स्नाय्वस्थीनि च पोषयेत् ।
कथमेतानि सर्वाणि शरीराणि शरीरिणाम् ॥ ३८॥

वर्धन्ते वर्धमानस्य वर्धते च कथं बलम् ।
निरासनं निष्कसनं मलानां च पृथक् पृथक् ॥ ३९॥

कुतो वायुः प्रश्वसिति उच्छ्वसित्यपि वा पुनः ।

कथं देहमधिष्ठाय तिष्ठत्यात्माऽयमात्मनि ॥ ४०॥

जीवः कायं वहति चेच् चेष्टमानः कलेबरम् ।
किंवर्णः कीदृशश्चैव निवेशयति वै मनः ॥ ४१॥

याथातथ्येन भगवन् वक्तुमर्हसि मेऽनघ ॥ ४२

ब्राह्मणः—

इति सम्परिपृष्टोऽहं तेन विप्रेण माधव ।
प्रत्यब्रवं महाप्राज्ञ यथाश्रुतमरिन्दम ॥ ४३

यथा स्वगोष्ठे प्रक्षिप्य नष्टे भाण्डमना भवेत् ॥ ४३॥

तथा स्वकायं प्रक्षिप्य मनोद्वारैरनिश्चलैः ।
आत्मानं तत्र मार्गेत प्रमादं परिवर्जयेत् ॥ ४४॥

एवं सततमुद्युक्तः प्रीतात्मा नचिरात् स च ।
आसादयति तद्ब्रह्म यद्दृष्ट्वा स्यात् प्रधानवित् ॥ ४५॥

न त्वसौ चक्षुषा ग्राह्यो न च सर्वैरपीन्द्रियैः ।
मनसा तु प्रदीपेन महानात्मा प्रदृश्यते ॥ ४६॥

सर्वतः पादपाणिं तं सर्वतोक्षिशिरोमुखम् ।
जीवो निष्क्रान्तमात्मानं शरीरात् सम्प्रपश्यति ॥ ४७॥

स तमुत्सृज्य देहं तत् प्रध्यायद्ब्रह्म केवलम् ।
आत्मानमालोकयति मनसा प्रहसन्निव ॥ ४८॥

इदं सर्वं रहस्यं ते मयोक्तं द्विजसत्तम ।
आपृच्छे साधयिष्यामि गच्छ विप्र यथासुखम् ॥ ४९॥

इत्युक्तस्स तदा कृष्ण मया शिष्यो महातपाः ।
अगच्छद्वै यथाकामं ब्राह्मणश्छिन्नसंशयः ॥* ५०॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि विंशोऽध्यायः ॥ २० ॥
॥ ९२ ॥ अनुगीतापर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये ५०॥ श्लोकाः]

## ॥ एकविंशोऽध्यायः ॥

कृष्णेनार्जुनं प्रति अनुगीताया रहस्यत्वोक्तिः ॥ १ ॥

श्रीभगवान्—
इत्युक्त्वा स तदा पार्थ वाक्यं मां द्विजपुङ्गवः ।
मोक्षधर्माश्रितं सम्यक् तत्रैवान्तरधीयत ॥ १

कच्चिदेतत् त्वया पार्थ श्रुतमेकाग्रचेतसा ।
तदाऽपि हि रथस्थस्त्वं श्रुतवानेतदेव हि ॥ २

नैतत् पार्थ सुविज्ञेयं व्यामिश्रेणेति मे मतिः ।
[1]नरेणाकृतसङ्ज्ञेनाविदग्धेनाकृतात्मना ॥ ३

सरहस्यमिदं प्रोक्तं देवानां भरतर्षभ ॥ ३॥

* अ-ख-घ—कोशेषु नास्त्यध्यायसमाप्तिर्दृश्यते ।
1. ख-घ—नरेण कृतसंज्ञेन विदग्धेन कृतात्मना ।
क—नरेणाकृतसङ्ज्ञेनाविदग्धेन कृतात्मना ।

कच्चिन्नेदं श्रुतं पार्थ मन्ये नान्येन केनचित् ॥ ४

न ह्येतच्छ्रोतुमर्होऽन्यो मनुष्यस्त्वदृतेऽनघ ।
नैतदन्यस्य विज्ञेयं [1]व्यामिश्रेणान्तरात्मना ॥ ५

क्रियावद्भिर्हि कौन्तेय देवलोकस्समावृतः ।
न चैतदिष्टं देवानां मर्त्यैरुपरि वर्तनम् ॥ ६

परा हि सा गतिः पार्थ यत्तद्ब्रह्म सनातनम् ।
यत्रामृतत्वं प्राप्नोति त्यक्त्वा दुःखं सदा सुखी ॥ ७

एवं हि धर्ममास्थाय येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास् तेऽपि यान्ति परां गतिम् ॥ ८

किं पुनर्ब्राह्मणाः पार्थ क्षत्रिया वा बहुश्रुताः ।
स्वधर्मरतयो नित्यं ब्रह्मलोकपरायणाः ॥ ९

हेतुमच्चैतदुद्दिष्टम् उपायाश्चास्य साधने ।
[2]सिद्धौ फलं च मोक्षश्च [3]दुःखस्य च विनिर्णयः ॥ १०

अतः परं सुखं त्वन्यत् किं नु स्याद्भरतर्षभ ।
श्रुतवाञ्श्रद्दधानश्च पारगन्ता च पाण्डव ॥ ११

यः परित्यज्यते मर्त्यो लोकतन्त्रमसारवत् ।
एतैरुपायैस्स क्षिप्रं परां गतिमवाप्नुते ॥ १२

1. ख-घ—व्यामिश्रेणेति मे मतिः।
2. क-ख—सिद्धैः 3. ख-घ—सुखस्य च

एतावदेव वक्तव्यं न ते भूयोऽस्ति किञ्चन ।
षण्मासान् नित्ययुक्तस्य योगः पार्थ प्रवर्तते ॥ १३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
॥ ९२ ॥ अनुगीतापर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये १३ श्लोकाः ]

## ॥ द्वाविंशोऽध्यायः ॥

कृष्णेनार्जुनं प्रति भूतप्राणादिसृष्ट्यादिप्रतिपादकब्राह्मणदम्पतिसंवादानुवादः ॥ १ ॥

श्रीभगवान्—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
दम्पत्योः पार्थ संवादम् अभयं नाम नामतः ॥ १

ब्राह्मणी ब्राह्मणं कञ्चिज् ज्ञानविज्ञानपारगम् ।
दृष्ट्वा विविक्त आसीनं भार्या भर्तारमब्रवीत् ॥ २

ब्राह्मणी—

कं नु लोकं गमिष्यामि त्वामहं पतिमाश्रिता ।
न्यस्तकर्माणमासीनं कीनाशमविचक्षणम् ॥ ३

भार्याः पतिकृताँल्लोकान् आप्नुवन्तीह नश्श्रुतम् ।
त्वामहं पतिमासाद्य कां गमिष्यामि वै गतिम् ॥ ४

श्रीभगवान्—

एवमुक्तस्स शान्तात्मा तामुवाच हसन्निव ॥ ४॥

ब्राह्मणः—

सुभगे नाभ्यसूयामि वाक्यस्यास्य तवानघे ॥ ५

ग्राह्यं दृश्यं तथा श्राव्यं यदिदं कर्म विद्यते ।
एतदेव व्यवस्यन्ति कर्म कर्मेति कर्मिणः ॥ ६

मोहमेव निगच्छन्ति कर्मिणो ज्ञानवर्जिताः ।
नैष्कर्म्यं न च लोकेऽस्मिन् मौर्ख्यमित्युपलभ्यते ॥ ७

कर्मणा मनसा वाचा शुभं वा यदि वाऽशुभम् ।
जन्मादि मूर्तिभेदानां कर्म भूतेषु वर्तते ॥ ८

[1]रक्षोभिर्वध्यमानेषु दृश्यद्रव्येषु कर्मसु ।
आत्मस्थमात्मना तेन दृष्टमायतनं मया ॥ ९

यत्र तद्ब्रह्म निर्द्वन्द्वं यत्र सोमस्सहाग्निना ।
व्यवायं कुरुते नित्यं [2]धीरो भूतानि धारयन् ॥ १०

यत्र ब्रह्मादयो युक्तास् तदक्षरमुपासते ।
विद्वांसस्सुव्रता यत्र शान्तात्मानो जितेन्द्रियाः ॥ ११

घ्राणेन न तदाघ्रेयं न चास्वाद्यं च जिह्वया ।
स्पर्शेन च तदस्पृश्यं मनसा त्ववगम्यते ॥ १२

---

1. क-ख-घ—रक्षोभिर्भिद्यमानेषु तेषु कर्मसु निश्चयैः ।
2. क-घ—हरः ।

चक्षुषा न विषह्यं च यत् किञ्चिच्छ्रवणात् परम् ।
अगन्धरसमस्पर्शम् अरूपं शब्दवर्जितम् ॥ १२
[1]यतः प्रवर्तते तन्त्रं यत्र च प्रतितिष्ठति ॥ १३॥
[2]प्राणोऽपानस्समानश्च व्यानश्चोदान एव च ।
तत एव प्रवर्तन्ते तमेव प्रविशन्ति च ॥ १४॥
समानव्यानयोर्मध्ये प्राणापानौ विचेरतुः ।
तस्मिन् सुप्ते प्रलीयन्ते समानो व्यान एव च ॥ १५॥
अपानप्राणयोर्मध्ये उदानो व्याप्य तिष्ठति ।
तस्माच्छयानं पुरुषं प्राणापानौ न मुञ्चतः ॥ १६॥
प्राणो नोपहते यत्तु तमुदानं प्रचक्षते ।
तस्मात् तपो व्यवस्यन्ति [3]तद्भूहद् ब्रह्मवादिनः ॥ १७॥
तेषामन्योन्यसक्तानां सर्वेषां देहचारिणाम् ।
अग्निर्वैश्वानरो मध्ये सप्तधा [4]विहितोऽन्तरा ॥ १८॥
घ्राणं जिह्वा च चक्षुश्च त्वक् च श्रोत्रं च पञ्चमम् ।
मनो बुद्धिश्च सप्तैता जिह्वा वैश्वानरार्चिषः ॥ १९॥
घ्रेयं पेयं च दृश्यं च स्पृश्यं श्राव्यं तथैव च ।

---

1. क-ख—ततः प्रवर्तते तन्त्रं तत्र च प्रतितिष्ठति ।
2. क-ख-घ—इतस्सार्धं श्लोकद्वयं नास्ति
3. अ—तद्व्रयं ब्रह्मवादिनि ।
4. घ—विहितोऽन्तिकः । क—विहितो हि यः ।

मन्तव्यमवबोद्धव्यं तास्सप्त समिधो मताः ॥ २०॥

घ्राता भक्षयिता द्रष्टा स्प्रष्टा श्रोता च पञ्चमः ।
मन्ता बोद्धा च सप्तैते भवन्ति परमर्त्विजः ॥ २१॥

घ्रेये पेये च दृश्ये च स्पृश्ये श्राव्ये तथैव च ।
[1]मन्तव्येऽप्यवबोद्धव्ये सुभगे पश्य सर्वदा ॥ २२॥

हवींष्यग्निषु होतारस् सप्तधा सप्त सप्तसु ।
सम्यक् प्रक्षिप्य विद्वांसो जनयन्ति स्वयोनिषु ॥ २३॥

पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ।
मनो बुद्धिश्च सप्तैता योनिरित्येव शब्दिताः ॥ २४॥

हविर्गता गुणास्सर्वे प्रविशन्त्यग्निमुन्मुखम् ।
अन्तर्वासमुषित्वा च जायन्ते स्वासु योनिषु ॥ २५॥

तत्रैव च निरुध्यन्ते प्रलये भूतभावने ।
ततस्सञ्जायते गन्धस् ततस्सञ्जायते रसः ॥ २६॥

ततस्सञ्जायते रूपं ततस्स्पर्शोऽभिजायते ।
ततस्सञ्जायते शब्दस् संशयस्तत्र जायते ॥ २७॥

ततस्सञ्जायते निष्ठा जन्मैतत् सप्तधा विदुः ॥ २८

1. क-ख-घ—अर्धमिदं नास्ति

अनेनैव प्रकारेण प्रगृहीताः पुरातनैः ।
पूर्णाहुतिभिरापूर्णास् [1]तेऽभिपूर्यन्ति तेजसा ॥ २९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
॥ १२ ॥ अनुगीतापर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[ अस्मिन्नध्याये २९ श्लोकाः ]

## ॥ त्रयोविंशोऽध्यायः ॥

कृष्णेनार्जुनं प्रति दशेन्द्रियगुणादिप्रतिपादकब्राह्मणदम्पतिसंवादानुवादः ॥ १ ॥

ब्राह्मणः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
[2]निबोध दशहोतॄणां विधानमिह यादृशम् ॥ १

सर्वमेवात्र विज्ञाय चित्तज्ञानमवेक्षताम् ॥ १॥

रेतश्शरीरभोक्ता यो विज्ञाता तु शरीरभृत् ।
शरीरभृद्गार्हपत्यस् तस्मादग्निः प्रणीयते ॥ २॥

ततश्चाहवनीयस्तु तस्मिन् संविक्षिप्यते हविः ।

1. क-ख—तैः पूर्यन्ते हि तेजना: ।
2. अ—इन्द्रियाणां च संवादं मनसश्चैव भामिनि ।
[ अधिकः पाठः अनन्वितश्च ]

ततो वाचस्पतिर्जज्ञे मनसा पर्यवेक्षते ॥ ३॥
[1]रूपं भवति वै [2]वक्ष्यं तदनुद्रवते मनः ॥ ४

ब्राह्मणी—

कस्माद्वागभवत् पूर्वं कस्मात् पश्चान्मनोऽभवत् ।
मनसा चिन्तितं [3]पूर्वं वाक्यं समभिपद्यते ॥ ५

केन विज्ञानयोगेन मतिश्चित्तं समाप्लुता ।
समुन्नीता नाधिगच्छेत् को वैनां प्रतिषेधति ॥ ६

ब्राह्मणः—

तन्मनस्थः पतिर्भूत्वा [4]तस्मात् प्रेष्यं निबोधति ।
तां मतिं मनसः प्राहुर् मनस्तस्मादवेक्षते ॥ ७

प्रश्नं तु मां वाङ्मनसोर् यस्मात् त्वमनुपृच्छसि ।
तस्मात् ते वर्तयिष्यामि तयोरेव समाह्वयम् ॥ ८

उभे वाङ्मनसी गत्वा भूतात्मानमपृच्छताम् ।
आवयोश्श्रेष्ठमाचक्ष्व च्छिन्धि नौ संशयं विभो ॥ ९

मन इत्येव [5]भगवांस् तदा प्राह सरस्वतीम् ।
अहं वै कामधुक् तुभ्यम् इति तं प्राह वागथ ॥ १०

---

1. क-ख—इदमर्धं न दृश्यते । 2. क-ख-घ—व्यक्तं ।
3. क-ख-घ—वाक्यं सदा समभिपद्यते
4. ख—तस्माद् प्रेक्ष्यमनारतः । तस्माद् प्रेक्ष्यति मानताम् ।
क—तन्मतस्थपतिर्भूत्वा तस्माद् प्रेक्ष्यतमानतम् ।
5. ख-घ—भगवांस्त्वां त्वयाऽऽह । क—भगवांस्ततस्त्वद्धि ।

प्रजापतिः—

स्थावरं जङ्गमं चैव विद्ध्युभे मनसी मम ।
स्थावरं मत्सकाशे वै जङ्गमं विषये तव ॥ ११

यत्तु ते विषयं गच्छन् मन्त्रो वर्णस्स्वरोऽपि वा ।
तन्मनो जङ्गमं नाम तस्मादपि गरीयसी ॥ १२

[1]तस्माद्भवितुमर्हामि स्वयमभ्येत्य शोभने ।
तस्मादुच्छ्वासमासाद्य [2]प्रवक्ष्यामि सरस्वतीम् ॥ १३

प्राणापानान्तरे [3]यस्माद् आवां नित्यं प्रतिष्ठिताम् ।
[4]प्रीयमाणं महाभागे विना प्राणमपानिति ॥ १४
प्रजापतिमुपाधावत् प्रसीद भगवन्निति ॥ १४॥

ततः प्राणः प्रादुरभूद् वाचमाप्याययन्नपि ।
तस्मादुच्छ्वासमासाद्य न वाग्वदति कर्हिचित् ॥ १५॥
घोषिणी जातनिर्घोषा नित्यमेव प्रवर्तते ।
तयोरपि च घोषिण्या निर्घोषैव गरीयसी ॥ १६॥
गौरिव प्रस्रवत्येषा रसमुत्तमशालिनी ।
सततं स्यन्दिनी ह्येषा शाश्वता ब्रह्मवादिनी ॥ १७॥
दिव्या दिव्यप्रभावेण भारती गौश्शुचिस्मिता ।

1. क-ख-घ—यस्मादिदं तु मा वोचः।
2. क-ख—न वक्ष्यति सरस्वती।
3. क-ख—तस्माद्वाग्वै यत्र प्रतिष्ठिता।
4. क-ख—प्रेर्यमाणा महाभागे विना प्राणमपानती।

एतयोरन्तरं पश्य सूक्ष्मयोस्स्यन्दमानयोः ॥ १८॥

ब्राह्मणी—

अनुत्पन्नेषु वाक्येषु चोद्यमाना सिसृक्षया ।
किं नु पूर्वं ततो देवी व्याजहार सरस्वती ॥ १९॥

ब्राह्मणः—

प्राणो न वा संश्रयते शरीरे
प्राणादपानं प्रतिपद्यते तु ।
उदानभूता च विसृज्य देहं
व्यानेन सर्वां दिवमावृणोति ॥ २०॥

ततस्समाने प्रतितिष्ठति स्वयं
इत्येव पूर्वं प्रजजल्प वागपि ।
तस्मान्मनस्स्थावरत्वाद्विशिष्टं
तथा देवी जङ्गमत्वाद्विशिष्टा ॥ २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आश्वमेधिकपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ ९२ ॥ अनुगीतापर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[ अस्मिन्नध्याये २१॥ श्लोकाः ]

---

## ॥ चतुर्विंशोऽध्यायः ॥

कृष्णेनार्जुनं प्रति पृथग्घ्राणादीन्द्रियगुणप्रतिपादकब्राह्मणदम्पति संवादानुवादः ॥ १ ॥

---

ब्राह्मणः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
सुभगे सप्तहोतॄणां विधानमिह यादृशम् ॥ १

घ्राणं चक्षुश्च जिह्वा च त्वक् श्रोत्रं चैव पञ्चमम् ।
मनो बुद्धिश्च सप्तैते होतारः पृथगाश्रिताः ॥ २

[1]सूक्ष्मेऽवकाशे सन्तप्ते न पश्यन्तीतरेतरम् ।
एतद्वै सप्तहोतृत्वं स्वभावाद्विद्धि शोभने ॥ ३

ब्राह्मणी—

[2]सूक्ष्मेऽवकाशे सन्तप्ते कथं [3]नान्योन्यदर्शिनः ।
कथंस्वभावाद्भगवन्नेतदाचक्ष्व मे विभो ॥ ४

ब्राह्मणः—

गुणज्ञानमविज्ञानं गुणज्ञानमभिज्ञता ।
परस्परगुणानेते न विजानन्ति कर्हिचित् ॥ ५

---

1. ख—सूक्ष्मावकाशे तिष्ठन्ति ।
   क—सन्तस्ते कथं नान्योन्यदर्शनम् ।
2. ख—सूक्ष्मेऽवकाशे सन्तस्ते कथं नान्यो ।
3. अ-क—चान्योन्यदर्शिनः ।

जिह्वा चक्षुस्तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च ।
न गन्धानधिगच्छन्ति घ्राणस्तानधिगच्छति ॥ ६

[1]घ्राणं चक्षुश्च जिह्वा च श्रोत्रं बुद्धिर्मनस्तथा ।
न स्पर्शानधिगच्छन्ति त्वक् च तानधिगच्छति ॥ ७

घ्राणं जिह्वा च चक्षुश्च त्वङ्मनो बुद्धिरेव च ।
न शब्दानधिगच्छन्ति श्रोत्रं तानधिगच्छति ॥ ८

घ्राणं जिह्वा च चक्षुश्च श्रोत्रं त्वग् बुद्धिरेव च ।
संशयान् नाधिगच्छन्ति मनस्तानधिगच्छति ॥ ९

घ्राणं जिह्वा च चक्षुश्च श्रोत्रं त्वङ्मन एव च ।
न निष्ठामधिगच्छन्ति बुद्धिस्तामधिगच्छति* ॥ १०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
॥ ९२ ॥ अनुगीतापर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[ अस्मिन्नध्याये १० श्लोकाः ]

---

1. अ—श्लोकचतुष्टयं न दृश्यते
* अ-ख-घ—कोशेषु नाध्यायसमाप्तिर्दृश्यते

## ॥ पञ्चविंशोऽध्यायः ॥

कृष्णेनार्जुनं प्रति मनसो बाह्येन्द्रियाणां च विवादप्रतिपादक-ब्राह्मणदम्पतिसंवादानुवादः ॥ १ ॥

मनः—

नाघ्राति मदृते घ्राणो रसं जिह्वा न बुध्यते ।
रूपं चक्षुर्न गृह्णाति त्वक् स्पर्शं नावबुध्यते ॥ १

न श्रोत्रं शृणुयाच्छब्दं मया हीनं कदाचन ।
प्रवरं सर्वभूतानाम् अहमस्मि सनातनम् ॥ २

अगाराणीव शून्यानि शान्तार्चिष इवाग्नयः ।
इन्द्रियाणि न भासन्ते मया हीनानि नित्यशः ॥ ३

काष्ठानीवार्धशुष्काणि यतमानैरपीन्द्रियैः ।
गुणार्थान् नाधिगच्छन्ति मदृते सर्वजन्तवः ॥ ४

इन्द्रियाणि—

एवमेतद्भवेत् सत्यं यथैतन्मन्यते भवान् ।
ऋतेऽस्मानस्मदर्थांस्त्वं भोगान् भुञ्जीत चेद्भवान् ॥ ५

यद्यस्मासु प्रलीनेषु तर्पणं प्राणधारणम् ।
भोगान् [1]भुङ्क्ते रसान् वेत्ति यथैतन्मन्यते भवान् ॥ ६

---

1. क-ख—भुङ्क्षे रसान् वेत्सि यथैतन्मन्यसे तथा ।

अथवाऽप्यप्रलीनेषु तिष्ठत्सु विषयेषु च ।
यदि सङ्कल्पमात्रेण [1]भुङ्क्ते भोगांस्तथाऽर्थवत् ॥ ७

अथ चेन्मन्यसे बुद्धिम् अस्मदर्थेषु सर्वदा ।
घ्राणेन रूपमादत्स्व रसमादत्स्व चक्षुषा ॥ ८

श्रोत्रेण गन्धानादत्स्व [2]स्पर्शमादत्स्व जिह्वया ।
त्वचा च शब्दमादत्स्व बुद्ध्या स्पर्शमथापि च ॥ ९

बलवन्तो नीयमाना नियमा दुर्बलीयसाम् ।
भोगानपूर्वानादत्स्व नोच्छिष्टं भोक्तुमर्हसि ॥ १०

[3-4]यथा हि शिष्यश्शास्तारं श्रुत्यर्थमनुधावति ।
ततश्श्रुतमुपादाय श्रुतार्थमुपतिष्ठति ॥ ११

विषयानेवमस्माभिर् दर्शितानभिमन्यसे ।
अनागतानतीतांश्च स्वप्ने जागरणे तथा ॥ १२

वैमनस्यं गतानां च जन्तूनामल्पचेतसाम् ।
अस्मदर्थे कृते कार्ये दृश्यते प्राणधारणम् ॥ १३

बहूनपि हि सङ्कल्पान् कृत्वा स्वप्नानुपास्य च ।
बुभुक्षया भिद्यमानो विषयानेव धावति ॥ १४

---

1. क-ख—भुङ्क्ते भोगांस्तथाऽऽर्तवत् ।
2. क-ख—निष्ठामादत्स्व जिह्वया ।
3. क-ख—अस्माभिर्दर्शितानेव विषयानभिमन्यसे । [अधिकः पाठः]
4. क-ख-ब—शासितारं यथा शिष्यश् श्रुतार्थमभिधावन्ति ।

अथागमं द्वारमिव प्रविश्य
सङ्कल्पभोगे विषयानविन्दन् ।
प्राणक्षये शान्तिमुपैति नित्यं
दारुक्षयेऽग्निर्ज्वलितो यथैव ॥ १५

[1]कामं तु नष्टेषु गुणेषु सङ्गः
कामं तु नान्योन्यगुणोपलब्धिः ।
ऋते त्वस्मान् नास्ति तवोपलब्धिस्
त्वामप्यृतेऽस्मान् भजते न हर्षः ॥ १६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
॥ ९२ ॥ अनुगीतापर्वणि नवमोऽध्यायः ॥ ९ ॥
[ अस्मिन्नध्याये १६ श्लोकाः ]

## ॥ षड्विंशोऽध्यायः ॥

कृष्णेनार्जुनं प्रति प्राणापानादीनां स्वस्वश्रैष्ठ्यविषयाविवदादिप्रतिपादकब्राह्मणदम्पतिसंवादानुवादः ॥ १ ॥

ब्राह्मणः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
सुभगे पञ्चहोतॄणां विधानमिह यादृशम् ॥ १

1. क-ख—कामस्तु न स्वेषु गुणेषु सङ्गः काम्यश्च नान्योन्यगुणोपलब्धिः

प्राणापानावुदानश्च समानो व्यान एव च ।
पञ्चहोतॄनथैतान् वै परं भावं विदुर्बुधाः ॥ २

ब्राह्मणी—
स्वभावात् सप्त होतार इति ते पूर्विका मतिः ।
यथा वै पञ्च होतारः परो भावस्तथोच्यताम् ॥ ३

ब्राह्मणः—
प्राणेन सम्भृतो वायुर् अपाने जायते ततः ।
अपाने सम्भृतो वायुस् ततो व्यानः प्रवर्तते ॥ ४
[1]तेऽपृच्छन्त पुरो गत्वा पूर्वजातं प्रजापतिम् ।
यो नो ज्येष्ठस्तदाचक्ष्व स नश्श्रेष्ठो भविष्यति ॥ ५

प्रजापतिः—
यस्मिन् प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे ।
यस्मिन् प्रवृत्ते च पुनश्चरन्ति
स वश्श्रेयान् गच्छत यत्र कामः ॥ ६

प्राणः—
मयि प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रवृत्ते च पुनश्चरन्ति
श्रेष्ठो ह्यहं पश्यत मा प्रलीनम् ॥ ७

ब्राह्मणः—
प्राणः प्रालीयत ततः पुनश्च प्रचचार सः ।

---

1. क-ख-घ—तेऽभ्यपृच्छन् पुरा ।

समानश्चाप्युदानश्च वचोऽब्रूतां पुनश्शुभे ॥ ८

**समानोदानौ—**

न त्वं सर्वमिदं प्राप्य तिष्ठस्युत यथा वयम् ।

न त्वं श्रेष्ठो हि नः प्राण अपानो हि वशे तव ॥ ९

**ब्राह्मणः—**

प्रचचार ततः प्राणस् ततोऽपानोऽभ्यभाषत ॥ ९॥

**अपानः—**

मयि प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रवृत्ते च पुनश्चरन्ति
श्रेष्ठो ह्यहं पश्यत मा प्रलीनम् ॥ १०॥

**ब्राह्मणः—**

व्यानश्च तमुदानश्च भाषमाणमथोचतुः ।

**व्यानोदानौ—**

अपान न त्वं श्रेष्ठो नः प्राणो हि वशगस्तव ॥ ११॥

**ब्राह्मणः—**

अपानः प्रचचाराथ व्यानस्तं पुनरब्रवीत् ॥ १२

**व्यानः—**

श्रेष्ठोऽहमस्मि सर्वेषां श्रूयतां येन हेतुना ॥ १२॥

मयि प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रवृत्ते च पुनश्चरन्ति
श्रेष्ठो ह्यहं पश्यत मा प्रलीनम् ॥ १३॥

ब्राह्मणः—

प्रालीयत ततो व्यानः पुनश्च प्रचचार ह ।

प्राणापानावुदानश्च समानश्च तमब्रुवन् ॥ १४॥

प्राणापानोदानसमानाः—

न त्वं श्रेष्ठोऽसि नो व्यान समानो हि वशे तव ॥ १५

ब्राह्मणः—

प्रचचार ततो व्यानस् समानस्तमथाब्रवीत् ॥ १५॥

समानः—

श्रेष्ठोऽहमस्मि सर्वेषां श्रूयतां येन हेतुना ॥ १६

मयि प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रवृत्ते च पुनश्चरन्ति
श्रेष्ठो ह्यहं पश्यत मा प्रलीनम् ॥ १७

ब्राह्मणः—

ततस्समानः प्राालिल्ये पुनश्च प्रचचार ह ।

प्राणापानावुदानश्च व्यानश्चैव तमब्रुवन् ॥ १८

प्राणापानव्यानोदानाः—

न त्वं समान श्रेष्ठोऽसि [1]व्यान एव वशे तव ॥ १८॥

ब्राह्मणः—

[2]समानः प्रचचाराथ उदानस्तमुवाच ह ।

उदानः—

श्रेष्ठोऽहमस्मि सर्वेषां श्रूयतां येन हेतुना ॥ १९॥

मयि प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे ।

---

1. क-ख-घ—उदानो हि । 2. क-ख-घ—नास्तीदमर्धम् ।

मयि प्रवृत्ते च पुनश्चरन्ति
श्रेष्ठो ह्यहं पश्यत मा प्रलीनम् ॥ २०॥

ब्राह्मणः—
[1]ततः प्रालीयतोदानः पुनश्च प्रचचार ह ।
प्राणापानौ समानश्च व्यानश्चैव तमब्रुवन् ॥ २१॥

प्राणापानव्यानसमानाः—
उदान न त्वं श्रेष्ठोऽसि [2]व्यान एव वशो तव ॥ २२

ब्राह्मणः—
[3]ततस्तानब्रवीत् सर्वान् स्मयमानः प्रजापतिः ॥ २२॥

ब्रह्मा—
सर्वे श्रेष्ठा न वा श्रेष्ठास् सर्वे [4]चान्योन्यरक्षिणः ।
सर्वे स्वविषये श्रेष्ठास् सर्वे चान्योन्य[5]चारिणः ॥ २३॥

ब्राह्मणः—
इति तानब्रवीत् सर्वान् समवेतान् प्रजापतिः ॥ २४

ब्रह्मा—
एकस्स्थिरश्चराश्चान्ये विशेषाः पञ्च वायवः ।
एक एव [6]च सर्वात्मा बहुधाऽप्युपचीयते ॥ २५
परस्परस्य सुहृदो भावयन्तः परस्परम् ।
स्वस्ति व्रजत भद्रं वो धारयध्वं परस्परम् ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
॥ ९२ ॥ अनुगीतापर्वणि दशमोऽध्यायः ॥ १० ॥
[ अस्मिन्नध्याये २६ श्लोकाः ]

---

1. क-ख-घ—नास्तीदमर्धम् ।  2. क-ख-घ—समानो हि
3. क-ख-घ—अत्रैवं पठ्यते ।
"ततोदानः प्रलीयाशु समानः पुनरब्रवीत्" इति
4. क-ख-घ—च सहधर्मिणः ।  5. क-ख-घ –रक्षिणः ।
6. क-ख –ममैवात्मा ।

## ॥ सप्तविंशोऽध्यायः ॥

कृष्णेनार्जुनं प्रति ब्राह्मणेन ब्राह्मणीं प्रत्युक्तसृष्ट्यादिप्रतिपादकनारदवेवतमसंवादानुवादः ॥ १ ॥

ब्राह्मणः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
नारदस्य च संवादम् ऋषेर्देवतमस्य च ॥ १

देवतमः—

जन्तोस्सञ्जायमानस्य किं नु पूर्वं प्रवर्तते ।
प्राणोऽपानस्समानो वा व्यानो वोदान एव च ॥ २

नारदः—

येनायं सृज्यते जन्तुस् ततोऽन्यः पूर्वमेति तम् ।
प्राणद्वन्द्वं च विज्ञेयं [1]तिर्यगूर्ध्वं गतं च यत् ॥ ३

देवतमः—

केनायं सृज्यते जन्तुः कश्चान्यः पूर्वमेति तम् ।
प्राणद्वन्द्वं च मे ब्रूहि तिर्यगूर्ध्वं च [2]निश्चयात् ॥ ४

नारदः—

सङ्कल्पाज्जायते हर्षश् शब्दादपि च जायते ।
[3]रसात् सञ्जायते चापि रूपादपि च जायते ॥ ५

1. क-ख—तिर्यगं चोध्र्वगं च यत् । 2. क-ख—निश्चितम् ।
3. अ—इदमर्धं नोपलभ्यते ।

स्पर्शात् सञ्जायते चापि गन्धादपि च जायते ।
एतद्रूपमुदानस्य हर्षो मिथुनमन्तरा ॥　　६

कामात् सञ्जायते शुक्रः कामात् सञ्जायते रजः ।
समानव्यानजनिते समाने शुक्रशोणिते ॥　　७

शुक्राच्छोणितसंसृष्टात् पूर्वं प्राणः प्रवर्तते ।
प्राणेन विकृते शुक्रे ततोऽपानः प्रवर्तते ॥　　८

शुक्रात् सञ्जायते चापि रसादपि च जायते ।
प्राणापानाविमौ द्वन्द्वम् अर्वाक् चोर्ध्वं च गच्छतः ॥　　९
व्यानस्समानश्चैवोभौ वह्निश्चैव प्रवर्तते ॥　　९॥

अग्निर्वै देवतास्सर्वा इति [1]वेदानुशासनम् ।
सञ्जायते ब्राह्मणेषु ज्ञानं बुद्धिसमन्वितम् ॥　　१०॥

सत्त्वं रूपं तमो रूपं [2]रज एव सुरेतसः ।
सत्त्वं सञ्जायते तस्य यत्र प्रक्षिप्यते हविः ॥　　११॥

हविस्समानो व्यानश्च इति यज्ञविदो विदुः ।
प्राणापानावाज्यभागौ तयोर्मध्ये हुताशनः ॥　　१२॥

एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥　　१३
[3]निर्द्वन्द्वमिति यत्त्वेतत् तन्मे निगदतश्शृणु ॥　　१३॥

---

1. क-ख—वेदस्य शासनम् ।
2. घ—रसो भस्म सरेतसः । क-ख—तमोरूपं रजो भस्म सुरेतसः ।
3. अ—अर्धसप्तकं न दृश्यते ।

अहोरात्रमिदं द्वन्द्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥ १४॥
उभे चैवायने द्वन्द्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥ १५॥
उभे सत्यानृते द्वन्द्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥ १६॥
उभे शुभाशुभे द्वन्द्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥ १७॥
[1]सच्चासच्चैव तद्द्वन्द्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥ १८॥
पूर्वं समानो व्यानोऽथ व्यस्यते[2] किं न कर्मकृत् ।
[3]तृतीयं तु समानेन पुनरेव व्यवस्यते ॥ १९॥
शान्त्यर्थं [4]वामदेव्यं च शास्ति ब्रह्म सनातनम् ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥* २०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

॥ ९२ ॥ अनुगीतापर्वणि एकादशोऽध्यायः ॥ ११ ॥

[ अस्मिन्नध्याये २०॥ श्लोकाः ॥

---

1. क—अर्धद्वयं नोपलभ्यते ।
2. क—तेन कर्मकृत् । ख—व्यस्यते न च कर्मकृत् ।
3. क-घ—द्वितीयस्तु समानस्य । ख—द्वितीयस्तु समानेन ।
4. अ—वामदेवं च शान्ति ब्रह्म । क—वामदेव्यं च शास्त्रब्रह्म ।
* अ—कोशे नात्राध्यायसमाप्तिर्दृश्यते ।

## ॥ अष्टाविंशोऽध्यायः ॥



कृष्णेनार्जुनं प्रति कर्तृकर्मादिप्रतिपादकब्राह्मणदम्पतिसंवादानुवादः ॥ १ ॥



ब्राह्मणः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
चातुर्होत्रविधानस्य विधानमिह यादृशम् ॥ १

तस्य सर्वस्य विधिवद् विधानमुपदेक्ष्यते ।
शृणु मे गदतो भद्रे रहस्यमिदमुत्तमम् ॥ २

करणं कर्म कर्ता च मोक्ष इत्येव भामिनि ।
चत्वार एते होतारो यैरिदं जगदावृतम् ॥ ३
होतॄणां साधनं चैव शृणु सर्वं समासतः ॥ ३॥

घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं च पञ्चमम् ।
मनो बुद्धिश्च सप्तैते ज्ञेयाः करणहेतवः ॥ ४॥

गन्धो रसश्च रूपं च स्पर्शश्शब्दश्च पञ्चमः ।
मन्तव्यमवबोद्धव्यं सप्तैते कर्महेतवः ॥ ५॥

घ्राता भक्षयिता द्रष्टा स्प्रष्टा श्रोता च पञ्चमः ।
मन्ता बोद्धा च सप्तैते विज्ञेयाः कर्तृहेतवः ॥ ६॥

स्वगुणान् भक्षयन्त्येते गुणवन्तश्शुभाशुभान् ।

[1]अहं तु निर्गुणोऽत्रेति सप्तैते मोक्षहेतवः ॥ ७॥

विदुषां बुध्यमानानां स्वं स्वं स्थानं यथाविधि ।
गुणास्ते देवता भूत्वा सततं भुञ्जते हविः ॥ ८॥

अदन् ह्यविद्वानन्नानि ममत्वेनोपहन्यते ।
[2]आत्मार्थे पाचयन्नित्यं ममत्वेनोपहन्यते ॥ ९॥

अभक्ष्यभक्षणं चैव अन्नपानं च हन्ति तम् ।
स चान्नं हन्ति तच्चान्नं स बुध्वा हन्यते बुधः ॥ १०॥

[3]अत्ता ह्यन्नमिदं विद्वान् पुनर्जनयतीश्वरः ।
स चान्नाज्जायते तस्मिन् सूक्ष्मो नाम व्यतिक्रमः ॥ ११॥

मनसा मन्यते यच्च यच्च बुद्ध्या निरुध्यते ।
श्रोत्रेण श्रूयते यच्च चक्षुषा यच्च दृश्यते ॥ १२॥

स्पर्शेन स्पृश्यते यच्च घ्राणेनाघ्रायते च यत् ॥ १३

मनष्षष्ठानि संयम्य हवींष्येतानि सर्वशः ।

गुणवत् पावक इव दीप्यते हव्यवाहनः ॥ १४

योगयज्ञः प्रवृत्तो मे ज्ञानं ब्रह्म मनोभवः ॥ १४॥

प्राणस्तोत्रोऽपानशस्त्रस् सर्वत्यागश्च दक्षिणा ॥ १५

कर्ताऽनुमन्ता ब्रह्मात्मा कर्ताऽध्वर्युः क्रतुस्तुतिः ।

---

1. अ—असन्तो निर्गुणोऽत्रेति । 2. क—नास्तीदमधर्मम् ।
3. ब—मध्यमन्नमविद्वान् हि । क-ख—अद्यमन्नमविद्वान् हि ।

कृतः प्रशास्ता तच्छस्त्रम् अपवर्गोऽस्य दक्षिणा ॥ १६

ऋचश्चाप्यत्र शंसन्ति नारायणविदो जनाः ।

नारायणाय देवाय [1]यदबध्नात् पशून् पुनः ॥ १७

तत्र सामानि गायन्ति तानि चाहुर्निदर्शनम् ॥ १७॥

देवं नारायणं भीरु सर्वात्मानं निबोध मे ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

॥ ९२ ॥ अनुगीतापर्वणि द्वादशोऽध्यायः ॥ १२ ॥

[ अस्मिन्नध्याये १८ श्लोकाः ]

---

## ॥ एकोनत्रिंशोऽध्यायः ॥

---

कृष्णेनार्जुनं प्रति प्रजापतिना एकेनैव शब्देन परब्रह्मोपदेशे देवर्ष्यादीनां स्वस्वयोग्यतानुसारेण नानार्थावगमप्रतिपादकब्राह्मणदम्पति-संवादानुवादः ॥ १ ॥

---

ब्राह्मणः—

[2]एकश्शास्ता न द्वितीयोऽस्ति कश्चित्

यो हृच्छयस्तमहमनुब्रवीमि ।

---

1. क-ख—यदबन्धन् पशून् पुरा ।
2. अ—एकश्शास्ता न द्वितीयोऽस्ति शास्ता
   यथा नियुक्तोऽस्मि तथा चरामि ।
   हृद्येष तिष्ठन् पुरुषं शास्ति शास्ता
   तेनानुयुक्तः प्रवणादिवोदकम् ॥ [पाठान्तरम् ]

तेनैव युक्तः प्रवणादिवोदकं
यथा नियुक्तोऽस्मि तथा वहामि ॥ १

एको गुरुर्नास्ति ततो द्वितीयो
यो हृच्छयस्तमहमनु ब्रवीमि ।
तेनानुशिष्टा गुरुणा तथैव
पराभूता दानवास्सर्वं एव ॥ २

एको बन्धुर्नास्ति ततो द्वितीयो
यो हृच्छयस्तमहमनु ब्रवीमि ।
तेनानुशिष्टा बान्धवा बन्धुमन्तस्
सप्तर्षयश्चैव दिवि प्रभान्ति ॥ ३

एकश्श्रोता नास्ति ततो द्वितीयो
यो हृच्छयस्तमहमनु ब्रवीमि ।
तस्मिन् गुरौ गुरुवासं निरुष्य
शक्रो गतस्सर्वलोकामरत्वम् ॥ ४

एको द्वेष्टा नास्ति ततो द्वितीयो
यो हृच्छयस्तमहमनु ब्रवीमि ।
तेनानुशिष्टा गुरुणा सदैव
लोके द्विष्टाः पन्नगास्सर्वं एव ॥ ५

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
प्रजापतेः पन्नगानां देवर्षीणां च संविदम् ॥ ६

देवर्षयश्च नागाश्चाप्यसुराश्च प्रजापतिम् ।
पर्यपृच्छन्नुपासीनाश् श्रेयो नः प्रोच्यतामिति ॥　　७

तेषां प्रोवाच भगवाञ् श्रेयस्समनुपृच्छताम् ।
ओमित्येकाक्षरं ब्रह्म ते श्रुत्वा प्राद्रवन् दिशः ॥　　८

तेषां [1]प्रद्रवमाणानाम् उपदेशार्थमात्मनः ।
सर्पाणां [2]दर्शने भावः प्रवृत्तः पूर्वमेव तु ॥　　९

असुराणां प्रवृत्तस्तु दर्पो भावस्स्वभावतः ।
दानं देवा व्यवसिता दममेव महर्षयः ॥　　१०

एकं वक्तारमासाद्य शब्देनैकेन संस्कृताः ।
नाना व्यवसितास्सर्वे धर्मे देवर्षिदानवाः ॥　　११

शृणोम्येवं प्रोच्यमानं गृह्णाति च यथातथम् ।
पृच्छतस्तावतो भूयो गुरोरन्योऽनुमन्यते ॥　　१२

तस्य चानुमते कर्म ततः पश्चात् प्रवर्तते ।
गुरुर्बन्धुश्च शास्ता च द्वेष्टा च हृदये स्थितः ॥　　१३

पापेन विचरँल्लोके पापचारी भवत्ययम् ।
शुभेन विचरँल्लोके शुभचारी भवत्युत ॥　　१४

कामचारी तु कामेन य इन्द्रियसुखे रतः ।

---

1. क-ख-घ - प्रद्रवतामेवमुपदेशं च शृण्वताम् ।
2. क-ख—दर्शने भावं प्रवृत्तं ।

[1]व्रतचारी सदैवैष य इन्द्रियजये रतः ॥ १५

अपेतव्रतकर्मा तु केवलं ब्रह्मणि श्रितः ।
ब्रह्मभूतश्चरँल्लोके ब्रह्मचारी भवत्ययम् ॥ १६

ब्रह्मैव समिधस्तस्य ब्रह्माग्निर्ब्रह्मसंस्तरः ।
आपो ब्रह्म गुरुर्ब्रह्म स ब्रह्मणि समाहितः ॥ १७

एतदेतादृशं सूक्ष्मं ब्रह्मचर्यं विदुर्बुधाः ।
विदित्वा चान्वपद्यन्त क्षेत्रज्ञेनानुदर्शिना* ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
॥ ९२ ॥ अनुगीतापर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[ अस्मिन्नध्याये १८ श्लोकाः ]

---

## ॥ त्रिंशोऽध्यायः ॥

कृष्णेनार्जुनं प्रति विद्याब्रह्मणोररण्यत्वरूपणपरब्राह्मणदम्पति-संवादानुवादः ॥ १ ॥

---

ब्राह्मणः—

सङ्कल्पदंशमशकं शोकहर्षहिमातपम् ।
मोहान्धकारतिमिरं लोभव्यालसरीसृपम् ॥ १

---

1. अ—इदमर्धं नास्ति
*अ—कोशे नात्राध्यायसमाप्तिर्दृश्यते ।

विषयैकान्त्यमध्वानं कामक्रोधनिरोधकम् ।
तदतीत्य महादुर्गं प्रविष्टोऽस्मि महद्वनम् ॥ २

ब्राह्मणी—

क्व तद्वनं महाप्राज्ञ के वृक्षास्सरितश्च काः ।
कियन्तः पर्वताश्चैव कियत्यध्वनि तद्वनम् ॥ ३

ब्राह्मणः—

न मन्दस्य पृथग्भावः किञ्चिद्दूरतरं ततः ।
तस्माद्ध्रस्वतरं नास्ति न ततोऽन्यद् बृहत्तरम् ॥ ४
नास्ति तस्माद्दुःखतरं नास्त्यन्यत् तत्समं सुखम् ॥ ४॥
न तत् प्रविश्य शोचन्ति न प्रहृष्यन्ति च द्विजाः ।
न च बिभ्यति केभ्यश्चिन्नैभ्यो बिभ्यति केचन ॥ ५॥

तस्मिन् वने सप्त महाद्रुमा हि
फलानि सप्तातिथयश्च सप्त ।
सप्तर्षयस्सप्त समिद्धुतानि
वृक्षाश्च सप्तैतदरण्यरूपम् ॥ ६॥

पञ्चवर्णानि दिव्यानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ॥ ७॥
[1]सुरभीण्येकवर्णानि पुष्पाणि च फलानि च ।

---

1. अ—चतुर्वर्णानि दिव्यानि । ख—बहून्यव्यक्तवर्णानि ।
क—शङ्कराणि त्रिवर्णानि ।

सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ॥ ८॥

[1]शङ्कराणि त्रिवर्णानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ॥ ९॥

एको ह्यग्निस्सुमना ब्राह्मणोऽत्र
पञ्चेन्द्रियाणि समिधश्चात्र सन्ति ।
तेभ्यो वृक्षास्सप्त भवन्ति दीक्षा
गणाः फलान्यतिथयः फलाशाः ॥ १०॥

आतिथ्यं प्रतिगृह्णन्ति तत्र सप्त महर्षयः ।
अर्चितेषु प्रलीनेषु तेष्वन्यद्रोचते वनम् ॥ ११॥

प्रज्ञावृक्षं मोक्षफलं शान्तिच्छायासमन्वितम् ।
ज्ञानाश्रयं तृप्तितोयम् अन्तः क्षेत्रज्ञभास्करम् ॥ १२॥

येऽधिगच्छन्ति तत् सन्तस् तेषां नास्ति पुनर्भवः ।
ऊर्ध्वं चाधश्च तिर्यक् च तस्य नान्तोऽधिगम्यते ॥ १३॥

सप्त स्त्रियस्तत्र वसन्ति सत्यास्
त्ववाङ्मुखा भानुमत्यो जनित्र्यः ।

---

1. क-ग—बहून्यव्यक्तवर्णानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ॥
ख-घ—चतुर्वर्णानि दिव्यानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ॥
[इत्यधिकः पाठः]

ऊर्ध्वं रसानाददते प्रजाभ्यस्
सर्वान् यथा सर्वमतीत्य ताश्च ॥ १४॥
तत्रैव प्रतितिष्ठन्ति पुनस्तत्रोदयन्ति च ।
ते च सप्तर्षयस्सिद्धा वसिष्ठप्रमुखैस्त्विह ॥ १५॥
यशो वर्चो भगश्चौजो विजयस्सिद्धतेजसी ।
एवमेवानुवर्तन्ते सप्त ज्योतींषि भास्करम् ॥ १६॥
ऋषयः पर्वताश्चैव सन्ति तत्र समासतः ।
नद्यश्च परितो वारि वहन्त्यो ब्रह्मसम्भवम् ॥ १७॥
नदीनां सङ्गमस्तत्र वैतानस्समुपह्वरे ।
स्वात्मतृप्ता यतो यान्ति साक्षाद्दान्ताः पितामहम् ॥ १८॥
कृशाङ्गास्सुव्रताश्शान्तास् तपसा दग्धकिल्बिषाः ।
आत्मन्यात्मानमावेश्य ब्राह्मणास्तमुपासते ॥ १९॥
ऋचमप्यत्र शंसन्ति विद्यारण्यविदो जनाः ।
तदरण्यमभिप्रेत्य कथा कथमजायत ॥ २०॥
एतदेवेदृशं दिव्यम् अरण्यं ब्राह्मणा विदुः ।
विदित्वा चानुतिष्ठन्ति क्षेत्रज्ञेनानुदर्शिना ॥* २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
॥ ९२ ॥ अनुगीतापर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[अस्मिन्नध्याये २१॥ श्लोकाः ।

---

* अ—कोशे नात्राध्यायसमाप्तिर्दृश्यते ॥

## ॥ एकत्रिंशोऽध्यायः ॥

कृष्णेनार्जुनं प्रति यागीयहिंसाया अधर्म्यत्वाभावप्रतिपादकाध्वर्यु-यतिसंवादानुवादः ॥ १ ॥

---

ब्राह्मणः—

गन्धान् न जिघ्रामि रसान् न वेद्मि
रूपं न पश्यामि न च स्पृशामि ।
न चापि शब्दान् विविधान् शृणोमि
न चापि सङ्कल्पमुपैमि कश्चित् ॥ १

अर्थानिष्टान् कामयते स्वभावस्
सर्वान् द्वेष्यान् द्वेष्टि चैव स्वभावः ।
कामद्वेषावुद्भवतस्स्वभावात्
प्राणापानौ जन्तुदेहादिवैत्य ॥ २

तेभ्यश्चान्यांस्तेष्वनन्यांश्च भावान्
भूतात्मानं लक्षयेऽहं शरीरे ।
तस्मिंस्तिष्ठन् नास्ति शक्तः कथञ्चित्
कामक्रोधाभ्यां जरया मृत्युना च ॥ ३

[1]अकामयानस्य च सर्वकामान्
अविद्विषाणस्य च सर्वदोषान् ।

---

1. ख—अनिश्चितश्चैव हि । क-ख—अनिच्छतश्चैव हि ।

न मे स्वभावेषु भवन्ति लेपास्
तोयस्य बिन्दोरिव पुष्करेषु ॥ ४

नित्यस्य [1]चैतस्य भवन्त्यनित्या
निरीक्षमाणस्य बहून् स्वभावान् ।
न सज्जते कर्मसु भोगजालं
दिवीव सूर्यस्य मयूखजालम् ॥ ५

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
अध्वर्युयतिसंवादं तं निबोध यशस्विनि ॥ ६
प्रोक्ष्यमाणं पशुं दृष्ट्वा यज्ञकर्मण्यथाब्रवीत् ।
यतिरध्वर्युमासीनो हिंसेयमिति कुत्सयन् ॥ ७
तमध्वर्युः प्रत्युवाच नायं छागो विनश्यति ।
श्रेयसा योक्ष्यते जन्तुर् यज्ञस्तुतिरियं तथा ॥ ८
यो ह्यस्य पार्थिवो भावः पृथिवीं स गमिष्यति ।
यदस्य वारिजं किञ्चिद् अपस्तत् प्रतिपद्यते ॥ ९
सूर्यं चक्षुर्दिशं श्रोत्रे प्राणोऽस्य दिवमेव तु ।
आगमे वर्तमानस्य [2]न मे दोषोऽस्ति कश्चन ॥ १०

यतिः—
प्राणैर्वियोगे च्छागस्य यदि श्रेयः प्रपश्यसि ।

---

1. क—चैतस्य भवन्त्यनित्या निरीक्ष्यमाणस्य बहुस्वभावान्।
ख—नित्यं हि चैतस्य भवन्ति नित्या निरीक्षमाणस्य बहुस्वभावान् ।
2. क-ख—दोषो नास्तीति।

छागार्थे वर्तते यज्ञो भवतः किं प्रयोजनम् ॥ ११

अनु त्वां मन्यते माता पिता भ्रूत्वा सखाऽपि च ।
मन्त्रमस्यैवमुन्नीय [1]परिवर्ते विशेषतः ॥ १२

य एवमनुमन्येरंस् तान् भवान् प्रष्टुमर्हति ।
तेषामनुमतिं श्रुत्वा शक्या कर्तुं विचारणा ॥ १३

अध्वर्युः—

प्राणा अप्यस्य च्छागस्य प्रापितास्ते स्वयोनिषु ।
शरीरं केवलं शिष्टं निश्चेष्टमिति मे मतिः ॥ १४

यतिः—

इन्धनस्य तु तुल्येन शरीरेण विचेतसा ।
हिंसां निर्वेष्टुकामानाम् इन्धनः पशुसंज्ञितः ॥ १५

अध्वर्युः—

अहिंसा सर्वभूतानाम् इति वृद्धानुशासनम् ।
[2]यदहिंस्रं भवेत् कर्म तत् कार्यमिति विद्महे ॥ १६

अहिंसेति प्रतिज्ञेयं यदि वक्ष्याम्यतः परम् ।
शक्यं बहुविधं वक्तुं भवतः कार्यदूषणम् ॥ १७

अहिंसा सर्वभूतानां अस्मभ्यं रोचते सदा ।
प्रत्यक्षतस्साधयामो न परोक्षमुपास्महे ॥ १८

---

1. ख—परमन्तं । क-ख—परवन्तं ।
2. क—यदि + न कार्यमिति वेद्म्यहम् ।
ख—यदि + तत् वचर्यमिति वेद्म्यहम् ।

अध्वर्युः—

भूमेर्गन्धगुणान् भुङ्क्षे पिबस्यापोमयान् रसान् ।
ज्योतिषामीक्षसे रूपं स्पृशस्यनिलजान् गुणान् ॥　　१९

शृणोष्याकाशजं शब्दं मनसा मन्यसे मतिम् ।
सर्वाण्येतानि भूतानि प्राणा इति च मन्यसे ॥　　२०

प्राणेऽपाने च नित्यं हि हिंसायां वर्तते भवान् ।
नास्ति चेष्टा विना हिंसां किं वा त्वं मन्यसे द्विज ॥　　२१

यतिः—

अक्षरं च क्षरं चैव द्वैधीभावो यतात्मनाम् ।
अक्षरं तत्र सद्भावस् स्वभावः क्षर उच्यते ॥　　२२

प्राणो जिह्वा मनस्सत्त्वं स्वभावो राजसो गुणः ॥　　२२॥

भावैरेतैर्वियुक्तस्य निर्द्वन्द्वस्य निराशिषः ।
समस्य सर्वभूतेषु निर्ममस्य जितात्मनः ॥　　२३॥

समन्तात् परिमुक्तस्य न भयं विद्यते क्वचित् ॥　　२४

अध्वर्युः—

सद्भिरेवेह संवासः कार्यो मतिमतां वर ।
भवता कथितं श्रुत्वा प्रतिभाति मतिर्मम ॥　　२५

भगवन् भगवद्बुद्ध्या प्रतिबुद्धो ब्रवीम्यहम् ।
मतं मन्तुं क्रतुं कर्तुं नापराधोऽस्ति मे द्विज ॥　　२६

ब्राह्मणः—

उपपत्त्या यतिस्तूष्णीं वर्तमानस्ततः परम् ।
अध्वर्युरपि निर्मोहः प्रचचार महामखे ॥ २७

एवमेतादृशं मोक्षं सुसूक्ष्मं ब्राह्मणा विदुः ।
विदित्वा चानुतिष्ठन्ति क्षेत्रज्ञेनानुदर्शिना ॥* २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
॥ ९२ ॥ अनुगीतापर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[ अस्मिन्नध्याये २८ श्लोकाः ]

---

## ॥ द्वात्रिंशोऽध्यायः ॥

ब्राह्मणेन स्वभार्यां प्रति हिंसाया अकर्तव्यत्वे महर्षिवचसां प्रमाणीकरणोपयोगितया परशुरामचरित्रकथनारम्भः ॥ १ ॥ रामेण कार्तवीर्ये निहते तदनुयायिभिर्जमदग्नेर्हननम् ॥ २ ॥ ततः क्रुद्धेन रामेण त्रिस्सप्तकृत्वः सर्वक्षत्रियहनने तत्पितृभी रामस्य परिसान्त्वनप्रयतनम् ॥ ३ ॥

---

ब्राह्मणः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
कार्तवीर्यस्य संवादं समुद्रस्य च भामिनि ॥ १

कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान् ।
येन सागरपर्यन्ता धनुषा निर्जिता मही ॥ २

---

* अ—कोशे नात्राध्यायसमाप्तिर्दृश्यते ॥

स कदाचित् समुद्रान्ते विचरन् बलदर्पितः ।
अवाकिरच्छरशतैस् समुद्रमिति नश्श्रुतम् ॥ २

तं समुद्रो नमस्कृत्य कृताञ्जलिरुवाच ह ॥ ३॥

समुद्रः—

मा मुञ्च वीर नाराचान् ब्रूहि किं करवाणि ते ॥ ४

मदाश्रयाणि भूतानि त्वदुत्सृष्टैर्महेषुभिः ।
वध्यन्ते राजशार्दूल एभ्यो देह्यभयं प्रभो ॥ ५

अर्जुनः—

मत्समो यदि सङ्ग्रामे शरासनधरः क्वचित् ।
विद्यते तं समाचक्ष्व यस्समो हि महामृधे ॥ ६

समुद्रः—

महर्षिर्जमदग्निस्ते यदि राजन् परिश्रुतः ।
तस्य पुत्रस्तवातिथ्यं यथावत् कर्तुमर्हति ॥ ७

ब्राह्मणः—

ततस्स राजा प्रययौ क्रोधेन महताऽन्वितः ।
स तमाश्रममागम्य राममेवान्वपद्यत ॥ ८

स रामप्रतिकूलानि चकार सह बन्धुभिः ।
आयासं जनयामास रामस्य च महात्मनः ॥ ९

ततस्तेजः प्रजज्वाल रामस्यामिततेजसः ।
प्रदहन् रिपुसैन्यानि तदा कमललोचने ॥ १०

ततः परशुमादाय स तं बाहुसहस्रिणम् ।
चिच्छेद सहसा रामो बहुशाखमिव द्रुमम् ॥ ११

तं हतं पतितं दृष्ट्वा समेतास्सर्वबान्धवाः ।
असीनादाय शक्तीश्च भार्गवं पर्यवारयन् ॥ १२

स रामो रथमारुह्य धनुरादाय सत्वरः ।
विसृजन् शरवर्षाणि व्यधमत् पार्थिवं बलम् ॥ १३

ततस्तु क्षत्रियाः केचिज् जमदग्निं निहत्य च ।
विविशुर्गिरिदुर्गाणि मृगास्सिंहार्दिता इव ॥ १४

[1]तेषां स्वविहितं कर्म [2]तद्भयान्नानुतिष्ठताम् ।
प्रजा वृषलतां प्राप्ता ब्राह्मणानामदर्शनात् ॥ १५

त एते द्रमिळाः काचाः पुण्ड्राश्च शबरैस्सह ।
वृषलत्वं परिगता व्युत्थानात् क्षत्रधर्मतः ॥ १६

ततस्तु हतवीरासु क्षत्रियासु पुनः पुनः ।
द्विजैरुत्पादितं क्षत्रं [3]न्यकृन्तज्जमदग्निजः ॥ १७

एकविंशतिके याते रामं वागशरीरिणी ।
दिव्या प्रोवाच मधुरा सर्वलोकपरिश्रुता ॥ १८

राम राम निवर्तस्व कं गुणं त्वत्र पश्यसि ।

1. क—तेषां त्वयि हितं कर्म तद्भवान्नानु ।
2. ख—तद्भावान्नु (?) घ—तद्भवान्नानु—
3. क—निकृतं जामदग्निना । ख—निकृत्तं जमदग्निना ।

क्षत्रबन्धूनिमान् प्राणैर् वियोज्य च पुनः पुनः ॥ १९

तथैव तं महात्मानम् ऋचीकप्रमुखास्तथा ।
पितामहा महाभाग निवर्तस्वेत्यथाब्रुवन् ॥ २०

पितुर्वधममृष्यंश्च रामः प्रोवाच तानृषीन् ।
नार्हन्तीह भवन्तो मां निवारयितुमित्युत ॥ २१

पितरः—

नार्हसि क्षत्रबन्धूंस्त्वं निहन्तुं जयकाङ्क्षया ।
न हि युक्तं त्वया हन्तुं ब्राह्मणेन सता नृपान् ॥* २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

॥ ९२ ॥ अनुगीतापर्वणि षोडशोऽध्यायः ॥ १६ ॥

[ अस्मिन्नध्याये २२ श्लोकाः ]

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

परशुरामं प्रति तत्पितृभिः क्षत्रियवधान्निवर्तनायालर्कोपाख्यानकथनम् ॥ १ ॥ रामेण तच्छ्रवणाद्धिंसातो निवृत्य तपश्चरणम् ॥ २ ॥

पितरः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
[1]श्रुत्वा च तत् तथा कार्यं भवता द्विजसत्तम ॥ १

---

* अ—कोशे नात्राध्यायसमाप्तिः ॥ 1. अ—नास्तीदमर्धम्

अलर्को नाम राजर्षिर् अभवत् सुमहातपाः ।
धर्मज्ञस्सत्यसन्धश्च महात्मा सुमहाव्रतः ॥ २

स सागरान्तां [1]धनुषा विनिर्जित्य महीमिमाम् ।
कृत्वा सुदुष्करं कर्म मनस्सूक्ष्मे समादधे ॥ ३

स्थितस्य वृक्षमूलेऽथ तस्य चिन्ता बभूव ह ।
उत्सृज्य सुमहद्राज्यं सूक्ष्मं प्रति महामते ॥ ४

अलर्कः—

मनसो मे बलं जातं मनो जित्वा ध्रुवो जयः ।
[2]अन्यत्र बाणान् दास्यामि शत्रुभिः परिवारितः ॥ ५

यदिदं [3]चापलात् कर्म सर्वमेतद्विकर्षति ।
मनः प्रति सुतीक्ष्णाग्रान् अहं मोक्ष्यामि सायकान् ॥ ६

मनः—

नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥ ७

अन्यान् बाणान् [4]समीक्षस्व यैस्त्वं मां सूदयिष्यसि ॥ ७॥

पितरः—

तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥ ८

---

1. क-ख—वसुधां । 2. ख—अर्धाष्टकं नास्ति
3. ख—चापलं मुक्तिः । क—चापलं मूर्तें ।
4. क-ख—प्रतीक्षस्व ।

अलर्कः—

आघ्राय सुबहून् गन्धांस् तानेव प्रति गृध्यति ।
तस्माद् घ्राणं प्रति शरान् प्रतिमोक्षाम्यहं शितान् ॥ ९

घ्राणः—

नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति [1]भिन्नमर्मा मरिष्यसि ॥ १०
अन्यान् बाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि ॥ १०॥

अलर्कः—

इयं स्वादून् रसान् भुक्त्वा तानेव प्रति गृध्यति ।
तस्माज्जिह्वां प्रति शरान् प्रतिमोक्षाम्यहं शितान् ॥ ११॥

जिह्वा—

नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति ततो हास्यसि जीवितम् ॥ १२॥
अन्यान् बाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि ॥ १३

अलर्कः—

स्पृष्ट्वा त्वग् विविधान् स्पर्शास् तानेव प्रति गृध्यति ।
तस्मात् तान् सूदयिष्येऽहं विविधैः कङ्कपत्रिभिः ॥ १४

त्वक्—

नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति ततो हास्यसि जीवितम् ॥ १५
अन्यान् बाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि ॥ १५॥

---

1. ख—ततो हास्यसि जीवितम् ।

अलर्कः—

श्रुत्वा वै विविधाञ्छब्दांस्तानेव प्रति गृध्यति ।
तस्माच्छ्रोत्रं प्रति शरान् मोक्षयिष्याम्यहं शितान् ॥ १६॥

श्रोत्रम्—

नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति ततो हास्यसि जीवितम् ॥ १७॥
अन्यान् बाणान् प्रतीक्षस्व यैस्त्वं मां सूदयिष्यसि ॥ १८

अलर्कः—

दृष्ट्वैव विविधान् भावांस्तानेव प्रति गृध्यति ।
तस्माच्चक्षुः प्रति शरान् मोक्षयिष्याम्यहं शितान् ॥ १९

चक्षुः—

नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥ २०
अन्यान् बाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि ॥ २०॥

अलर्कः—

इयं निष्ठा बहुविधाः प्रज्ञया त्वध्यवस्यति ।
तस्माद्बुद्धिं प्रति शरान् प्रतिमोक्ष्याम्यहं शितान् ॥ २१॥

बुद्धिः—

नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।

तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥ २२॥
अन्यान् बाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि ॥ २३

पितरः—

ततोऽलर्कस्तपो घोरम् आस्थाय तु सुदुष्करम् ।
नाभ्यगच्छत् परं शक्त्या बाणमेतेषु सप्तसु ॥ २४
सुसमाहितचेतास्तु सततं चिन्तयत् प्रभुः ॥ २४॥
स विचिन्त्य चिरं कालम् अलर्को द्विजसत्तम ।
नाध्यगच्छत् परं श्रेयो योगान्मतिमतां वरः ॥ २५॥
स एकाग्रं मनः कृत्वा निश्चलो योगमास्थितः ।
इन्द्रियाणि जघानाशु बाणेनैकेन वीर्यवान् ॥ २६॥
योगेनात्मानमाविश्य स सिद्धिं परमां ययौ ।
विस्मितश्चापि राजर्षिर् इमां गाथां जगाद ह ॥ २७॥

अलर्कः—

अहो [2]कष्टं यदस्माभिः पूर्वं राज्यमनुष्ठितम् ।
अतः पश्चान्मया ज्ञातं योगान्नास्ति परं सुखम् ॥ २८॥

पितरः—

इति त्वमपि जानीहि राम मा क्षत्रियान् वधीः ।
तपो घोरमुपातिष्ठ ततश्श्रेयोऽभिपत्स्यसे ॥ २९॥

---

1. ब—नष्टं

ब्राह्मणः—

इत्युक्तः पितृभिस्सोऽथ तपो घोरं समास्थितः ।
जामदग्न्यो महाभागे सिद्धिं च परमां गतः ॥ ३०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ ९२ ॥ अनुगीतापर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[ अस्मिन्नध्याये ३०॥ श्लोकाः ]

---

## ॥ चतुस्त्रिंशोऽध्यायः ॥

---

ब्राह्मणेन स्वभार्यां प्रति कामक्रोधादिपरित्यागपूर्वक भगवदवबोधस्य परमपुरुषार्थसाधनतावबोधकाम्बरीषगीतगाथाकथनम् ॥ १ ॥

---

ब्राह्मणः—

त्रयो वै रिपवो लोके नव चैव गुणा मताः ।
हर्षस्स्तम्भोऽतिमानश्च त्रयस्ते सात्त्विका गुणाः ॥ १

शोकः क्रोधोऽभिसंरम्भो राजसास्ते गुणास्स्मृताः ।
स्वप्नस्तन्द्री च मोहश्च त्रयस्ते तामसा गुणाः ॥ २

एतान् निकृत्य धृतिमान् बाणसङ्घैरतन्द्रितः ।
जित्वा परानुत्सहते प्रशान्तस्त्वाजितेन्द्रियः ॥ ३

अत्र गाथाः कीर्तयन्ति पुराकल्पविदो जनाः ।
अम्बरीषेण या गीता राज्ञा राज्यं प्रशासता ॥ ४

समुदीर्णेषु दुष्टेषु वध्यमानेषु सर्वशः ।
जग्राह तरसा राज्यम् अम्बरीष इति श्रुतिः ॥　　५

सन्निगृह्य महादोषान् साधून् समभिपूज्य च ।
जगाम महतीं सिद्धिं गाथाश्चेमा जगाद ह ॥　　६

अम्बरीषः—

भूयिष्ठं मे जिता दोषा निहतास्सर्वशत्रवः ।
एको दोषोऽवशिष्टस्तु वध्यस्स्वनिहतो मया ॥　　७

येन युक्तो जन्तुरयं तृष्णामेवाधिगच्छति ।
तृषार्त इव निम्नानि परिधावति नित्यदा ॥　　८

अकार्यमपि येनेह प्रयुक्तस्सेवते नरः ।
तं लोभमसिभिस्तीक्ष्णैर् निकृत्य सुखमेधते ॥　　९

लोभाद्धि जायते तृष्णा ततश्चिन्तां प्रसज्यते ।
स लिप्समानो लभते भूयिष्ठं राजसान् गुणान् ॥　　१०
[1]तदवाप्तौ तु लभते भूयिष्ठं तामसान् गुणान् ॥　　१०॥

स तैर्गुणै[2]स्संहतदेहबन्धनः
पुनः पुनर्जायति कर्म चेहते ।
जन्मक्षये भिन्नविकीर्णदेहो
पुनर्मृत्युं गच्छति जन्मनि स्वे ॥　　११॥

---

1. अ—नास्तीदमर्धम् ।
2. क-घ—संक्षत । ख—स क्षतदेव ।

तस्मादेनं सम्यगवेक्ष्य मोहं
निगृह्य धृत्याऽऽत्मनि राज्यमिच्छेत् ।
एतद्राज्यं नान्यदस्तीति विद्याद्
यस्त्वेकराजा विदितो मयैकः ॥ १२॥

ब्राह्मणः—

इति राज्ञाऽम्बरीषेण गाथा गीता यशस्विना ।
आधिराज्यं पुरस्कृत्य लोभमेकं निकृन्तता ॥* १३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि चतुस्त्रिंशोऽध्यायः॥ ३४ ॥
॥ ९२ ॥ अनुगीतापर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
[ अस्मिन्नध्याये १३॥ श्लोकाः ]

## ॥ पञ्चत्रिंशोऽध्यायः ॥

ब्राह्मणेन स्वभार्यां प्रति ममतावर्जनस्य पुरुषार्थसाधनतायां दृष्टान्ततया ब्राह्मणजनकसंवादानुवादः ॥ १ ॥

ब्राह्मणः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
ब्राह्मणस्य च संवादं जनकस्य च भामिनि ॥ १

ब्राह्मणं जनको राजा क्रान्तं कस्मिंश्चिदागसि ।
विषये मे न वस्तव्यम् इति [1]शिक्षार्थमब्रवीत् ॥ २

* अ—कोशे नात्राध्यायसमाप्तिः ॥
1. अ—शिष्यस्तमब्रवीत् । क-ख—शिष्यार्थं ।

इत्युक्तः प्रत्युवाचाथ ब्राह्मणो राजसत्तमम् ॥　　२॥

ब्राह्मणः—

आचक्ष्व विषयान् राजन् यान यांस्तव वशे स्थितान् ।
सोऽन्यस्य विषये राज्ञो वस्तुमिच्छाम्यहं विभो ॥　　३॥
वचस्ते कर्तुमिच्छामि यथाशास्त्रं महीपते ॥　　४

ब्राह्मणः—

इत्युक्तस्तु तदा राजा ब्राह्मणेन यशस्विना ।
मुहुरुष्णं च निश्श्वस्य न स तं प्रत्यभाषत ॥　　५

तमासीनं ध्यायमानं राजानममितौजसम् ।
कश्मलं सहसाऽगच्छद् भानुमन्तमिव ग्रहः ॥　　६

तमाश्वास्य ततो राजा व्यपेते कश्मले तदा ।
ततो मुहूर्तादिव तं ब्राह्मणं वाक्यमब्रवीत् ॥　　७

जनकः—

पितृपैतामहे राज्ये वश्ये जनपदे सति ।
विषयं नाधिगच्छामि विचिन्वन् पृथिवीमिमाम् ॥　　८

नाध्यगच्छं यदा पृथ्व्यां मिथिला मार्गिता मया ।
नाध्यगच्छं यदा तस्यां स्वाः प्रजा मार्गिता मया ॥　　९

नाध्यगच्छं यथा तासु ततो मे कश्मलोऽभवत् ।
ततो मे कश्मलस्यान्ते मतिः पुनरुपस्थिता ॥　　१०

यया न विषयं मन्ये सर्वो वा विषयो मम ।
आत्माऽपि चायं न मम सर्वा वा पृथिवी मम ॥ ११
उष्यतां यावदुत्साहो भुज्यतां यावदिष्यते ॥ ११॥

ब्राह्मणः—

पितृपैतामहे राज्ये वश्ये जनपदे सति ।
ब्रूहि कां बुद्धिमास्थाय ममत्वं वर्जितं त्वया ॥ १२॥
कां वै बुद्धिं विनिश्चित्य सर्वो वै विषयस्तव ।
[1]नावैषि विषयं येन सर्वो वा विषयस्तव ॥ १३॥

जनकः—

अन्तवन्त इहारम्भा विदितास्सर्वकर्मसु ।
नाध्यगच्छमहं यस्मान्ममेदमिति यद्भवेत् ॥ १४॥
कस्येदमिति कश्चायम् इति वेदवचस्तथा ।
नाध्यगच्छमहं बुद्ध्या ममेदमिति यद्भवेत् ॥ १५॥
एतां बुद्धिं विनिश्चित्य ममत्वं वर्जितं मया ॥ १६
शृणु बुद्धिं तु यां श्रुत्वा सर्वस्तु विषयो मम ॥ १६॥
नाहमात्मार्थमिच्छामि गन्धान् घ्राणगतानपि ।
तस्मान्मे निर्जिता भूमिर् वशे तिष्ठति नित्यशः ॥ १७॥
नाहमात्मार्थमिच्छामि रसानास्येऽपि वर्ततः ।

---

1. अ—नास्तीदमर्थम्

आपो मे निर्जितास्तस्माद् वशे तिष्ठन्ति नित्यशः ॥ १८॥

नाहमात्मार्थमिच्छामि रूपं ज्योतिस्तु चक्षुषि ।
तस्मान्मे निर्जितं ज्योतिर् वशे तिष्ठति नित्यशः ॥ १९॥

नाहमात्मार्थमिच्छामि शब्दान् श्रोत्रगतानपि ।
आकाशं मे जितं तस्माद् वशे तिष्ठति नित्यशः ॥ २०॥

नाहमात्मार्थमिच्छामि मनो नित्यं मनोन्तरे ।
मनो मे निर्जितं तस्माद् वशे तिष्ठति नित्यशः ॥ २१॥

देवेभ्यश्च पितृभ्यश्च भूतेभ्योऽतिथिभिस्सह ।
भुक्त्यर्थं सर्व एवेमे समारम्भा भवन्ति वै ॥ २२॥

ब्राह्मणः—

ततः प्रहस्य जनकं ब्राह्मणः पुनरब्रवीत् ।
त्वज्जिज्ञासार्थमद्येह विद्धि मां धर्ममागतम् ॥ २३॥

त्वमस्य ब्रह्मनाभस्य बुद्ध्यावप्यनिवर्ततः ।
सत्वनेमिनिरूढस्य चक्रस्यैकः प्रवर्तकः ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आश्वमेधिकपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

॥ ९२ ॥ अनुगीतापर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

[ अस्मिन्नध्याये २४॥ श्लोकाः ]

## ॥ षट्त्रिंशोऽध्यायः ॥

ब्राह्मणेन ब्राह्मणीं प्रति स्वमाहात्म्यप्रकाशनम् ॥ १ ॥

ब्राह्मणः—

नाहं तथा भीरु चरामि लोके
यथा त्वं मां [1]तर्कयसे स्वबुद्ध्या ।
विप्रोऽस्मि मुक्तोऽस्मि वनेचरोऽस्मि
गृहस्थधर्मा ब्रह्मचारी तथाऽस्मि ॥ १

नाहमस्मि यथा मां त्वम् ईक्षसे चक्षुषा शुभे ।
मया व्याप्तमिदं सर्वं यत् किञ्चिज्जगतीगतम् ॥ २

ये केचिदिह वै लोके जङ्गमास्स्थावराश्च ह ।
तेषामन्तर्गतं विद्धि दारूणामिव पावकम् ॥ ३

राज्यं पृथिव्यां सर्वस्याम् अथवा यत् त्रिविष्टपे ।
तन्मे बुद्धिरियं वेत्ति बुद्धिरेव [2]धनं मम ॥ ४

एकः पन्था ब्राह्मणानां येन गच्छन्ति तद्विदः ।
गृहेषु वनवासेषु गुरुवासेषु भिक्षुषु ॥ ५

लिङ्गैर्बहुभिरव्यग्रैर् एका बुद्धिरुपास्यते ।
नानालिङ्गाश्रमस्थानां येषां बुद्धिश्शमात्मिका ॥ ६

---

1. घ—वर्जयसे।
2. ख-घ—सुनिश्चितम्। क—धनं मतम्।

ते भावमेकमायान्ति सरितस्सागरं यथा ॥ ६॥

बुद्ध्या[1]ऽयं गम्यते मार्गश् शरीरेण न गम्यते ।
आद्यन्तवन्ति कर्माणि शरीरं कर्मबन्धनम् ॥ ७॥

तस्मान्मे सुभगे नास्ति परलोककृतं भयम् ।
मद्भावभावनिरता ममैवात्मानमेष्यसि* ॥ ८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
॥ ९२ ॥ अनुगीतापर्वणि विंशोऽध्यायः ॥ २० ॥
[ अस्मिन्नध्याये ८॥ श्लोकाः ]

---

## ॥ सप्तत्रिंशोऽध्यायः ॥

---

कृष्णेनार्जुनं प्रति ब्राह्मणीब्राह्मणशब्दनिर्दिष्टयोः क्रमेण बुद्धिमनस्त्वकथनम् ॥ १ ॥

---

ब्राह्मणी—

नेदमल्पात्मना शक्यं वेदितुं नाकृतात्मना ।
बहु चाल्पं च संक्षिप्तं विप्लुतं च मनो मम ॥ १

उपायं तु मम ब्रूहि येनैषा लभ्यते मतिः ।
तन्मन्ये कारणतमं यत एषा प्रवर्तते ॥ २

---

1. क-ख—यो गम्य ।
*अ—कोशे नात्राध्यायसमाप्तिर्दृश्यते॥

ब्राह्मणः—

अरणीं [1]ब्राह्मणीं विद्धि गुरुरस्योत्तरारणिः ।
तपश्श्रुतेऽथ मथिते ज्ञानाग्निर्जायते ततः ॥ ३

ब्राह्मणी—

यदिदं ब्रह्मणो लिङ्गं क्षेत्रज्ञ इति संज्ञितम् ।
ग्रहीतुं येन तच्छक्यं लक्षणं तस्य तद्वद ॥ ४

ब्राह्मणः—

अलिङ्गो निर्गुणश्चैव कारणं नास्य [2]विद्महे ।
उपायं तु प्रवक्ष्यामि येन गृह्येत मानवः ॥ ५
सम्यगप्युपदिष्टस्य अमृतस्येव तृप्यसे ॥ ५॥
कर्मभुग्बुद्धिपूर्वस्स्याज् ज्ञानलिङ्गैरधिष्ठितः ॥ ६
इदं कार्यमिदं नेति न मोक्षेषूपदिश्यते ।
पश्यतश्शृण्वतो बुद्धिर् आत्मनैवोपजायते ॥ ७
यावन्त इव शक्येरंस् तावतोंशान् प्रकल्पयेत् ।
व्यक्तानव्यक्तरूपांश्च शतशोऽथ सहस्रशः ॥ ८
सर्वानुमानयुक्तांश्च सर्वान् प्रत्यक्षहेतुकान् ॥ ८॥
यतः परं न विद्येत तह्याकाशं भविष्यति ॥ ९

श्रीभगवान्—

ततस्तु तस्या ब्राह्मण्या मतिः क्षेत्रज्ञसंशये ।

---

1 क-ख—ब्राह्मणं । 2. ख-ग—विद्मते ।

क्षेत्रज्ञादेव परतः क्षेत्रज्ञोऽन्यः प्रवर्तते ॥ १०

अर्जुनः—

[1]क नु सा ब्राह्मणी क्षुण्णा क चासौ ब्राह्मणर्षभः ।
यथा सिद्धिरियं प्राप्ता तावुभौ वद मेऽच्युत ॥ ११

श्रीभगवान्—

मनो मे ब्राह्मणं विद्धि बुद्धिं मे ब्राह्मणीमथ ।
क्षेत्रज्ञ इति यश्चोक्तस् सोऽहमेव धनञ्जय ॥* १२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
॥ ९२ ॥ अनुगीतापर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[ अस्मिन्नध्याये १२ श्लोकाः ]

---

## ॥ अष्टात्रिंशोऽध्यायः ॥

कृष्णेनार्जुनं प्रति परब्रह्मस्वरूपतत्प्राप्तिसाधनादिप्रतिपादकगुरुशिष्यसंवादानुवादः ॥ १ ॥

---

अर्जुनः—

ब्रह्म यत् परमं वेद्यं तन्मे व्याख्यातुमर्हसि ।
भवतो हि प्रसादेन सुसूक्ष्मे रमते मतिः ॥ १

---

1. अ—श्लोकद्वयं नास्ति
* अ—कोशे नात्राध्यायसमाप्तिर्दृश्यते ॥

श्रीभगवान्—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
संवादं मोक्षसंयुक्तं शिष्यस्य गुरुणा सह ॥ २

कश्चिद् ब्राह्मणमासीनम् आचार्यं संशितव्रतम् ।
शिष्यः पप्रच्छ मेधावी किंस्विच्छ्रेयः परन्तप ॥ ३

भगवन्तं प्रपन्नोऽहं निश्श्रेयसपरायणः ।
याचे त्वां शिरसा विप्र यद् ब्रूयां तद्विचक्ष्व मे ॥ ४

श्रीभगवान्—

तमेवंवादिनं पार्थ शिष्यं गुरुरुवाच ह ॥ ४॥

गुरुः—

कथयस्व प्रवक्ष्यामि यत्र ते संशयो द्विज ॥ ५

श्रीभगवान्—

इत्युक्तस्स कुरुश्रेष्ठ गुरुणा गुरुवत्सलः ।
प्राञ्जलिः परिपप्रच्छ यत् तच्छृणु महामते ॥ ६

शिष्यः—

कुतश्चाहं कुतश्च त्वं तत् सर्वं ब्रूहि यत् परम् ।
कुतो जातानि भूतानि चराणि स्थावराणि च ॥ ७

केन जीवन्ति जातानि तेषामायुः किमात्मकम् ।
किं सत्यं किं तपो विप्र के गुणास्सद्भिरीरिताः ॥ ८

के पन्थानश्शिवास्सन्ति सुकृतं किं च दुष्कृतम् ॥ ८॥

एतान् मे भगवन् प्रश्नान् याथातथ्येन सत्तम ।
वक्तुमर्हसि विप्रर्षे यथावदिह तत्त्वतः ॥　　९॥

श्रीभगवान्—

तस्मै सम्प्रतिपन्नाय यथावत् परिपृच्छते ।
शिष्याय गुणयुक्ताय शान्ताय प्रियवर्तिने ॥　　१०॥

छायाभूताय दान्ताय यतये ब्रह्मचारिणे ।
तान् प्रश्नानब्रवीत् पार्थ मेधावी सुदृढव्रतः ॥　　११॥

गुरुः कुरुकुलश्रेष्ठ सम्यक् सर्वा[1]नशेषतः ॥　　१२

गुरुः—

ब्रह्मप्रोक्तमिदं धर्मम् ऋषिप्रवरसेवितम् ।
वेदविद्यासमावाप्तं तत्त्वभूतार्थभावनम् ॥　　१३

भूतभव्यभविष्यादिधर्मकामार्थनिश्चयम् ।
सिद्धसङ्घपरिज्ञातं पुराकल्पं सनातनम् ॥　　१४

प्रवक्ष्यामि महाप्राज्ञ परमुत्तममद्य ते ॥　　१४॥

बुद्ध्वा यदिह संसिद्धा भवन्तीह मनीषिणः ॥　　१५

उपागम्यर्षयः पूर्वं जिज्ञासन्तः परस्परम् ॥　　१५॥

बृहस्पतिर्भरद्वाजो गौतमो भार्गवस्तथा ।
वसिष्ठः [2]कश्यपश्चैव विश्वामित्रोऽत्रिरेव च ॥　　१६॥

मार्गान् सर्वान् परिक्रम्य परिश्रान्तास्स्वकर्मभिः ॥　　१७

---

1. क-ख—नरिन्दम ।　　2. क-ख—काश्यप ।

ऋषिमाङ्गिरसं वृद्धं पुरस्कृत्य तु ते द्विजाः ।
ददृशुर्ब्रह्मभवने ब्रह्माणं वीतकल्मषम् ॥ १८

तं प्रणम्य महात्मानं सुखासीनं महर्षयः ।
पप्रच्छुर्विनयोपेता नैःश्रेयसमिदं परम् ॥ १९

ऋषयः—

कथं कर्म कृतं साधु कथं मुच्येत किल्बिषात् ।
के नो मार्गाश्शिवाश्च स्युः किं सत्यं किं च दुष्कृतम् ॥ २०

कौ वेमौ कर्मपन्थानौ महत्त्वं केन विन्दति ।
निरयं चापवर्गं च भूतानां प्रभवाप्ययौ ॥ २१

गुरुः—

इत्युक्तस्स मुनिश्रेष्ठैर् यदाह प्रपितामहः ।
तत् तेऽहं सम्प्रवक्ष्यामि शृणु शिष्य यथातथम् ॥ २२

ब्रह्मा—

सत्याद्भूतानि जातानि चराणि स्थावराणि च ।
तपसा तानि जीवन्ति जीवितं तद्धि [1]सुव्रतम् ॥ २३

स्वां योनिं पुनरागम्य वर्तन्ते येन कर्मणा ॥ २३॥

[2]सत्यं हि गुणसंयुक्तं नियतं पञ्चलक्षणम् ॥ २४

ब्रह्म सत्यं तपस्सत्यं सत्यं चैव प्रजापतिः ।
सत्याद्भूतानि जातानि भूतं सत्यमयं महत् ॥ २५

तस्मात् सत्याश्रया विप्रा नित्यं योगपरायणाः ।
अतीतक्रोधसन्तापा नियता धर्मसेतवः ॥ २६

---

1. क—सुव्रत । ख—सुव्रताः । 2 अ—श्लोकद्वयं न दृश्यते ।

अन्योन्यनियतान् वेद्यान् धर्मसेतुप्रवर्तकान् ।
तानहं सम्प्रवक्ष्यामि शाश्वताँल्लोकभावनान् ॥　　२७

चातुर्वैद्यांस्तथा वर्णान् आश्रमांश्च पृथक् पृथक् ।
धर्ममेकं चतुष्पादं नित्यमाहुर्मनीषिणः ॥　　२८

पन्थानं वः प्रवक्ष्यामि शिवं क्षेमकरं द्विजाः ।
नित्यं ब्रह्मविदामिष्टं गतं पूर्वमहर्षिभिः ॥　　२९

गदतस्तु ममाद्येह पन्थानं दुर्विदं परम् ।
निबोधत महाभागा निखिलेन परं पदम् ॥　　३०

ब्रह्मचारिकमेवाहुर् आश्रमं परमं पदम् ।
द्वितीयं गार्हपत्यं तु वानप्रस्थमतः परम् ॥　　३१

ततः परं तु विज्ञेयम् अध्यात्मं परमं पदम् ॥　　३१॥

ज्योतिराकाशमादित्यो वायुरिन्द्रः प्रजापतिः ।
नोपैति यावदध्यात्मं [1]तावदेतान् न पश्यति ॥　　३२॥

तस्य रूपं प्रवक्ष्यामि पुरस्तात् तं निबोधत ॥　　३३

फलमूलाशनवतां मुनीनां वसतां वने ।
वानप्रस्थं द्विजातीनां त्रयाणामुपदिश्यते ॥　　३४

सर्वेषामेव वर्णानां गृहस्थोऽयं विशिष्यते ।
श्रद्धालक्षणमित्येवं धर्मं धीराः प्रचक्षते ॥　　३५

---

1. क-ख—तावदेनं न ।

[1-2]अतस्तत्त्वानि वक्ष्यामि याथातथ्येन हेतुना ।
विषयस्थानि सर्वाणि वर्तमानानि भागशः ॥ ३६

महानात्मा तथाऽव्यक्तम् अहङ्कारस्तथैव च ।
इन्द्रियाणि दशैकं च महाभूतानि पञ्च च ॥ ३७

विशेषाः पञ्चभूतानाम् इत्येषा वैदिकी श्रुतिः ।
चतुर्विंशतिरेषा वै तत्त्वानां सम्प्रकीर्तिता ॥ ३८

तत्त्वानामथ यो वेद सर्वेषां प्रभवाप्ययौ ॥
स धीरस्सर्वभूतेषु न मोहमधिगच्छति ॥ ३९

तत्त्वानि यो वेदयते यथातथं
गुणांश्च सर्वानखिलां च देवताम् ।
विधूतपाप्मा हि विमुच्य बन्धनं
स सर्वलोकानमलस्समश्नुते* ॥ ४०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
॥ ९२ ॥ अनुगीतापर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[ अस्मिन्नध्याये ४० श्लोकाः ]

---

1. अ—नैष्ठिकोऽथ यतिर्वाऽपि विमक्तो ब्रह्मचारिणः ।
सदेवयानाः पन्थानः पन्थानः परिकीर्तिताः ॥
सद्भिरध्यासिता धीरैः कर्मभिर्धर्मसेतवः ।
एतेषां पृथगध्यास्ते यो धर्मं संशितव्रतः ॥
नलात् पश्यति भूतानां सतां हि प्रभवाप्ययौ ॥
[अधिकः पाठः. अनन्वितश्च]

2. क-ख-घ—वाङ्मनः कायपूर्वं तत् ।

*अ—कोशे नात्राध्यायसमाप्तिर्दृश्यते ॥

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

ब्रह्मणा काश्यपादिमहर्षीन् प्रति तमोगुणकार्यनिरूपणम् ॥ १ ॥

ब्रह्मा—

तदव्यक्तमनुद्रिक्तं सर्वव्यापि ध्रुवं स्थिरम् ।
नवद्वारं पुरं विद्यात् त्रिगुणं पञ्चधातुकम् ॥ १

एकादशपरिक्षेपं मनोव्याकरणात्मकम् ।
बुद्धिस्वामिकमित्येतत् परमेकादशाद् भवेत् ॥ २

त्रीणि स्रोतांसि यान्यस्मिन्नाप्यायन्ते पुनः पुनः ।
प्रणाड्यस्तिस्र एतेषां प्रवर्तते गुणात्मिकाः ॥ ३

तमो रजस्तथा सत्वं गुणानेतान् प्रचक्षते ।
अन्योन्यमिथुनास्सर्वे तथाऽन्योन्यानुजीविनः ॥ ४

[1]अन्योन्याश्रयिणश्चैव तथाऽन्योन्यानुवर्तिनः ।
अन्योन्यव्यतिषक्ताश्च त्रिगुणाः पञ्चधातवः ॥ ५

तमसो मिथुनं सत्वं सत्वस्य मिथुनं रजः ।
रजसश्चापि सत्वं स्यात् सत्वस्य मिथुनं तमः ॥ ६

नियम्यते तमो यत्र रजस्तत्र प्रवर्तते ।
नियम्यते [2]रजो यत्र सत्वं तत्र प्रवर्तते ॥ ७

1. अ—नास्तीदमर्धम् । 2. क-ख—यदा सत्त्वं तमस्तत्र प्रवर्तते ।

नैशात्मकं तमो विद्यात् त्रिगुणं मोहसंज्ञितम् ।
अधर्मलक्षणं चैव नियतं पापकर्मसु ॥ ८

प्रकृत्यात्मकमेवाभूद् रजः पर्यायकारणम् ।
[1]प्रवृत्तं सर्वभूतेषु पश्यत्युत्पत्तिलक्षणम् ॥ ९

एतेषां गुणतत्त्वं हि [2]वक्ष्यते प्राप्तहेतुभिः ।
समासव्यासयुक्तानि तत्त्वतस्तानि वित्त मे ॥ १०

सम्मोहो मनसस्त्यागः कर्मणामविनिर्णयः ।
[3]स्वप्नस्तम्भो भयं लोभश् शोकस्सुकृतदूषणम् ॥ ११

विस्मृतिश्चाविवेकश्च नास्तिक्यं भिन्नवृत्तिता ।
निर्विशेषत्वमन्धत्वं जघन्यगुणवृत्तिता ॥ १२

अकृते कृतमानित्वम् अज्ञाने ज्ञानमानिता ।
अमैत्री विकृतो भावो ह्यश्रद्धा गूढभावना ॥ १३

अनार्जनमसंज्ञत्वं कर्म पापमचेतना ।
गुरुत्वं सन्नभावत्वम् [4]अशीतत्वमवाग्गतिः ॥ १४

सर्वे एते गुणाश्चैव तामसाः परिकीर्तिताः ॥ १४॥
ये चान्ये नियता भावा लोकेऽस्मिन् मूढसंज्ञिताः ।
तत्र तत्र नियम्यन्ते सर्वे ते तामसा गुणाः ॥ १५॥

---

1. अ—सत्त्वे तु । 2. क-ख-घ—वक्ष्यते हेत्वहेतुभिः ।
3. क-ख—दर्पस्तम्भौ भयं लोभश् शोक । 4. क-ख-घ—असितत्व ।

परिवादकथा नित्यं देवब्राह्मणवैरिता ।
अत्यागश्चातिमानश्च मोहो मन्युस्तथाऽक्षमा ॥ १६॥
मत्सरश्चैव भूतेषु तामसं वृत्तमिष्यते ॥ १७
[1]वृथाऽऽरम्भा हि ये केचिद् वृथा दानानि यानि च ।
वृथा भक्षणमित्येतत् तामसं वृत्तमिष्यते ॥ १८
अतिवादोऽतितिक्षा च मात्सर्यमतिमानिता ।
अश्रद्दधानता चैव तामसं वृत्तमिष्यते ॥ १९
एवंविधास्तु ये केचिल्लोकेऽस्मिन् पापकर्मिणः ।
मनुष्या भिन्नमर्यादास् ते सर्वे तामसा जनाः ॥ २०
तेषां योनिं प्रवक्ष्यामि [2]नियतां पापकर्मिणाम् ॥ २०॥
अवाङ्निरयभागा वै तिर्यङ्निरयगामिनः ॥ २१
स्थावराणि च भूतानि पशवो वाहनानि च ।
क्रव्यादा दन्दशूकाश्च कृमिकीटविहङ्गमाः ॥ २२
अपरे जन्तवो ये च सर्वे चापि चतुष्पदाः ।
उन्मत्ता बधिरा मूका ये चान्ये पापरोगिणः ॥ २३
मग्नास्तमसि दुर्वृत्तास् स्वकर्मकृतलक्षणाः ।
अवाक्स्रोतस इत्येते मग्नास्तमसि तामसाः ॥ २४
तेषामुत्कर्षमुद्रेकं वक्ष्याम्यहमतः परम् ।

---

1. ख—अर्धद्वयं नास्ति　　2. क-ख—नियमं पापकर्मणाम् ।

यथा ते सुकृतां लोकाँल्लभन्ते पुण्यकर्मणाम् ॥ २५

अन्यथा प्रतिपन्नास्तु विवृद्धा ये च कर्मसु ॥ २५॥

स्वकर्मनिरतानां च ब्राह्मणानां शुभैषिणाम् ।

संस्कारेणोर्ध्वमायान्ति यतमानास्सलोकताम् ॥ २६॥

स्वर्गं गच्छन्ति देवानाम् इत्येषा वैदिकी श्रुतिः ॥ २७

अन्यथा प्रतिपन्नास्तु विबुद्धास्स्वेषु कर्मसु ।

पुनरावृत्तिधर्माणस् ते भवन्तीह मानुषाः ॥ २८

पापयोनिं समापन्नाश् चण्डाला [1]धृकचूचुकाः ।

वर्णान् पर्यायतश्चैव प्राप्नुवन्त्युत्तरोत्तरम् ॥ २९

शूद्रयोनिमतिक्रम्य ये चान्ये तामसा गुणाः ।

स्रोतोमध्ये समागम्य वर्तन्ते तामसा गुणाः ॥ ३०

अभिष्वङ्गस्तु कामेषु महामोह इति स्मृतः ।

ऋषयो मुनयो देवा मुह्यन्त्यत्र सुखेप्सवः ॥ ३१

तमोमोहो महामोहस् तामिस्रो ह्यन्धसंज्ञितः ।

मरणं त्वन्धतामिस्रस् तामिस्रः क्रोध उच्यते ॥ ३२

भावतो गुणतश्चैव योनितश्चैव तत्त्वतः ।

सर्वमेतत् तमो विप्राः कीर्तितं वो यथाविधि ॥ ३३

को न्वेतद्बुध्यते साधु को न्वेतत् साधु पश्यति ।

---

1. क-ख-घ—मूकचूचुपाः ।

अतत्त्वे तत्त्वदर्शी यस् तमसस्तच्च लक्षणम् ॥ ३४

तमोगुणा वो बहवोऽनुकीर्तिता
यथावदुक्तं च तमः परावरम् ।
नरो हि यो वेद गुणानिमान् सदा
स तामसैस्सर्वगुणैर्विमुच्यते ॥ ३५

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
॥ ९२ ॥ अनुगीतापर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
[अस्मिन्नध्याये ३५ श्लोकाः]

---

## ॥ चत्वारिंशोऽध्यायः ॥

ब्रह्मणा महर्षीन् प्रति रजोगुणकार्यनिरूपणम् ॥ १ ॥

---

ब्रह्मा—

रजोऽहं वः प्रवक्ष्यामि याथातथ्येन सत्तमाः ।
निबोधत महाभागा गुणवृत्तं च सर्वशः ॥ १

सङ्कल्पो रूपमायासस् सुखदुःखे हिमातपौ ।
ऐश्वर्यं निग्रहस्सिद्धिर् हेतुवादोऽरतिः क्षमा ॥ २

बलं शौर्यं मदो रोषो व्यायामकलहावपि ।
ईर्ष्येप्सा पैशुनं युद्धं ममत्वं परिपालनम् ॥ ३

वधबन्धपरि[1]क्लेशाः क्रयो विक्रय एव च ।
निकृन्त च्छिन्धि भिन्धीति परमर्मावकर्तनम् ॥ ४

उग्रं दारुणमाक्रोशः परवित्तानुरागिता ।
लोकचिन्ता विचिन्ता च मत्सरः परि[2]भाषणम् ॥ ५
वृथाशास्त्रं मृषावादो विकल्पपरिभाषणम् ।
निन्दा स्तुतिः प्रशंसा च प्रतापः परितर्पणम् ॥ ६
परिचर्या च शुश्रूषा सेवा तृष्णा व्यपाश्रयः ।
[3]व्यूहो नयः प्रमादश्च परितापः परिग्रहः ॥ ७
संस्कारा ये च लोकेऽस्मिन् प्रवर्तन्ते वृथा पृथक् ।
नृषु नारीषु भूतेषु द्रव्येषु शरणेषु च ॥ ८
सन्तापोऽप्रत्ययश्चैव व्रतानि नियमाश्च ये ।
प्रमदा शीलयुक्ता च सततं मे भवत्विति ॥ ९
स्वधाकारो नमस्कारस् स्वाहाकारो वषट्क्रिया ।
याजनाध्यापने चोभे तथैवाहुः प्रतिग्रहम् ॥ १०
[4]इदं मे स्यादिदं मे स्यात् स्नेहो गुणसमुद्भवः ॥ १०॥
अभिद्रोहस्तथा माया निकृतिर्मान एव च ।
[5]स्तेयं हि सम्परीवादः [6]परितापः प्रजागरः ॥ ११॥

---

1. क-ख-घ—क्लेशात् क्रियो विक्रम एव च । 2. क-ख—भावनः ।
3. क-घ—व्यूढो । ख—व्यूढो नयप्रवादश्च ।
4. क-ख-घ—प्रतिग्रहमिदं मे स्यात् स्नेहो गुणसमुद्भवः । [पाठान्तरम्]
5. क-ख—स्तेयं हिंसाः परीवादः परहिंसा । 6. घ—परहिंसा ।

दम्भो दर्पोऽथ रागश्च भक्तिः प्रीतिः प्रमोदनम् ।
द्यूतं च जनवादश्च सम्बन्धास्स्त्रीकृताश्च ये ॥ १२॥
नृत्तवादित्रगीतानि प्रसङ्गा ये च किञ्चन ।
सर्वे एते गुणा विप्रा राजसास्सम्प्रकीर्तिताः ॥ १३॥
भूतभव्यभविष्याणां भूतानां [1]भुवि भावनाः ।
त्रिवर्गनिरता नित्यं धर्मोऽर्थः काम इत्यपि ॥ १४॥
कामवृत्ताः प्रमोदन्ते सर्वकामसमृद्धिभिः ।
अर्वाक्स्रोतस इत्येते ते जना राजसास्स्मृताः ॥ १५॥
अस्मिँल्लोके प्रमोदन्ते जायमानाः पुनः पुनः ॥ १६
[2]प्रेत्यभाविकमिच्छन्ति ऐहलौकिकमेव च ।
दानानि प्रतिगृह्णन्ति तृप्यन्त्यथ च जुह्वति ॥ १७

रजोगुणा वो बहुधाऽनुकीर्तिता
यथावदुक्तं गुणवृत्तमेव च ।
नरो हि यो वेद गुणानिमान् सदा
स राजसैस्सर्वगुणैर्विमुच्यते ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आश्वमेधिकपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥
॥ ९२ ॥ अनुगीतापर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
[ अस्मिन्नध्याये १८ श्लोकाः ]

---

1. अ—भूतभावनः ।
2. क-ख—प्रेत्यभावकमिच्छन्त ऐहिकं लोकमेव च ।

## ॥ एकचत्वारिंशोऽध्यायः* ॥

ब्रह्मणा महर्षीन् प्रति सत्वगुणकार्यनिरूपणम् ॥ १ ॥

ब्रह्मा—

अतः परं प्रवक्ष्यामि तृतीयं गुणमुत्तमम् ।
सर्वभूतहितं लोके सतां [1]धर्ममनिन्दितम् ॥ १

आनन्दः प्रीतिरुद्रेकः प्राकाश्यं सुखमेव च ।
अकार्पण्यमसंरम्भस् सन्तोषश्श्रद्दधानता ॥ २

क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
अक्रोधश्चानसूया च शौचं दाक्ष्यं पराक्रमः ॥ ३

मुधा ज्ञानं मुधा वृत्तं मुधा सेवा मुधा श्रमः ।
एवं यो युक्तधर्मस्स्यात् सोऽमुत्रानन्त्यमश्नुते ॥ ४

निर्ममो निरहङ्कारो निराशी[2]स्सर्वतस्समः ।
अकामहत इत्येष सतां धर्मस्सनातनः ॥ ५

विस्रम्भो ह्रीस्तितिक्षा च त्यागश्शौचमतन्द्रिता ।
आनृशंस्यमसम्मोहो दया भूतेष्वपैशुनम् ॥ ६

हर्षस्तुष्टिर्विस्मयश्च विनयस्साधुवृत्तिता ।

---

* अ—कोशे नास्त्ययमध्यायः ॥

1. क-ख—धर्ममनुष्ठितम् । 2. क-ख—स्सर्वसम्मतः ।

शान्तिः कर्मविशुद्धिश्च शुभा बुद्धिर्विमोहनम् ।। ७

उपेक्षा ब्रह्मचर्यं च परित्यागश्च सर्वशः ।
निर्ममत्व[1]मनाशीष्ट्वम् अपरिक्षतधर्मता ।। ८

मुधा दानं मुधा यज्ञो मुधाऽधीतं मुधा व्रतम् ।
मुधा प्रतिग्रहश्चैव मुधा धर्मो मुधा तपः ।। ९

एवंवृत्तास्तु ये केचिल्लोकेऽस्मिन् सत्वसंश्रयाः ।
ब्राह्मणा ब्रह्मयोनिस्थास् ते धीरास्साधुदर्शिनः ।। १०

जित्वा सर्वाणि पापानि निश्शोका ह्यजरामराः ।
दिव्यं प्राप्य तु ते धीराः कुर्वते वै ततस्तनूः ।। ११

ईशित्वं च वशित्वं च लघुत्वं चाणुता तथा ।
विकुर्वन्तो महात्मानो देवास्त्रिदिवगा इव ।। १२

ऊर्ध्वस्रोतस इत्येते देवा वैकारिकास्स्मृताः ।
विकुर्वन्तः प्रकृत्या वै दिवं प्राप्तास्ततस्ततः ।। १३

यद्यदिच्छन्ति तत् सर्वं भजन्ते विभजन्ति च ।। १३।।

इत्येतत् सात्विकं वृत्तं कथितं वो द्विजर्षभाः ।
एतद्विज्ञाय विधिवल् लभते यद्यदिच्छति ।। १४।।

प्रकीर्तितास्सत्त्वगुणा विशेषतो
यथावदुक्तं गुणवृत्तमेव च ।

---

3. क—मनाशित्वमुपरिक्षीत ।

नरस्तु यो वेद गुणानिमान् सदा
गुणान् स भुङ्क्ते न गुणैस्तु भुज्यते ॥ १५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

॥ ९२ ॥ अनुगीतापर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

[ अस्मिन्नध्याये १५॥ श्लोकाः ]

---

## ॥ द्विचत्वारिंशोऽध्यायः ॥

ब्रह्मणा महर्षीन् प्रति सत्वादिगुणत्रयनिरूपणम् ॥ १ ॥

---

ब्रह्मा—

न वै शक्या मया वक्तुं पृथक्त्वेनैव सर्वशः ।
अविच्छिन्नानि दृश्यन्ते रजस्सत्वं तमस्तथा ॥ १

अन्योन्येनानुरज्यन्ते त्वन्योन्येनानुजीविनः ।
अन्यो[1]न्यापाश्रयास्सर्वे तथाऽन्योन्यानुवर्तिनः ॥ २

[2]यावत् सत्वं रजस्तावद् वर्तते नात्र संशयः ।
यावत् तमश्च सत्वं च रजस्तावदिहोच्यते ॥ ३

संहत्य कुर्वते यात्रां सहितास्सङ्घचारिणः ।
सङ्घातवृत्तयो ह्येते वर्तन्ते हेत्वहेतुभिः ॥ ४

---

1. क-ख—न्यस्याश्रया । 2. क-ख-घ—यावत् सत्वं तमस्तावद् ।

उद्रेकव्यतिरिक्तानां तेषामन्योन्यवर्तिनाम् ।
वर्तते यद्यथाऽन्यूनं व्यतिरिक्तं च सर्वशः ॥ ५

व्यतिरिक्तं तमो यत्र तिर्यग्भावगतं भवेत् ।
अल्पं तत्र रजो ज्ञेयं सत्वमल्पतरं तथा ॥ ६

उद्रिक्तं तु रजो यत्र मध्यस्रोतोगतं भवेत् ।
अल्पं तत्र तमो ज्ञेयं सत्वं चाल्पतरं ततः ॥ ७

[1]उद्रिक्तं तु यदा सत्वम् ऊर्ध्वस्रोतोगतं भवेत् ।
अल्पं तत्र तमो ज्ञेयं रजश्चाल्पतरं तथा ॥ ८

सत्वं वैकारिकी योनिर् इन्द्रियाणां प्रकाशिका ।
न हि सत्वात् परो भावः कश्चिदन्यो विधीयते ॥ ९

ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणसंयुक्ता यान्त्यधस्तामसा जनाः ॥ १०

तमश्शूद्रे रजः क्षत्रे ब्राह्मणे सत्वमुत्तमम् ।
इत्येवं त्रिषु वर्णेषु विवर्तन्ते गुणास्त्रयः ॥ ११

दूराद्[2]पि च दृश्यन्ते सहितास्सङ्घचारिणः ।
तमस्सत्वं रजश्चैव पृथक्त्वं नानुशुश्रुम ॥ १२

दृष्ट्वा चादित्यमुद्यन्तं कुचोराणां भयं भवेत् ।
अध्वगाः परितप्येरंस् तृष्णार्ता दुःखभागिनः ॥ १३

---

1. अ—अर्धद्वयं नास्ति ।    2. क-ख—दपीह ।

आदित्यस्सत्वमुद्दिष्टः कुचोरास्तु यथा तमः ।
परितापोऽध्वगानां च राजसो गुण उच्यते ॥ १४

प्रकाशस्सत्वमादित्यस् सन्तापो राजसो गुणः ।
उपप्लवस्तु विज्ञेयस् तामसस्तस्य पर्वसु ॥ १५

एवं ज्योतिष्षु सर्वेषु [1]प्रवर्तन्ते गुणास्त्रयः ।
पर्यायेण च वर्तन्ते तत्र तत्र तथा तथा ॥ १६

स्थावरेषु च भूतेषु तिर्यग्भावगतं तमः ।
राजसास्तु विवर्धन्ते स्नेहभावात्तु सात्विकाः ॥ १७

अहस्त्रिधा तु विज्ञेयं त्रिधा रात्रिर्विधीयते ।
मासार्धमासवर्षाणि ऋतव[2]स्सन्धयस्तथा ॥ १८

त्रिधा दानानि दीयन्ते त्रिधा यज्ञः प्रवर्तते ।
त्रिधा लोकास्त्रिधा देवास् त्रिधा [3]विद्यास्त्रिधा गतिः ॥ १९

भूतं भव्यं भविष्यं च धर्मोऽर्थः काम इत्यपि ।
प्राणापानावुदानश्चाप्येत एव त्रयो गुणाः ॥ २०

यत् किञ्चिदिह वै लोके सर्वमेष्वेव तु त्रिषु ।
त्रयो गुणाः प्रवर्तन्ते ह्यव्यक्ता नित्यमेव तु ॥ २१

सत्वं रजस्तमश्चैव गुणसर्गस्सनातनः ।

---

1. क-ख-ग—निवर्तन्ते । 2. अं-ग—ष्षड्विधा ।
3. क-ख-ग—सिद्धिः ।

तदव्यक्तं शिवं नित्यम् अजं योनिं सनातनम् ॥ २२

प्रकृतिर्विकाराः प्रलयं प्रधानं [1]प्रभवाप्ययम् ।

अनुद्रिक्तमनूनं च व्यक्तमप्यचलं ध्रुवम् ॥ २३

सदसच्चैव तत् सर्वम् अव्यक्तं [2]त्रिगुणं स्मृतम् ।

ज्ञेयानि नामधेयानि नरैरध्यात्म[3]चिन्तकैः ॥ २४

अव्यक्तनामानि गुणांश्च तत्त्वतो

यो वेद सर्वाणि गतींश्च केवलाः ।

[4]विमुक्तदेहः प्रविभागतत्त्ववित्

स मुच्यते सर्वगुणैर्निरामयः ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
॥ ९२ ॥ अनुगीतापर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
[ अस्मिन्नध्याये २५ श्लोकाः ]

## ॥ त्रिचत्वारिंशोऽध्यायः ॥

ब्रह्मणा महर्षीन् प्रति महत्तत्त्वनिरूपणम् ॥ १ ॥

ब्रह्मा—

अव्यक्तात् पूर्वमुत्पन्नो महानात्मा महामतिः ।

अनिर्गुणानां सर्वेषां प्रथमस्सर्ग उच्यते ॥ १

1. क—प्रलयाप्ययौ । ख—प्रकृतिर्विकारः प्रलयः प्रधानं प्रभवाप्ययौ ।
2. क-ख-घ—निर्गुणं । 3. क-ख—वित्तमैः ।
4. क-ख—विमुच्य देहं ।

महानात्मा मतिर्विष्णुर् विभुश्शम्भुश्च वीर्यवान् ।
बुद्धिः प्रज्ञोपलब्धिश्च संवित् ख्यातिर्धृतिस्स्मृतिः ॥ २

पर्यायवाचकैश्शब्दैर् महानात्मा विभाव्यते ॥ २॥
तज्ज्ञानाद् ब्राह्मणो विद्वान् [1]प्रमोहं नैव गच्छति ॥ ३

सर्वतःपाणिपादं च सर्वतोक्षिशिरोमुखम् ।
सर्वतश्श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ ४

[2]महान् प्रभाभिः पुरुषस् सर्वस्य हृदि संश्रितः ।
अणिमा लघिमा प्राप्तिर् ईशानो ज्योतिरव्ययः ॥ ५

ये तु बुद्धिमतां लोके सन्यासनिरताश्च ये ।
ध्यानिनो नित्ययोगाश्च सत्यसन्धा जितेन्द्रियाः ॥ ६

ज्ञानवन्तश्च ये केचिद् अलुब्धा जितमन्यवः ।
प्रसन्नमनसो धीरा निर्ममा निरहङ्कृताः ॥ ७
विमुक्तास्सर्व एवैते महत्त्वमुपयान्ति वै ॥ ७॥

आत्मनो महतो वेद यः पुण्यां गतिमुत्तमाम् ।
स धीरस्सर्वलोकेषु न मोहमधिगच्छति ॥ ८॥

विष्णुरेवादिसर्गेषु स्वयम्भूर्भवति प्रभुः ॥ ९

---

1. क-ख-घ—न च मोहं निगच्छति ।
2. क-घ—महाप्रभावश्चित्पुरुषस् सर्वं व्याप्य स तिष्ठति ।
ख—इदमर्धं नास्ति

एवं हि यो वेद गुहाशयं प्रभुं
नवं पुराणं पुरुषं विश्वरूपम् ।
हिरण्मयं बुद्धिमतां परां गतिं
स बुद्धिमान् बुद्धिमतीत्य तिष्ठति ॥* १०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
॥ ९२ ॥ अनुगीतापर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
[ अस्मिन्नध्याये १० श्लोकाः ]

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

ब्रह्मणा महर्षीन् प्रति अहङ्कारतत्त्वनिरूपणम् ॥ १ ॥

य उत्पन्नो महान् पूर्वम् अहङ्कारस्स उच्यते ।
[1]अहमित्येव सम्भूतो द्वितीयस्सर्ग उच्यते ॥ १

अहङ्कारश्च भूतादिर् वैकारिक इति स्मृतः ।
तैजसश्चेतना धातुः प्रजासर्गः प्रजापतिः ॥ २

देवानां प्रभवो देवो मनसश्च त्रिलोककृत् ।
अहमित्येव तत् सर्वम् [2]अभिमन्ता स उच्यते ॥ ३

---

* अ-क-ख-घ—कोशेषु नाध्यायसमाप्तिर्दृश्यते ।
1. क-ख-घ—नास्तीदमर्धम् ॥
2. क-घ—अभिसत्मा । ख—अभिसत्ता ।

अध्यात्म[1]ज्ञानिनां तेषां मुनीनां भावितात्मनाम् ।
स्वाध्याय[2]व्रतसिद्धानाम् एष लोकस्सनातनः ॥ ४

[3]अहङ्कारेणाहरतो गुणानिमान्
भूतादिरेवं सृजते स भूतकृत् ।
वैकारिकस्सर्गमिदं विचेष्टते
स्वतेजसा रञ्जयते जगत् तथा ॥ ५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
॥ ९२ ॥ अनुगीतापर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
[ अस्मिन्नध्याये ५ श्लोकाः ]

## ॥ पञ्चचत्वारिंशोऽध्यायः ॥

ब्रह्मणा महर्षीन् प्रत्यहङ्कारतत्वाद्भूतादिसृष्टिप्रकारकथनम् ॥ १ ॥

ब्रह्मा—

अहङ्कारात् प्रसूतानि महाभूतानि पञ्च वै ।
पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ॥ १

तेषु भूतानि मुह्यन्ति महाभूतेषु पञ्चसु ।
शब्दस्पर्शनरूपेषु रसगन्धक्रियासु च ॥ २

1. क-ख—ज्ञाननित्यानां ।
2. ख-घ—क्रतुनित्यानां । क—कृतनित्यानां ।
3. ख-घ—अहं चकारो लभते गुणानिमान् ?। क—अहंकारणकरभते(?)

महाभूतविकारान्ते प्रलये प्रत्युपस्थिते ।
सर्वप्राणभृतां धीरा महदुत्पद्यते भयम् ॥ ३

यद् यस्माज्जायते भूतं तत्र तत् प्रविलीयते।
लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरम् ॥ ४

ततः प्रलीने सर्वस्मिन् भूते स्थावरजङ्गमे ।
स्मृतिमन्तस्ततो धीरा न लीयन्ते कथञ्चन ॥ ५

शब्दस्स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः ।
क्रियाः कारणयुक्तास्स्युर् अनित्या मोहसंज्ञिताः ॥ ६

लोकप्रजनसंयुक्ता निर्विशेषा ह्यकिञ्चनाः ।
मांसशोणितसङ्घाता अन्योन्यस्योपजीविनः ॥ ७

बहिरात्मान इत्येते क्रूराः कृपणवृत्तयः ॥ ७॥
प्राणापानावुदानश्च समानो व्यान एव च ।
अन्तरात्मेति चाप्येते नियताः पञ्च वायवः ॥ ८॥
वाङ्मनोबुद्धिरित्येभिस् सार्धमष्टात्मकं जगत् ॥ ९

त्वग्घ्राणश्रोत्रचक्षूंषि रसनं वाक् च संयताः ।
विशुद्धं च मनो यस्य बुद्धिश्चाव्यभिचारिणी ॥ १०

अष्टौ यस्याग्नयो ह्येते [1]दहन्त्येवं क्रियास्सदा ।
स तद्ब्रह्म शुभं याति यस्माद्भूयो न विद्यते ॥ ११

---

1. क-ख-ग—न दहन्ति मनस्सदा।

एकादश च यान्याहुर् इन्द्रियाणि विशेषतः ।
अहङ्कारात् प्रसूतानि तानि वक्ष्याम्यहं द्विजाः॥ १२

श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
पादौ पायुरुपस्थं च हस्तौ वाग् दशमी भवेत् ॥ १३

[1]इन्द्रियग्राम इत्येतन्मन एकादशं भवेत् ।
एतद्ग्रामं जयेत् पूर्वं ततो ब्रह्म प्रकाशते ॥ १४

बुद्धीन्द्रियाणि पञ्चाहुः पञ्च कर्मेन्द्रियाणि च ।
श्रोत्रादीनि तु पञ्चाहुर् बुद्धियुक्तानि तत्त्वतः ॥ १५

अविशेषाणि चान्यानि कर्मयुक्तानि तानि तु ।
उभयत्र मनो ज्ञेयं बुद्धिस्तु द्वादशी भवेत् ॥ १६

इत्युक्तानीन्द्रियाण्येतान्येकादश तथा क्रमात् ।
[2]मन्यन्ते कृतमित्येव विजित्यैतानि पण्डिताः ॥ १७

त्रीणि स्थानानि भूतानां चतुर्थं नोपपद्यते ।
स्थलमापस्तथाऽऽकाशं जन्म चापि चतुर्विधम् ॥ १८

अण्डजोद्भिज्जसंस्वेदजरायुजमथापि च ।
चतुर्धा जन्म इत्येतद् भूतग्रामस्य वक्ष्यते ॥ १९

अचराण्यपि भूतानि खेचराणि तथैव च ।

---

1. ब—नास्तीदमर्धम् ।
2. क-ख-ब—मन्यते कृत इत्येव विभ्दन् वै मनसि स्थितः ।

अण्डजानि विजानीयात् सर्वांश्चैव सरीसृपान् ॥　२०
स्वेदजाः कृमयः प्रोक्ता जन्तवश्च तथाविधाः ।
जन्म द्वितीयमित्येतज् जघन्यतरमुच्यते ॥　२१
भित्त्वा तु पृथिवीं यानि जायन्ते कालपर्ययात् ।
उद्भिज्जानीति तान्याहुर् भूतानि द्विजसत्तमाः ॥　२२
द्विपादबहुपादानि तिर्यग्गतमतीनि च ।
जरायुजानि भूतानि विततान्यपि सत्तमाः ॥　२३
विविधानीह विज्ञेया ब्रह्म योनिस्सनातनम् ।
तपः कर्म च यत् पुण्यम् इत्येष विदुषां नयः ॥　२४
द्विविधं कर्म विज्ञेयम् इज्या दानं च तन्मखे ।
ज्ञानं स्वाध्यायजननम् इति वृद्धानुशासनम् ॥　२५
एतद्यो वेद विधिवत् स मुक्तस्स्याद्द्विजर्षभाः ।
विमुक्तस्सर्वपापेभ्य इति चैव निबोधत ॥　२६
आकाशं प्रथमं भूतं श्रोत्रमध्यात्ममिष्यते ।
अधिभूतं तथा शब्दो दिशश्चात्राधिदैवतम् ॥　२७
[1]द्वितीयं मारुतं भूतं त्वगध्यात्मं च विश्रुतम् ।
स्प्रष्टव्यमधिभूतं तु विद्युत् तत्राधिदैवतम् ॥　२८
तृतीयं ज्योतिरित्याहुश् चक्षुरध्यात्ममिष्यते ।

---

1. ख—इतः द्वादशार्धानि न सन्ति।

अधिभूतं ततो रूपं सूर्यस्तत्राधिदैवतम् ॥ २९

[1]चतुर्थमापो विज्ञेयं जिह्वा चाध्यात्ममिष्यते ।
अधिभूतं रसश्चात्र सोमस्तत्राधिदैवतम् ॥ ३०

पृथिवी पञ्चमं भूतं घ्राणमध्यात्ममिष्यते ।
अधिभूतं ततो गन्धो वायुस्तत्राधिदैवतम् ॥ ३१

एषु पञ्चसु भूतेषु चतुष्टयविधिस्स्मृतः ॥ ३१॥
अतः परं प्रवक्ष्यामि सर्वं त्रिविधमिन्द्रियम् ॥ ३२

पादावध्यात्ममित्याहुर् ब्राह्मणास्तत्त्वदर्शिनः ।
अधिभूतं तु गन्तव्यं विष्णुस्तत्राधिदैवतम् ॥ ३३

[2]अवाग्गतिरपानश्च पायुरध्यात्ममिष्यते ।
अधिभूतं विसर्गश्च मित्रस्तत्राधिदैवतम् ॥ ३४

प्रजनस्सर्वभूतानाम् उपस्थोऽध्यात्ममिष्यते ।
अधिभूतं तथा शुक्लं दैवतं च प्रजापतिः ॥ ३५

हस्तावध्यात्ममित्याहुर् अध्यात्मविदुषो जनाः ।
अधिभूतं तु कर्माणि शक्रस्तत्राधिदैवतम् ॥ ३६

वैश्वदेवं मनः पूर्वं वागध्यात्ममिहोच्यते ।
वक्तव्यमधिभूतं च वह्निस्तत्राधिदैवतम् ॥ ३७

अध्यात्मं मन इत्याहुः पञ्चभूतानुकारकम् ।

---

1. घ—इतः श्लोकद्वयं नास्ति    2. अ—अर्धद्वयं नोपलभ्यते ।

अधिभूतं च मन्तव्यं चन्द्रमाश्चाधिदैवतम् ॥ ३८

अध्यात्मं बुद्धिरित्याहुष् षडिन्द्रियविचारिणी ।
अधिभूतं [1]च विज्ञेयं महत् तत्राधिदैवतम् ॥ ३९

यथावदध्यात्मविधिर् एष वः कीर्तितो मया ।
ज्ञानमस्य हि धर्मज्ञाः प्राप्तं बुद्धिमतामिह ॥ ४०

इन्द्रियाणीन्द्रियार्थाश्च महाभूतानि पञ्च च ।
सर्वाण्येतानि सन्धाय मनसा सम्प्रधारयेत् ॥ ४१

क्षीणे मनसि सर्वस्मिन् न जन्मसुखमिष्यते ।
ज्ञानसम्पन्नसत्त्वानां तत् सुखं विदुषां हितम् ॥ ४२

अतः परं प्रवक्ष्यामि सूक्ष्मभावकरं शिवम् ।
निवृत्तं सर्वभूतेषु मृदुना दारुणेन वा ॥ ४३

गुणागुणमनासङ्गम् एकचर्यमनन्तरम् ।
एतद्ब्राह्मणजं वृत्तम् आहुरेकपदं सुखम् ॥ ४४

विद्वान् कूर्म इवाङ्गानि कामान् संहृत्य सर्वशः ।
विरजास्सर्वतो मुक्तो यो नरस्स सुखी सदा ॥ ४५

कामानात्मनि संयम्य क्षीणतृष्णस्समाहितः ।
सर्वभूतसुहृन्मैत्रो ब्रह्मभूयाय कल्पते ॥ ४६

इन्द्रियाणां निरोधेन सर्वेषां विषयैषिणाम् ।

---

1. अ-ब—सु विज्ञेयम् अहस्तथा ।

मुने[1]र्जनपदत्यागाद् अध्यात्माग्निस्समिध्यते ॥ ४७
यथाऽग्निरिन्धनैरिद्धो महाज्योतिः प्रकाशते ।
तथेन्द्रियनिरोधेन महानात्मा प्रकाशते ॥ ४८
यदा पश्यति भूतानि प्रसन्नात्माऽऽत्मनो हृदि ।
स्वयञ्ज्योतिस्तदा सूक्ष्मात् सूक्ष्ममाप्नोत्यनुत्तमम् ॥ ४९
अग्नी रूपं [2]रसं स्रोतो वातस्स्पर्शनमेव च ।
मही [3]गन्धधरा घ्राणम् आकाशश्श्रवणं तथा ॥ ५०
दृश्यमादित्यमेवाहुर् अध्यात्मविदुषो जनाः ॥ ५०॥
रोगशोकसमाविष्टं पञ्चस्रोतस्समावृतम् ।
पञ्चभूतसमायुक्तं नवद्वारं द्विजोत्तमाः ॥ ५१॥
रजस्वलमथादृश्यं त्रिगुणं [4]सप्तधातुकम् ।
संसर्गाभिरतं मूढं शरीरमिति धारणा ॥ ५२॥
दुश्चरं जीवलोकेऽस्मिन् सत्वं प्रति समाश्रितम् ।
एतदेव हि लोकेऽस्मिन् कालचक्रं प्रवर्तते ॥ ५३॥
एतन्महार्णवं घोरम् अगाधं मोहसंज्ञितम् ।
विसृजन् सङ्क्षिपंश्चैव मोहयन् स्वापयञ्जगत् ॥ ५४॥
कामक्रोधौ भयं मोहम् अभिद्रोहमथानृतम् ।
इन्द्रियाणां निरोधेन सदा त्यजति दुस्त्यजान् ॥ ५५॥

---

1. क-ख—र्जातपरित्या । 2. क—मनः । ख—मजः ।
3. क-ख—पङ्कधरा घ्राणमाकाशं । 4. क-ख—सप्तधात्मकम् ।

यस्यैते निर्जिता लोके त्रिगुणाः पञ्च धातवः ।
व्योम्नि तस्य परं स्थानम् अनन्त[1]मुपलभ्यते ॥ ५६॥
कालकूलामपारान्तां मनस्स्रोतोभयावहाम् ।
नदीं दुर्गह्रदां तीर्णः कामक्रोधावुभौ जयेत् ॥ ५७॥
[2]सर्वदोषविनिर्मुक्तस् ततः पश्यति तत् परम् ।
मनो मनसि सन्धाय पश्यत्यात्मानमात्मनि ॥ ५८॥
[3]सर्ववित् सर्वभूतेषु द्रक्ष्यत्यात्मानमात्मनि ॥ ५९
एकधा बहुधा चैव विकुर्वाणस्ततस्ततः ।
ध्रुवं पश्यति रूपाणि दीपाद्दीपशतं यथा ॥ ६०
स वै विष्णुश्च रुद्रश्च इन्द्राग्नी च प्रजापतिः ।
स हि धाता विधाता च स प्रभुस्सर्वतोमुखः ॥ ६१
हृदयं सर्वभूतानां महानात्मा प्रकाशते ॥ ६१॥

तं विप्रसङ्घाश्च सुरासुराश्च
यक्षाः पिशाचाः पितरो वयांसि ।
रक्षोगणा भूतगणाश्च सर्वे
महर्षयश्चैव सदा स्तुवन्ति ॥ ६२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
॥ ९२ ॥ अनुगीतापर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
[ अस्मिन्नध्याये ६२॥ श्लोकाः ]

---

1. अ—मथ लक्ष्यते ।    2. ख—स सर्वदोषनिर्मुक्तस्तपः ।
3. अ—इदमर्धं न दृश्यते ।

## ॥ षट्चत्वारिंशोऽध्यायः ॥

ब्रह्मणा महर्षीन् प्रति मनुष्येषु क्षत्रियाणां रजोगुणकार्यबलप्रधानतया तेषां सत्वप्रधानब्राह्मणरक्षणस्य कर्तव्यत्वकथनप्रसङ्गेन तत्तज्जातिश्रेष्ठवस्तुकथनम् ॥ १ ॥ तथाऽहिंसादिधर्मादिप्रतिपादनम् ॥ २ ॥

ब्रह्मा—

मनुष्याणां तु राजन्यः क्षत्रियो मध्यमो गुणः ।
कुञ्जरो वाहनानां तु सिंहश्चारण्यवासिनाम् ॥ १

अविः पशूनां सर्वेषाम् आखुश्च बिलवासिनाम् ।
गवां गोवृषभश्चैव स्त्रीणां पुरुष एव च ॥ २

न्यग्रोधो जम्बुवृक्षश्च पिप्पलश्शाल्मलिस्तथा ।
शिंशुपा मेषश्रृङ्गश्च तथा कीचकवेणवः ॥ ३

एते द्रुमाणामधिका लोकेऽस्मिन् नात्र संशयः ॥ ३॥

हिमवान् पारियात्रश्च सह्यो विन्ध्यस्त्रिकूटवान् ।
श्वेतो नीलश्च भासश्च [1]राष्ट्रवांश्चैव पर्वतः ॥ ४॥

शुभस्कन्धो महेन्द्रश्च माल्यवान् पर्वतस्तथा ।
एते पर्वतराजानो गणानां मरुतस्तथा ॥ ५॥

सूर्यो ग्रहाणामधिपो नक्षत्राणां च चन्द्रमाः ।
यमः पितॄणामधिपस् सरितामथ सागरः ॥ ६॥

अम्भसां वरुणो राजा सत्त्वानां मित्र उच्यते ॥ ७

---

1. क-ख—काष्ठवांश्चैव पर्वतः ।

[1]अर्कोऽधिपतिरुष्णानां ज्योतिषामिन्दुरुच्यते ।
अग्निर्भूतपतिर्नित्यं ब्राह्मणानां बृहस्पतिः ॥		८

ओषधीनां पतिस्सोमो विष्णुर्बलवतां वरः ।
त्वष्टाऽधिराजो रूपाणां पशूनामीश्वरश्शिवः ॥		९

दक्षिणानां तथा यज्ञो [2]वेदानां साम एव च ।
दिशामुदीची विप्राणां सोमो राजा प्रतापवान् ॥		१०

कुबेरस्सर्वयक्षाणां देवतानां पुरन्दरः ।
एष भूताधिकस्सर्गः प्रजानां च प्रजापतिः ॥		११

सर्वेषामेव भूतानाम् अहं ब्रह्ममयो महान् ।
भूतं परतरं मत्तो विष्णोर्वाऽपि न विद्यते ॥		१२

राजाधिराजस्सर्वेषां विष्णुर्ब्रह्ममयो महान् ।
ईश्वरं तं विजानीमस् स विभुस्स प्रजापतिः ॥		१३

नरकिन्नरयक्षाणां गन्धर्वोरगरक्षसाम् ।
देवदानवनागानां सर्वेषामीश्वरो हि सः ॥		१४

भद्रादेवानुयातानां सर्वासां वामलोचना ।
माहेश्वरी महादेवी प्रोच्यते पार्वती [3]त्रिधा ॥		१५

उमां देवीं विजानीत नारीणामुत्तमां शुभाम् ।

---

1. अ—इदमर्धं नोपलभ्यते ।		2. क-ख-घ—वेदानामृच ।
3. क—तु या । ख-घ—ति या ।

रतीनां वसुमत्यस्तु स्त्रीणामप्सरसस्तथा ॥ १६

धर्मकामाश्च राजानो ब्राह्मणा धर्मलक्षणाः ।
तस्माद्राजा द्विजातीनां प्रयतेतेह रक्षणे ॥ १७

राज्ञां हि विषये येषाम् अवसीदन्ति साधवः ।
हीनास्ते स्वगुणैस्सर्वैः [1]प्रेत्यावाङ्मार्गगामिनः ॥ १८

राज्ञां तु विषये येषां साधवः परिरक्षिताः ।
तेऽस्मिँल्लोके प्रमोदन्ते प्रेत्य चानन्त्यमेव च ॥ १९

प्राप्नुवन्ति महात्मान इति वित्त द्विजर्षभाः ॥ १९॥
अत ऊर्ध्वं प्रवक्ष्यामि नियतं धर्मलक्षणम् ॥ २०

अहिंसालक्षणो धर्मो हिंसा चाधर्मलक्षणा ।
प्रकाशलक्षणा देवा मनुष्याः कर्मलक्षणाः ॥ २१

शब्दलक्षणमाकाशं वायुस्तु स्पर्शलक्षणः ।
ज्योतिषां लक्षणं रूपम् आपश्च रसलक्षणाः ॥ २२

धरणी सर्वभूतानां पृथिवी गन्धलक्षणा ।
स्वरव्यञ्जनसंस्कारा भारती सत्यलक्षणा ॥ २३

मनसो लक्षणं चिन्ता तथोक्ता बुद्धिरन्वयात् ।
मनसा चिन्तयानोऽर्थान् बुद्ध्या चैव व्यवस्यति ॥ २४

बुद्धिर्हि व्यवसायेन लक्ष्यते नात्र संशयः ।

---

1. क—प्रेत्यवामात्य । ख--प्रेत्यवामार्गकामिनः ।

लक्षणं महतो ध्यानम् अव्यक्तं साम्यलक्षणम् ॥ २५

[1]प्रवृत्तिलक्षणो योगो ज्ञानं सन्न्यासलक्षणम् ।
तस्माज्ज्ञानं पुरस्कृत्य सन्न्यसेदिह बुद्धिमान् ॥ २६

सन्न्यासी ज्ञानसंयुक्तः प्राप्नोति परमां गतिम् ।
अतीतद्वन्द्वमभ्येति तमोमृत्युजरातिगम् ॥ २७

धर्मलक्षणसंयुक्तम् उक्तं वो विधिवत् तथा ॥ २७॥

गुणानां ग्रहणं सम्यग् [2]वक्ष्याम्यहमतः परम् ॥ २८

पार्थिवो यस्तु गन्धो वै घ्राणेनैव स गृह्यते ।
घ्राणस्थश्च तथा वायुर् गन्धज्ञाने विधीयते ॥ २९

अबाश्रयो रसो नित्यं जिह्वया स तु गृह्यते ।
जिह्वास्थश्च तथा सोमो रसज्ञाने विधीयते ॥ ३०

[3]ज्योतिषश्च गुणो रूपं चक्षुषा तच्च गृह्यते ।
चक्षुस्थश्च तथाऽऽदित्यो रूपज्ञाने विधीयते ॥ ३१

वायव्यश्च तथा स्पर्शस् त्वचा प्रज्ञायते च सः ।
त्वक्स्थश्चैव तथा वायुस् स्पर्शज्ञाने विधीयते ॥ ३२

आकाशस्य गुणो घोषश् श्रोत्रेण स तु गृह्यते ।
श्रोत्रस्थाश्च दिशस्सर्वाश् शब्दज्ञाने प्रकीर्तिताः ॥ ३३

---

1. अ—इदमर्धं नास्ति  2. क-ख—वक्ष्ये तु महतः ।
3. घ—इतः श्लोकद्वयं नास्ति ।

मनसस्तु गुणश्चिन्ता प्रज्ञया सा तु गृह्यते ।
हृदिस्थश्चेतनाधातुर् मनोज्ञाने विधीयते ॥ ३४

बुद्धिरध्यवसायेन ध्यानेन च महांस्तथा ।
निश्चित्य ग्रहणं नित्यम् अव्यक्तं नात्र संशयः ॥ ३५

[1]अलिङ्गग्रहणो नित्यः क्षेत्रज्ञो निर्गुणात्मकः ।
तस्मादलिङ्गः क्षेत्रज्ञः केवलं ज्ञानलक्षणः ॥ ३६

अव्यक्तं क्षेत्रमुद्दिष्टं गुणानां प्रभवाप्ययः ।
सदा पश्याम्यहं लीनं [2]सृज्यमानमचेतनम् ॥ ३७

[3]पुरुषस्तद्विजानीते तस्मात् क्षेत्रज्ञ उच्यते ।
गुणवृत्तं तथा कृत्स्नं क्षेत्रज्ञः परिपश्यति ॥ ३८

आदिमध्यावसानं तं सृज्यमानमचेतनम् ।
न गुणा विदुरात्मानं सृज्यमानाः पुनः पुनः ॥ ३९

न सत्यं वेत्ति वै कश्चित् क्षेत्रज्ञस्त्वेव वेत्ति वै ।
गुणानां गुणभूतानां यत् परं परतो महत् ॥ ४०

तस्माद्गुणांश्च तत्त्वं च परित्यज्येह तत्त्ववित् ।
क्षीणदोषो गुणान् हित्वा क्षेत्रज्ञं प्रविशत्यथ ॥ ४१

---

1. ग—नास्तीदमर्धम् ॥
2. अ—विजानामि शृणोमि च ।
3. ग—इतः श्लोकद्वयं नास्ति क—अर्धत्रयं नास्ति

निर्द्वन्द्वो निर्नमस्कारो निस्स्वधाकार एव च ।
अचलश्चानिकेतश्च क्षेत्रज्ञस्स परो भुवि ॥* ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

॥ ९२ ॥ अनुगीतापर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
[ अस्मिन्नध्याये ४२ श्लोकाः ]

---

## ॥ सप्तचत्वारिंशोऽध्यायः ॥

---

ब्रह्मणा महर्षीन् प्रति स्वस्वजातिषु श्रेष्ठवस्तुप्रतिपादनपूर्वकं ज्ञानस्याविनाशित्वकथनेन तस्यैव श्रेयस्साधनत्वोक्तिः ॥ १ ॥

---

ब्रह्मा—

यदादिमध्यपर्यन्तं ग्रहणोपायमेव च ।
नामलक्षणसंयुक्तं सर्वं वक्ष्यामि तत्त्वतः ॥ १

अहः पूर्वं ततो रात्रिर् मासाश्शुक्लादयस्स्मृताः ।
श्रविष्ठादीनि ऋक्षाणि ऋतवश्शिशिरादयः ॥ २

भूमिरादिस्तु गन्धानां रसानामाप एव च ।
रूपाणामादिरग्निस्तु स्पर्शादिर्वायुरुच्यते ॥ ३

शब्दस्यादिस्तथाऽऽकाशम् एष भूतगुणोत्तरः ॥ ३॥

---

* अ—कोशे नात्राध्यायसमाप्तिर्दृश्यते ।

अतः परं प्रवक्ष्यामि भूतानामादिमुत्तमम् ॥ ४

आदित्यो ज्योतिषामादिर् अग्निर्भूतादिरुच्यते ।
सावित्री सर्वविद्यानां देवतानां प्रजापतिः ॥ ५

ओङ्कारस्सर्ववेदानां वचसां प्राण उच्यते ।
इत्यस्मिन् निधनं लोके सर्वं सावित्र्यनूच्यते ॥ ६

गायत्री च्छन्दसामादिः पशूनामज उच्यते ।
[1]गावश्चतुष्पदामादिर् मनुष्याणां द्विजातयः ॥ ७

श्येनश्च पक्षिणामादिर् यज्ञानां हुतमुत्तमम् ।
प्रसर्पिणां तु सर्वेषां ज्येष्ठस्सर्पो द्विजोत्तमाः ॥ ८

कृतमादिर्युगानां च सर्वेषां नात्र संशयः ।
हिरण्यं सर्वरत्नानाम् ओषधीनां यवास्तथा ॥ ९

सर्वेषां भक्ष्यभोज्यानाम् अन्नं परममुच्यते ।
द्रवाणां चैव सर्वेषां पेयानामाप उत्तमाः ॥ १०

स्थावराणां च भूतानां सर्वेषामविशेषतः ।
ब्रह्मवृक्षस्सदा पुण्यः प्लक्षः प्रथमजस्स्मृतः ॥ ११

अहं प्रजापतीनां च सर्वेषां नात्र संशयः ।
मम विष्णुरचिन्त्यात्मा स्वयम्भूरिति संस्मृतः ॥ १२

पर्वतानां महामेरुस् सर्वेषामग्रजस्स्मृतः ।
दिशां चोपदिशां चोर्ध्वं दिग्जाता प्रथमा तथा ॥ १३

---

1. अ—इदमर्धं न दृश्यते ।

तथा गङ्गा नदीनां तु सर्वासामग्रजा स्मृता ।
सरसां सोदपानानां सर्वेषां सागरस्स्मृतः ॥　　१४

देवदानवभूतानां पिशाचोरगरक्षसाम् ।
नरकिन्नरयक्षाणां सर्वेषामीश्वरः प्रभुः ॥　　१५

आदिर्विश्वस्य जगतो विष्णुर्ब्रह्ममयो महान् ।
[1]भूतं परतरं तस्मात् त्रैलोक्ये नेह विद्यते ॥　　१६

आश्रमाणां च सर्वेषां गार्हस्थ्यं नात्र संशयः ।
लोकानामादिरव्यक्तस् सर्वस्यान्तस्तथैव च ॥　　१७

अहान्यस्तमयान्तानि उदयान्ता च शर्वरी ।
सुखस्यान्तं तथा दुःखं दुःखस्यान्तं तथा सुखम् ॥　　१८

सर्वे क्षयान्ता निचयाः पतनान्तास्समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥　　१९

सर्वं कृतं विनाशान्तं जातस्य मरणं ध्रुवम् ।
अशाश्वतं हि लोकेऽस्मिन् सदा स्थावरजङ्गमम् ॥　　२०

इष्टं दत्तं तपोऽधीतं व्रतानि नियमाश्च ये ।
सर्वमेतद्विनाशान्तं ज्ञानस्यान्तो न विद्यते ॥　　२१

तस्माज्ज्ञानेन शुद्धेन प्रसन्नात्मा समाहितः ।
निर्ममो निरहङ्कारो मुच्यते सर्वपाप्मभिः ॥　　२२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
॥ ९२ ॥ अनुगीतापर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
[ अस्मिन्नध्याये २२ श्लोकाः ]

---

1. अ—ततः परतरं नास्ति त्रिषु लोकेषु विद्यते ।

## ॥ अष्टचत्वारिंशोऽध्यायः ॥

ब्रह्मणा महर्षीन् प्रति शरीरस्य कालचक्रवत् सर्वनाशकत्वोक्तिपूर्वकं गृहस्थधर्मानुष्ठानस्य श्रेयस्साधनत्वोक्तिः ॥ १ ॥

---

ब्रह्मा—

बुद्ध्याधारं जनस्तम्भम् इन्द्रियाणामवर्धनम् ।
महाभूतारविष्कम्भं निमेषपरिवेषणम् ॥ १

जराशोकसमाविष्टं व्याधिव्यसनपञ्जरम् ।
देशकालविचारीदं श्रमव्यायामनिस्स्वनम् ॥ २

अहोरात्रपरिक्षेपं शीतोष्णपारिमण्डलम् ।
सुखदुःखसमश्लेषं क्षुत्पिपासावकीलनम् ॥ ३

छायातपविलेखं च निमेषोन्मेषविह्वलम् ।
शोकमोहजराकीर्णं वर्तमानमचेतनम् ॥ ४

मासार्धमासगुणितं विषमं लोकसञ्चरम् ।
तमोनियतपङ्कं च रजोवेगप्रवर्तकम् ॥ ५

सत्त्वालङ्कारदीप्तं च गुणसङ्घातमण्डलम् ।
सारविग्रहनाभीकं शोकसङ्घातवर्तकम् ॥ ६

क्रियाकारणसंयुक्तं रागविस्तारमायतम् ।
लोभेप्सापरसङ्घात [1]वि।वित्तज्ञानसम्भवम् ॥ ७

---

1. क—विद्धिचिन्ता । ख—विचिन्ताज्ञान ।

भयमोहपरीवारं भूतसम्मोहकारकम् ।
आनन्दप्रीतिचारं च कामक्रोधपरिग्रहम् ॥ ८

महदादिविशेषान्तम् असक्तं प्रभवाप्ययम् ।
मनोजवनमश्रान्तं कालचक्रं प्रवर्तते ॥ ९

एतद्द्वन्द्वसमायुक्तं कालचक्रमचेतनम् ।
विसृजन् सङ्क्षिपंश्चापि बोधयन् स्वापयन् जगत् ॥ १०

कालचक्रप्रवृत्तिं च निवृत्तिं चैव तत्त्वतः ।
यस्तु वेद नरो नित्यं न स भूतेषु मुह्यति ॥ ११

विमुक्तस्सर्वसङ्क्लेशैस् सर्वद्वन्द्वातिगो मुनिः ।
विमुक्तस्सर्वपापेभ्यः प्राप्नोति परमां गतिम् ॥ १२

गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ।
चत्वार आश्रमाः प्रोक्तास् सर्वे गार्हस्थ्यमूलकाः ॥ १३
यः कश्चिदिह लोके च ह्याश्रमस्सम्प्रकीर्तितः ।
तस्यान्तगमनं ज्ञेयं कीर्तिरेषा सनातनी ॥ १४

संस्कारैस्संकृतः पूर्वं यथावच्चरितव्रतः ।
जातौ गुणविशिष्टायां समावर्तेत वेदवित् ॥ १५

स्वदारनिरतो दान्तश् शिष्टाचारो जितेन्द्रियः ।
पञ्चभिश्च महायज्ञैश् श्रद्दधानो यजेदिह ॥ १६
देवतातिथिशिष्टाशी निरतो वेदकर्मसु ।

इज्याप्रदानयुक्तश्च यथाशक्ति यथाविधि ॥ १७

न पाणिपादचपलो न नेत्रचपलो मुनिः ।
न च वागङ्गचपल इति शिष्टस्य गोचरः ॥ १८

नित्यं यज्ञोपवीती स्याच् छुक्लवासाश्शुचिव्रतः ।
नियतो दमदानाभ्यां सदा शिष्टैश्च संवदन् ॥ १९

जितशिश्नोदरो मैत्रश् शिष्टाचारसमाहितः ।
वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् ॥ २०

त्रीणि धारयते नित्यं कमण्डलुमतन्द्रितः ॥ २०॥

एकमाचमनार्थाय एकं वै पादधावनम् ।
एकं शौचविधानार्थम् इत्येतत् त्रितयं तथा ॥ २१॥

[1]अधीत्याध्यापनं कुर्यात् तथा यजनयाजने ।
दानं प्रतिग्रहं चैव षड्गुणां वृत्तिमाचरेत् ॥ २२॥

त्रीणि कर्माणि यानीह ब्राह्मणानां तु जीविकाः ।
याजनाध्यापने चोभे शुद्धाच्चापि प्रतिग्रहः ॥ २३॥

अवशेषाणि चान्यानि त्रीणि कर्माणि यान्युत ।
दानमध्ययनं यज्ञो धर्मयुक्तानि तानि तु ॥ २४॥

तेष्वप्रमादं कुर्वीत त्रिषु कर्मसु कर्मवित् ।
दान्तो मैत्रः क्षमायुक्तस् सर्वभूतेषु वै मुनिः ॥ २५॥

---

1. क-ख-घ—अतीत्याध्ययनं कुर्यात् ।

सर्वमेतद्यथाशक्ति विप्रो निर्वर्तयेच्छुचिः ।
एवं युक्तो जयेत् स्वर्गं गृहस्थस्संशितव्रतः* ॥ २६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
॥ ९२ ॥ अनुगीतापर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
[ अस्मिन्नध्याये २६॥ श्लोकाः ]

## ॥ एकोनपञ्चाशोऽध्यायः ॥

ब्रह्मणा महर्षीन् प्रति ब्रह्मचारिवनस्थधर्मनिरूपणपूर्वकं तदनुष्ठानस्य श्रेयस्साधनत्वोक्तिः ॥ १ ॥ सन्न्यासिधर्मनिरूपणं च ॥ २ ॥

ब्रह्मा—

एवमेतेन मार्गेण पूर्वोक्तेन यथाविधि ।
अधीतवान् यथाशक्ति तथैव ब्रह्मचर्यवान् ॥ १

स्वधर्मनिरतो विद्वान् सर्वेन्द्रिययतो मुनिः ।
गुरोः प्रियहिते युक्तस् सत्यधर्मपरश्शुचिः ॥ २

गुरुणा समनुज्ञातो भुञ्जीतान्नमकुत्सयन् ।
हविष्यभैक्ष्यभुग्वाऽपि स्थानासनविहारवान् ॥ ३

द्विकालमग्निं जुहुयाच् छुचिर्भूत्वा समाहितः ।
धारयेत सदा दण्डं बैल्वं पालाशमेव वा ॥ ४

* अ—कोशे नात्राध्यायसमाप्तिर्दृश्यते ॥

क्षौमं कार्पासिकं वाऽपि मृगाजिनमथापि वा ।
सर्वकाषायरक्तं स्याद् वासो वाऽपि द्विजस्य ह ॥ ५

मेखला च भवेन्मौञ्जी जटी नित्योदकी तथा ।
यज्ञोपवीती स्वाध्यायी अलुप्तनियमव्रतः ॥ ६

पूताभिस्सपवित्राभिर् अद्भिर्दैवततर्पणम् ।
भावेन नियमं कुर्वन् ब्रह्मचारी प्रशस्यते ॥ ७

एवं युक्तो जयेत् स्वर्गम् ऊर्ध्वरेतास्समाहितः ।
न संसरति जातीषु परमं स्थानमाश्रितः ॥ ८

संस्कृतस्सर्वसंस्कारैस् तथैव ब्रह्मचर्यवान् ।
ग्रामान्निष्क्रम्य चारण्यं मुनिः प्रव्रजितो वसेत् ॥ ९

चर्मवल्कलसंवीतस् सायं प्रातरुपस्पृशेत् ।
अरण्यगोचरो नित्यं न ग्रामं प्रविशेत् पुनः ॥ १०

अर्चयन्नतिथीन् काले दत्त्वा चापि प्रतिश्रयम् ।
फलपत्रचयैर्वन्यैश् श्यामाकेन च वर्तयन् ॥ ११

स नित्यमुदकं वायुं सर्वं वाऽन्यं तथा तृणम् ।
प्राश्नीयादानुपूर्व्येण यथादीक्षमतन्द्रितः ॥ १२

आमूलफलशाकाद्यैर् अर्चेदतिथिमागतम् ।
यद्भक्षस्स्यात् ततो दद्याद् भिक्षां नित्यमतन्द्रितः ॥ १३

देवतातिथिपूजां च कृत्वा भुञ्जीत वाग्यतः ।

अस्कन्दितमनाश्चैव लध्वाशी देवताश्रयः ॥ १४

दान्तो मैत्रः क्षमायुक्तः केशश्मश्रूणि धारयेत् ।
जुह्वन् स्वाध्यायशीलश्च सत्यधर्मपरायणः ॥ १५

त्यक्तदेहस्सदा दक्षो वने नित्यं समाहितः ।
एवं युक्तो व्रजेत् स्वर्गं वानप्रस्थो जितेन्द्रियः ॥ १६

गृहस्थो ब्रह्मचारी च वानप्रस्थोऽपि वा पुनः ।
य इच्छेन्मोक्षमादातुम् उत्तमां वृत्तिमाव्रजेत् ॥ १७

अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत् ।
[1]सर्वभूतहितो मैत्रस् सर्वेन्द्रिययतो मुनिः ॥ १८

अयाचितमसङ्कृप्तम् उपपन्नं यदृच्छया ।
जोषयेत सदा भोज्यं ग्रासमागतमस्पृहः ॥ १९

यात्रामात्रं च भुञ्जीत केवलं प्राणयात्रिकम् ।
धर्मलब्धं तथाऽश्नीयान्न काममनुवर्तयेत् ॥ २०

ग्रासादाच्छादनादन्यन्न गृह्णीयात् कदाचन ।
यावदाहारयेत् तावत् प्रतिगृह्णीत नान्यथा ॥ २१

परेभ्यो न प्रतिग्राह्यं न चादेयं कथञ्चन ।
दद्यात्तु सर्वभूतानां संविभागं समाचरेत् ॥ २२

नाददीत परस्वानि न गृह्णीयान्न याचयेत् ।

---

1. अ—अर्धद्वयं नास्ति

न किञ्चिद्विषयं भुक्त्वा तस्मै संस्पृहयेत् पुनः ॥ २३

मृदमापस्तथा स्नानं पत्रं पुष्पं फलानि च ।
असंवृतानि गृह्णीयात् प्रवृत्तानि ह कार्यवान् ॥ २४

न शिल्पजीविकां जीवेद् [1]द्विरन्नं नैव कारयेत् ।
[2]न द्वेष्टा नोपदेष्टा च भवेद्धर्मपुरस्कृतः ॥ २५

[3]श्रद्धापूतानि भुञ्जीत निमित्तानि विवर्जयेत् ।
मुधावृत्तिरसक्तिश्च सर्वभूतैरसंधृतः ॥ २६

कृत्वा मौनं चरेद्भैक्ष्यं विधूमे भुक्तवज्जने ।
वृत्ते शरावसम्पाते भैक्ष्यं लिप्सेत मोक्षवित् ॥ २७

न लाभे च प्रहृष्येत नालाभे विमना भवेत् ।
मात्राशी कालमाकाङ्क्षंश् चरेद्भैक्ष्यं समाहितः ॥ २८

लाभं साधारणं नेच्छेन्न भुञ्जीताभिपूजितः ।
अभिपूजितलाभाद्धि विजुगुप्सेत पण्डितः ॥ २९

शुक्तान्यम्लानि तिक्तानि कषायकटुकानि च ।
नास्वादयीत भुञ्जानो रसांश्च मधुरांस्तथा ॥ ३०

यात्रामात्रं च भुञ्जीत केवलं प्राणधारणम् ।
असंरोधेन भूतानां वृत्तिं लिप्सेत मोक्षवित् ॥ ३१

---

1. क-ख-घ—दुरन्नं कामयेन्न च ।
2. क—सर्वेषां नोपदेष्टा च ।    3. क—शुद्धभूतानि ।

न चान्यमनुवीक्षेत भिक्षमाणः कथञ्चन ।
न सन्निकाशयेद्धर्मं विविक्ते विरजाश्चरेत् ॥ ३२

शून्यागारमरण्यं वा वृक्षमूलं नदीं तथा ।
[1]प्रतिश्रयार्थं सेवेत पार्वतीं वा पुनर्गुहाम् ॥ ३३

ग्रामैकरात्रिको ग्रीष्मे वर्षास्वेकत्र वा वसेत् ।
अध्वा सूर्येण निर्दिष्टः कीटवच्च चरेन्महीम् ॥ ३४

दयार्थं चैव भूतानां समीक्ष्य पृथिवीं चरेत् ।
सञ्चयांश्च न कुर्वीत स्नेहभागं च वर्जयेत् ॥ ३५

पूतेन चाम्भसा नित्यं कार्यं कुर्वीत मन्त्रवित् ।
उपस्पृशेदुद्धृताभिर् अद्भिश्चैव नरोत्तमः ॥ ३६

अहिंसा ब्रह्मचर्यं च सत्यमार्जवमेव च ।
अक्रोधश्चानसूया च दमो नित्यमपैशुनम् ॥ ३७

अष्टस्वेतेषु युक्तस्स्याद् व्रतेषु नियतेन्द्रियः ॥ ३७॥
अपाप्मानं शठं वृत्तम् अजिह्मं नित्यमाचरेत् ॥ ३८

आशीर्युक्तानि कर्माणि हिंसायुक्तानि यानि च ।
कालसङ्ग्रहधर्मं च नैव कुर्यान्न कारयेत् ॥ ३९

सर्वानेताननतिक्रम्य लघुमात्रपरिग्रहः ।
समस्सर्वेषु भूतेषु स्थावरेषु चरेषु च ॥ ४०

1. क—प्रतिरात्रं हि ।

परं नोद्वेजयेत् कंञ्चिन्न च कस्माञ्चिदुद्विजेत् ।
विश्वस्तस्सर्वभूतानाम् ऐकाग्र्यं मोक्ष उच्यते ॥ ४१

अनागतं च न ध्यायेंन्नातीतमनुचिन्तयेत् ।
वर्तमानमुपेक्षेत कालकाङ्क्षी समाहितः ॥ ४२

न चक्षुषा न मनसा न वाचा दूषयेत् क्वचित् ।
न प्रत्यक्षं परोक्षं वा किञ्चिद्दुष्टं समाचरेत् ॥ ४३

इन्द्रियाण्युपसंहृत्य कूर्मोऽङ्गानीव सर्वशः ।
क्षीणेन्द्रियमनोबुद्धिर् निरीक्षेत जितेन्द्रियः ॥ ४४

निर्द्वन्द्वो निर्नमस्कारो निस्स्वाहाकार एव च ।
निर्ममो निरहङ्कारो निर्योगक्षेम एव च ॥ ४५

निराशीस्सर्वभूतेषु निरासङ्गो निराश्रयः ।
सर्वज्ञस्सर्वतोमुक्तो मुच्यते नात्र संशयः ॥ ४६

अपादपाणिपृष्ठं तद् अशिरस्कमनूदरम् ।
प्रहीणगुणकर्माणं केवलं विमलं स्थिरम् ॥ ४७

अगन्धरसमस्पर्शम् अरूपाशब्दमेव च ।
[1]अनास्थिमनसृङ्मज्जम् अमांसमपि चैव ह ॥ ४८

अचिन्त्यमव्ययं [2]दिव्यं कूटस्थमपि नित्यदा ।
सर्वभूतस्थमात्मानं ये पश्यन्ति न ते मृताः ॥ ४९

---

1. अ-घ—अन्वगस्थसृजामांसं गोमांसमिति चैव ह ॥
2. क-ख—नित्यं हृदिस्थमपि सर्वदा । घ—हृदिस्थ ।

न तत्र क्रमते बुद्धिर् नेन्द्रियाणि न देवताः ।
वेदा यज्ञाश्च लोकाश्च न तपो न पराक्रमः ॥ ५०

यत्र ज्ञानवतां प्राप्तिर् अलिङ्गग्रहणे स्मृता ॥ ५०॥

तस्मादलिङ्गो धर्मज्ञो धर्मवृत्तमनुव्रतः ।
गूढधर्माश्रितो विद्वान् अज्ञातचरितं चरेत् ॥ ५१॥

अमूढो मूढरूपेण चरेद्धर्ममदूषयन् ॥ ५२

यथैनमवमन्येरन् परे सततमेव हि ।
तथावृत्तश्चरेद्धर्मं सतां [1]धर्ममदूषयन् ॥ ५३

योऽप्येवं वृत्तसम्पन्नस् स मुनिश्श्रेष्ठ उच्यते ॥ ५३॥

इन्द्रियाणीन्द्रियार्थांश्च महाभूतानि पञ्च च ।
मनो बुद्धिमथात्मानम् अव्यक्तं पुरुषं तथा ॥ ५४॥

सर्वमेतत् प्रसङ्ख्याय सम्यक् सम्पूज्य निर्मलः ।
ततस्स्वर्गमवाप्नोति विमुक्तस्सर्वबन्धनैः ॥ ५५॥

एतदेवान्तवेलायां परिसङ्ख्याय तत्त्ववित् ।
ध्यायेदेकान्तमास्थाय मुच्यतेऽथ निराश्रयः ॥ ५६॥
निर्मुक्तस्सर्वसङ्गेभ्यो वायुराकाशगो यथा ॥

क्षीणशोको निरातङ्कः प्राप्नोति परमां गतिम् ॥* ५७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
॥ ९२ ॥ अनुगीतापर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
[ अस्मिन्नध्याये ५७॥ श्लोकाः ]

---

1. क-घ—वर्त्मांविदूषयन् । * अ—कोशे नात्राध्यायसमाप्तिरुपलभ्यते।

## ॥ पञ्चाशोऽध्यायः ॥

ब्रह्मणा महर्षीन् प्रति सन्न्यासज्ञानतपसां परमपुरुषार्थसाधनत्वोक्तिः ॥ १ ॥

ब्रह्मा—

सन्न्यासं तप इत्याहुर् वृद्धा निश्चितदर्शिनः ।
ब्राह्मणा ब्रह्मयोनिस्था ज्ञानं ब्रह्म परं विदुः ॥ १

अतिदूरात्मकं ब्रह्म वेदविद्याव्यपाश्रयम् ।
निर्द्वन्द्वं निर्गुणं नित्यम् अचिन्त्यं गुह्यमुत्तमम् ॥ २

ध्यानेन तपसा चैव धीराः पश्यन्ति तत् पदम् ।
निर्मुक्ततमसः पूता व्युत्क्रान्तरजसोऽमलाः ॥ ३

तपसा क्षेममध्वानं गच्छन्तीति मनीषिणः ।
सन्न्यासनिरता नित्यं ये च ब्रह्मविदो जनाः ॥ ४

तपः प्रदीप इत्याहुर् आचारो धर्मसाधकः ।
ज्ञानं त्वेव परं विद्मस् सन्न्यासं तप उत्तमम् ॥ ५

यस्तु वेद निराबाधं ज्ञानं तत्त्वविनिश्चयात् ।
सर्वभूतस्थमात्मानं स सर्व[1]विदिहोच्यते ॥ ६

यो विद्वान् सहवासं च विवासं चैव पश्यति ।
तथैवैकत्वनानात्वे स दुःखात् परिमुच्यते ॥ ७

---

1. क-ख-ब—गतिरिष्यते ।

यो न कामयते किञ्चिन्न किञ्चिदिति मन्यते ।
इह लोकस्थ एवैष ब्रह्मभूयाय कल्पते ॥ ८

प्रधानगुणतत्त्वज्ञस् सर्वभूतविधानवित् ।
निर्ममो निरहङ्कारो मुच्यते नात्र संशयः ॥ ९

[1]निर्द्वन्द्वो निर्नमस्कारो निस्स्वधाकार एव च ।
निर्द्वन्द्वं निर्गुणं नित्यं प्रशमेनैव गच्छति ॥ १०

हित्वा गुणमयं सर्वं कर्म जन्तुश्शुभाशुभम् ।
उभे सत्यानृते हित्वा मुच्यते नात्र संशयः ॥ ११

अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् ।
महाहङ्कारविटप इन्द्रियान्तरकोटरः ॥ १२

महाभूतविशाखश्च विशेषप्रतिशाखवान् ।
सदापर्णस्सदापुष्पश् शुभाशुभफलोदयः ॥ १३

आजीव्यस्सर्वभूतानां ब्रह्मवृक्षस्सनातनः ॥ १३॥

एनं छित्त्वा च हित्वा च ज्ञानेन परमासिना ।
भित्त्वा चामरतां प्राप्य जह्याद्वै मृत्युजन्मनी ॥ १४॥

निर्ममो निरहङ्कारो मुच्यते नात्र संशयः ॥ १५

द्वावेतौ पक्षिणौ नित्यौ सङ्ख्येयौ चाप्यचेतनौ ।
एताभ्यां तु परो यस्स चेतनावानिति स्मृतः ॥ १६

---

1. ध—इतः श्लोकद्वयं नास्ति

अचेतनस्सत्वसङ्घातयुक्तस्
सत्वात् परं चेतयतेऽन्तरात्मा ।
स क्षेत्रज्ञस्सत्वसङ्घातबुद्धिर्
गुणाधिको मुच्यते मृत्युपाशात् ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
॥ ९२ ॥ अनुगीतापर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
[ अस्मिन्नध्याये १७ श्लोकाः ]

---

## ॥ एकपञ्चाशोऽध्यायः ॥

---

**ब्रह्मणा महर्षीन् प्रति योगिनां चातुर्विध्यादिकथनपूर्वकं मुमुक्षुवेद्य-नानार्थकथनम् ॥ १ ॥**

---

**ब्रह्मा—**

केचिद्ब्रह्ममयं वृक्षं केचिद्ब्रह्ममयं वनम् ।
केचित् पुरुषमव्यक्तं केचित् परमनामयम् ॥ १
मन्यन्ते सर्वमप्येतद् अव्यक्तप्रभवाप्ययम् ॥ १॥
उच्छ्वासमात्रमपि चेद् योऽन्तकाले समो भवेत् ।
आत्मानमुपसंयम्य सोऽमृतत्वाय कल्पते ॥ २॥
निमेषमात्रमपि च पश्यत्यात्मानमात्मनि ।
गच्छत्यात्मप्रसादेन विदुषां प्राप्तिमव्ययाम् ॥ ३॥

प्राणायामैरथ प्राणान् संयम्य च पुनः पुनः ।
दशद्वादशभिर्वाऽपि चतुर्विंशात् परं तु तत् ॥ ४॥

एवं पूर्वं प्रसन्नात्मा लभते यद्यदिच्छति ।
अव्यक्तात् [1]सत्वमुद्रिक्तम् अमृतत्वाय कल्पते ॥ ५॥

सत्वात् परतरं नान्यत् प्रशंसन्तीह तद्विदः ।
अनुमानाद्विजानीमः पुरुषं सत्वमाश्रितम् ॥ ६॥

न शक्यमन्यथा गन्तुं पुरुषं तमथो द्विजाः ॥ ७

क्षमा धृतिरहिंसा च सन्तोषस्सत्यमार्जवम् ।
ज्ञानं त्यागोऽथ सन्न्यासस् सात्विकं व्रतमिष्यते ॥ ८

एतेनैवानुमानेन मन्यन्तेऽथ मनीषिणः ।
सत्वं च पुरुषश्चैव तत्र नास्ति विचारणा ॥ ९

आहुरेके महात्मानो ये ज्ञानेषु प्रतिष्ठिताः ।
क्षेत्रज्ञसत्वयोरैक्यम् इत्येतन्नोपपद्यते ॥ १०

पृथग्भूतं ततो नित्यम् इत्येतदविचारितम् ।
पृथग्भावश्च विज्ञेयस् सहजश्चापि तत्त्वतः ॥ ११

तथा चैकत्वनानात्वम् इष्यते विदुषां नयः ।
मशकोदुम्बरस्यैक्यं पृथक्त्वमपि दृश्यते ॥ १२

मत्स्योदके यथैव स्याद् अप्सु योगस्तथाऽनयोः ।

---

1 क-ख—तद् समुद्रिक्तं । घ—समनुद्रिक्तं ।

सम्बन्धस्तोयबिन्दूनां पर्णैः कोकनदस्य च ॥ १३

गुरुः—

इत्युक्तवन्तस्ते विप्रास् तदा लोकपितामहम् ।
पुनस्संशयमापन्नाः पप्रच्छुर्मुनिसत्तमाः* ॥ १४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
॥ ९२ ॥ अनुगीतापर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
[ अस्मिन्नध्याये १४ श्लोकाः ।

---

## ॥ द्विपञ्चाशोऽध्यायः ॥

महर्षिभिर्ब्रह्माणं प्रति धर्मविषये नानाविधवादिविप्रतिपत्तिप्रदर्शन-पूर्वकं तत्प्रयुक्तस्वीयसंशयनिवर्तनप्रार्थना ॥ १ ॥

---

ऋषयः—

किं वा स्विदिह धर्माणाम् अनुष्ठेयतमं स्मृतम् ।
व्याहतामिव पश्यामो धर्मस्य विविधां गतिम् ॥ १

ऊर्ध्वं देहाद्वदन्त्येके नैतदस्तीति चापरे ।
केचित् संशयितं सर्वं निस्संशयमथापरे ॥ २

[1]अनित्यं नित्यमित्येके नास्ति नास्तीति चापरे ।
द्विधेत्येके त्रिधेत्येके व्यामिश्रमिति चापरे ॥[1] ३

---

* अ-क-ख-घ—कोशेषु नायमध्यायसमाप्तिर्दृश्यते ।
1. क-ख-घ—इतश्श्लोकचतुष्टयं नास्ति

एकमेके पृथक् चान्ये बहुत्वमपि चापरे ।
मन्यन्ते ब्राह्मणा एव ब्रह्मज्ञास्तत्त्वदर्शिनः ॥　　४

जटाजिनधराश्चान्ये मुण्डाः केचिदसंवृताः ।
अस्नानं केचिदिच्छन्ति स्नानमित्यपि चापरे ॥　　५

अशनं केचिदिच्छन्ति केचिच्चानशने रताः ।
कर्म केचित् प्रशंसन्ति प्रशान्तिमपि चापरे ॥　　६

[1]देशकालावुभौ केचिन्नैतदस्तीति चापरे ॥　　६॥

केचिन्मोक्षं प्रशंसन्ति केचिद्भोगान् पृथग्विधान् ।
धनानि केचिदिच्छन्ति निर्धनत्वं तथाऽपरे ॥　　७॥

[2]उपास्य साधनं त्वेके नैतदस्तीति चापरे ॥　　८

[3]अहिंसानिरताश्चान्ये केचिद्धिंसापरायणाः ।
पुण्येन यशसेत्येके नैतदस्तीति चापरे ॥　　९

सद्भावनिरताश्चान्ये केचित् संशयिते द्विजाः ।
दुःखादन्ये सुखादन्ये ध्यानमित्यपरे स्थिताः ॥　　१०

यज्ञ इत्यपरे धीरा दानमेवेति चापरे ।
सत्यमेके प्रशंसन्ति न सत्यमिति चापरे ॥　　११

---

1. ख—अर्धत्रितयं नास्ति　　2. अ-ख—इदमर्धं न दृश्यते ।
3. अ—अर्धषट्कं नोपलभ्यते

ज्ञानं सन्न्यासमित्येके स्वभावं भूतचिन्तकाः ॥ ११॥

एवं ह्युत्थापिते धर्मे बहुधा वै प्रधावति ।
निश्चयं नाधिगच्छामश् श्रेयः किमिति सत्तम ॥ १२॥

इदं श्रेय इदं श्रेय इत्येवं प्रस्थिता जनाः ।
यो हि यस्मिन् रतो धर्मे स तं पूजयते सदा ॥ १३॥

तत्र नो विहिता प्रज्ञा मनश्च बहुलीकृतम् ।
एतदाख्यातमिच्छामश् श्रेयः किमिति सत्तम ॥ १४॥

अतः परं च यद्गुह्यं तद्भवान् वक्तुमर्हति ।
सत्वक्षेत्रज्ञयोश्चापि सम्बन्धः केन हेतुना ॥ १५॥

गुरुः—

एवमापृच्छतां तेषां भगवाँल्लोकभावनः ।
तेभ्यश्शशंस धर्मात्मा याथातथ्येन बुद्धिमान् ॥ १६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
॥ ९२ ॥ अनुगीतापर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
[ अस्मिन्नध्याये १६॥ श्लोकाः ॥

---

## ॥ त्रिपञ्चाशोऽध्यायः ॥

ब्रह्मणा महर्षीन् प्रति धर्मप्रदर्शनपूर्वकं तदनुष्ठानसहकृतज्ञानस्यैव दृष्टान्तप्रदर्शनेन परमपुरुषार्थसाधनत्वोक्तिः ॥ १ ॥ तथा क्षेत्रक्षेत्रज्ञसम्बन्धकथनम् ॥ २ ॥ तथा पृथिव्यादिभूतगुणादिप्रतिपादनम् ॥ ३ ॥

ब्रह्मा—

हन्त वस्सम्प्रवक्ष्यामि यन्मां पृच्छथ सत्तमाः ।
समस्तमिह तत्त्वेन श्रुत्वा चैवावधार्यताम् ॥ १

अहिंसा सर्वभूतानाम् एतत् कृत्यतमं मतम् ।
एतत् पदमनुद्विग्नं वरिष्ठं धर्मलक्षणम् ॥ २

ज्ञानं निश्श्रेयसं प्राहुर् वृद्धा निश्चयदर्शनाः ।
तस्माज्ज्ञानेन शुद्धेन मुच्यते सर्वपातकैः ॥ ३

हिंसापराश्च लोके ये ये च नास्तिकवृत्तयः ।
लोभमोहसमायुक्तास् ते वै निरयगामिनः ॥ ४

आशीर्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः ।
तेऽस्मिँल्लोके प्रमोदन्ते जायमानाः पुनः पुनः ॥ ५

कुर्वते ये तु कर्माणि श्रद्दधाना विपश्चितः ।
अनाशीर्योगसंयुक्तास् [1]ते धीरास्साधुदर्शिनः ॥ ६

1. क-ख—ते वै निर्वाणगामिनः ।

अतः परं प्रवक्ष्यामि सत्वक्षेत्रज्ञयोर्यथा ।
संयोगो विप्रयोगश्च तन्निबोधत सत्तमाः ॥ ७

[1]विषयो विषयित्वं च सम्बन्धोऽयमिहोच्यते ।
विषयी पुरुषो नित्यं सत्वं च विषयस्स्मृतः ॥ ८

व्याख्यातं पूर्वकल्पेन मशकोदुम्बरौ यथा ।
भुज्यमानं न जानीते नित्यं सत्वमचेतनम् ॥ ९

ज्ञात्वैव तु विजानीते यो भुङ्क्ते यश्च भुज्यते ।
अनित्यं द्वन्द्वसंयुक्तं सत्वमाहुर्गुणात्मकम् ॥ १०

निर्द्वन्द्वो निष्कलो नित्यः क्षेत्रज्ञो निर्गुणात्मकः ।
समासज्ञानतत्त्वे च यथा सर्वत्र दृश्यते ॥ ११

न सज्जते सदा सत्वम् आपः पुष्करपर्णवत् ।
सर्वैरपि गुणैर्विद्वान् व्यतिषक्तो न लिप्यते ॥ १२

जलबिन्दुर्यथा लोलः पद्मिनीपत्रसंस्थितः ।
एवमेवाप्यसंयुक्तः [2]पुरुषस्यान्न संशयः ॥ १३

द्रव्यमात्रमभूत् सत्वं [3]पुरुषस्येति निश्चयः ।
यथा द्रव्यं च कर्ता च संयोगोऽप्यनयोस्तथा ॥ १४

यथा प्रदीपमादाय कश्चित् तमसि गच्छति ।

---

1. क-ख—विषये विषयत्वं च ।
2. क-ख—पुरुषश्च न संशयः ।
3. क-ख—पुरुषश्चेति ।

तथा सत्त्वप्रदीपेन गच्छन्ति परमैषिणः ॥ १५

[1]यावद्द्रव्यं गुणस्तावत् प्रदीपस्सम्प्रकाशते ।
क्षीणे द्रव्ये गुणे ज्योतिर् अन्तर्धानाय गच्छति ॥ १६

व्यक्तस्सत्वगुणस्त्वेवं पुरुषो व्यक्तमुच्यते ॥ १६॥

एतद्विप्रा विजानीत हन्त भूयो ब्रवीमि वः ॥ १७

[2]सहस्रेणापि दुर्मेधा न बुद्धिमधिगच्छति ।
चतुर्थेनाप्यथांशेन बुद्धिमान् सुखमेधते ॥ १८

एवं धर्मस्य विज्ञेयं संसाधनमुपायतः ।
उपायज्ञो हि मेधावी सुखमत्यन्तमश्नुते ॥ १९

[3]यथाऽध्वानमपाथेयः प्रपन्नो मानवः क्वचित् ।
क्लेशेन याति महता विनश्यत्यन्तराऽपि वा ॥ २०

तथा कर्मसु विज्ञेयं फलं भवति वा न वा ।
पुरुषस्यात्मनिश्श्रेयश् शुभाशुभनिदर्शनम् ॥ २१

[4]यथा च दीर्घमध्वानं पद्भ्यामेव प्रवर्तते ।
अदृष्टपूर्वं सहसा तत्त्वदर्शनवर्जितः ॥ २२

---

1. क-ख—यावद्द्रव्यगुणास्तावत् सत्त्वतस्स । घ—सत्त्वतस्स ।
2. क-ख—सहस्रशोऽपि दुर्मेधा निवृत्तिं ना ।
3. ख—यथा यानमपाहाय अशक्तो । क—यथाह्वानमपाहाय अशक्तो ।
4. क-ख—यथावद्दीर्घमध्वानं पद्भ्यां गन्तुं न विद्यते ।
   घ—पद्भ्यां गन्तुं न शक्यते ।

[1]तमेव च यथाऽध्वानं रथेनैवाशुगामिना ।
यायादश्वप्रयुक्तेन तथा बुद्धिमतां गतिः ॥ २३

उच्चं पर्वतमारुह्य नान्ववेक्षेत भूगतम् ।
रथेन रथिनं पश्येत् क्लिश्यमानमचेतनम् ॥ २४

यावद्रथपथस्तावद् रथेन स तु गच्छति ।
क्षीणे रथपदे प्राज्ञो रथमुत्सृज्य गच्छति ॥ २५

एवं गच्छति मेधावी तत्त्वज्ञो मोक्षमार्गवित् ।
समाज्ञाय महाबुद्धिर् उत्तरादुत्तरोत्तरम् ॥ २६

यथा महार्णवं घोरम् अप्लवस्सम्प्रगाहते ।
बाहुभ्यामेव सम्मोहाद् वधमिच्छत्यसंशयम् ॥ २७

नावा यायी यथा प्राज्ञो विभागज्ञस्तरित्रवान् ।
अश्रान्तस्सलिलं गाहेत् क्षिप्रं सन्तरते ध्रुवम् ॥ २८

तीर्णो गच्छेत् परं पारं नावमुत्सृज्य निर्ममः ।
व्याख्यातं पूर्वकल्पेन यथा रथपदातिनोः ॥ २९

स्नेहात् सम्मोहमापन्नो नावि दाशो यथा तथा ।

---

1. क-ख—ऋषयः—

तत्र नो विहिता प्रज्ञा मनश्च बहुलीकृतम् ।
एतदाख्यातुमिच्छामश् श्रेयः किमिति सत्तम ॥

ब्रह्मा—

अतः परं च यद्गुह्यं तद्विधूमविवर्जितम् । [ अधिकः पाठः ]

ममत्वेनाभिभूतस्संस् तत्रैव परिवर्तते । ३०

नावं न शक्यमारुह्य स्थले विपरिधावितुम् ।
तथैव रथमारुह्य नाप्सु चर्या विधीयते ॥ ३१

एवं कर्मकृतं वृत्तं विविधस्थं पृथक् पृथक् ।
यथा कर्मकृतं लोके तथा तदुपपद्यते ॥ ३२

यन्नैव गन्धि नो रस्यं न रूपस्पर्शशब्दवत् ।
मन्यते न मनो बुद्ध्या तत् प्रधानं प्रचक्षते ॥ ३३

तत्र प्रधानमव्यक्तम् अव्यक्तस्य गुणो महान् ।
महान् प्रधानभूतस्य गुणोऽहङ्कार एव च ॥ ३४

अहङ्कारात् प्रधानस्य [1]महाभूतकृतो गुणः ।
पृथक्त्वेन च भूतानां विषया वै गुणास्स्मृताः ॥ ३५

बीजधर्मं यथाऽव्यक्तं तथैव प्रसवात्मकम् ।
बीजधर्मा महानात्मा प्रसवश्चेति नश्श्रुतम् ॥ ३६

बीजधर्मा त्वहङ्कारः प्रसवश्च पुनः पुनः ।
तथैव बीजधर्माणि महाभूतानि पञ्च वै ॥ ३७

बीजधर्मिण इत्याहुः प्रसवं च न कुर्वते ।
[2]विशेषाः पञ्चभूतानां तेषां वित्त विशेषणम् ॥ ३८

---

1. क-ख—भूतान्येवमतो गुणा ।
2. क-ख—विशेषतः पञ्चभूतास्तेषां चित्तविशेषणा ।

तत्रैकगुणमाकाशं द्विगुणो वायुरुच्यते ।
त्रिगुणं ज्योतिरित्याहुर् आपश्चापि चतुर्गुणाः ॥ ३९

पृथ्वी पञ्चगुणा ज्ञेया तत्र स्थावरजङ्गमाः ।
सर्वभूतकरी देवी शुभाशुभनिदर्शना ॥ ४०

शब्दस्स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः ।
एते पञ्च गुणा भूमेर् विज्ञेया द्विजसत्तमाः ॥ ४१

पार्थिवश्च सदा गन्धो गन्धश्च बहुधा स्मृतः ।
तस्य गन्धस्य वक्ष्यामि विस्तरेण बहून् गुणान् ॥ ४२

इष्टश्चानिष्टगन्धश्च मधुरोऽम्लः कटुस्तथा ।
निर्हारी संहतस्स्निग्धो रूक्षो विशद एव च ॥ ४३

एवं दशविधो ज्ञेयः पार्थिवो गन्ध इत्युत ॥ ४३॥
शब्दस्स्पर्शस्तथा रूपं रसश्चापां गुणास्स्मृताः ॥ ४४

रसज्ञानं तु वक्ष्यामि रसस्तु बहुधा स्मृतः ।
मधुरोऽम्लः कटुस्तिक्तः कषायो लवणस्तथा ॥ ४५
एवं षड्विधविस्तारो रसो वारिसमुद्भवः ॥ ४५॥
शब्दस्स्पर्शस्तथा रूपं त्रिगुणं ज्योतिरुच्यते ॥ ४६

ज्योतिषश्च गुणो रूपं रूपं च बहुधा स्मृतम् ।
शुक्लं कृष्णं तथा रक्तं नीलं पीतारुणं तथा ॥ ४७

ह्रस्वं दीर्घं तथा स्थूलं चतुरश्राणुवृत्तकम् ।

एवं द्वादशविस्तारं ज्योतिषां रूपमिष्यते ॥ ४८

विज्ञेयं ब्राह्मणैर्नित्यं धर्मज्ञैस्सत्यवादिभिः ॥ ४८॥

शब्दस्पर्शौ च विज्ञेयौ द्विगुणो वायुरुच्यते ॥ ४९

वायोश्चापि गुणस्स्पर्शस् स्पर्शश्च बहुधा स्मृतः ॥ ४९॥

[1]उष्णश्शीतस्सुखो दुःखस् स्निग्धो विशद एव च ।
कठिनश्चिक्कणश्श्लक्ष्णः पिच्छिलो दारुणो मृदुः ॥ ५०॥

एवं द्वादशविस्तारो वायव्यो गुण उच्यते ।
विधिवद्ब्राह्मणैस्सिद्धैर् धर्मज्ञैस्तत्त्वदर्शिभिः ॥ ५१॥

तत्रैकगुण आकाशश् शब्द इत्येव स स्मृतः ॥ ५२

तस्य शब्दस्य वक्ष्यामि विस्तरेण बहून् गुणान् ॥ ५२॥

षड्जर्षभस्सगान्धारो मध्यमः पञ्चमस्स्मृतः ।
[2]अतः परं तु विज्ञेयो निषादो धैवतस्तथा ॥ ५३॥

इष्टश्चानिष्टशब्दश्च संहतः प्रतिभानवान् ।
एवं बहुविधो ज्ञेयश् शब्द आकाशसम्भवः ॥ ५४॥

आकाशमुत्तमं भूतम् अहङ्कारस्ततः परः ।
अहङ्कारात् परा बुद्धिर् बुद्धेरात्मा ततः परः ॥ ५५॥

---

1. अ—अर्धपञ्चकं न दृश्यते ।

2. अ—इदमर्धं नोपलभ्यते

तस्मात्तु परमव्यक्तम् अव्यक्तात् पुरुषः परः ॥ ५६
परावरज्ञो भूतानां यं प्राप्यानन्त्यमश्नुते ॥* ५६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
॥ ९२ ॥ अनुगीतापर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
[ अस्मिन्नध्याये ५६॥ श्लोकाः ]

---

## ॥ चतुःपञ्चाशोऽध्यायः ॥

---

कृष्णेनार्जुनं प्रति मुक्त्युपायप्रतिपादकगुरुशिष्यसंवादानुवादसमापनपूर्वकं स्वस्य निजनगरजिगमिषानिवेदनम् ॥ १ ॥ अर्जुनेन तं प्रति युधिष्ठिराभ्यनुज्ञानसम्पादनपूर्वकगमनानुज्ञानम् ॥ २ ॥

---

ब्रह्मा—

भूतानामथ पञ्चानां सर्वेषामीश्वरं मनः ।
नियमे च विसर्गे च भूतानां मन एव च ॥ १

अधिष्ठातृ मनो नित्यं भूतानां महतां तथा ।
बुद्धिरैश्वर्यमाचष्टे क्षेत्रज्ञस्सर्वमुच्यते ॥ २

इन्द्रियाणि मनो युङ्क्ते सदश्वानिव सारथिः ।
इन्द्रियाणि मनो बुद्धिः क्षेत्रज्ञे युज्यते सदा ॥ ३

भूतबुद्धिसमायुक्तं बुद्धिसंयमनं रथम् ।

---

* अ—नात्राध्यायसमाप्तिर्दृश्यते ।

समारुह्य स भूतात्मा समन्तात् परिधावति ॥ ४

[1]इन्द्रियग्रामसंयुक्तो मनस्सारथिरेव च ।
बुद्धिसंयमनो नित्यं महान् ब्रह्ममयो रथः ॥ ५

एवं यो वेत्ति विद्वान् वै सदा ब्रह्ममयं रथम् ।
स धीरस्सर्वलोकेषु न मोहमधिगच्छति ॥ ६

अव्यक्तादिविशेषान्तं चरस्थावरसङ्कुलम् ।
चन्द्रसूर्यप्रभालोकं ग्रहनक्षत्रमण्डितम् ॥ ७

नदीपर्वतजालैश्च सर्वतः परिभूषितम् ।
विविधाभिस्तथाऽद्भिश्च सततं समलङ्कृतम् ॥ ८

अजितं सर्वभूतानां सर्वप्राणभृतां गतिः ।
एतद्ब्रह्मपदं नित्यं क्षेत्रज्ञो यत्र तिष्ठति ॥ ९

लोकेऽस्मिन् यानि भूतानि स्थावराणि चराणि च ।
तान्येवाग्रे प्रलीयन्ते पश्चाद्भूतकृता गुणाः ॥ १०

गुणेभ्यः पञ्च भूतानि एष भूतसमुच्छ्रयः ॥ १०॥

देवा मनुष्या गन्धर्वाः पिशाचोरगराक्षसाः ।
सर्वे स्वभावतस्सृष्टा न क्रियाभ्यो न कारणात् ॥ ११॥

एते विश्वसृजो विप्रा जायन्तीह पुनः पुनः ॥ १२

---

1. ख-घ—बुद्धिमैश्वर्यमाचष्टे क्षेत्रज्ञस्सर्वमुच्यते ।
ख—अधिष्ठाता मनो नित्यं महान् ब्रह्ममयो रथः ।
इन्द्रियाणि मनो युङ्क्ते दशाश्वानिव सारथिः ॥[अधिकः पाठः]

तेभ्यः प्रसूतास्तेष्वेव महाभूतेषु पञ्चसु ।
प्रलीयन्ते यथाकालम् ऊर्मयस्सागरे यथा ॥ १३

विश्वसृग्भ्यश्च भूतेभ्यो महाभूतानि गच्छति ।
भूतेभ्यश्चापि पञ्चभ्यो मुक्तो गच्छेत् परां गतिम् ॥ १४

प्रजापतिरिदं सर्वं तपसैवासृजत् प्रभुः ।
तथैव देवानृषयस् तपसा प्रतिपेदिरे ॥ १५

तपसश्चानुपूर्व्येण फलमूलाशिनस्तथा ।
त्रैलोक्यं तपसा सिद्धाः पश्यन्तीह समाहिताः ॥ १६

औषधान्यगदादीनि नानाविद्याश्च सर्वशः ।
तपसैव प्रसिद्ध्यन्ति तपोमूलं हि साधनम् ॥ १७

यद्दुरापं दुराम्नायं दुराधर्षं दुरन्वयम् ।
तत् सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥ १८

सुरापो ब्रह्महा स्तेनो भ्रूणहा गुरुतल्पगः ।
तपसैव सुतप्तेन मुच्यते किल्बिषात् ततः ॥ १९

मनुष्याः पितरो देवाः पशवो मृगपक्षिणः ।
यानि चान्यानि भूतानि चराणि स्थावराणि च ॥ २०

तपःपरायणा नित्यं सिद्ध्यन्ते तपसा सदा ॥ २०॥
तथैव तपसा देवा महाभागा दिवं गताः ॥ २१
आशीर्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः ।

अहङ्कारसमायुक्तास् ते सकाशे प्रजापतेः ॥ २२

ध्यानयोगेन शुद्धेन निर्ममा निरहङ्कृताः ।
आप्नुवन्ति महात्मानो महान्तं लोकमुत्तमम् ॥ २३

[1]ध्यानयोगमुपागम्य प्रसन्नमतयस्सदा ।
[2]सुखोपचयमव्यक्तं प्रविशन्त्यात्मवित्तमाः ॥ २४

ध्यानयोगादुपागम्य निर्ममा निरहङ्कृताः ।
अव्यक्तं प्रविशन्तीह महतां लोकमुत्तमम् ॥ २५

अव्यक्तादेव सम्भूतस् समयज्ञो गतः पुनः ।
तमोरजोभ्यां निर्मुक्तस् सत्वमास्थाय केवलम् ॥ २६

विमुक्तस्सर्वपापेभ्यस् सर्वं त्यजति सर्वशः ॥ २६॥
क्षेत्रज्ञ इति तं विद्याद् यस्तं वेद स वेदवित् ॥ २७

चित्तं चित्तादुपागम्य मुनिरासीत संयतः ।
तच्चित्तस्तन्मना भूत्वा ग्राह्यमेतत् सनातनम् ॥ २८

अव्यक्तादिविशेषान्तम् अविद्यालक्षणं स्मृतम् ।
निबोधत यथा हीनं गुणैर्लक्षणमित्युत ॥ २९

---

1. ख—अव्यक्तादेव सम्भूतास् समयज्ञा गताः पुनः ।
तमोरजोभ्यां निर्मुक्तास् सत्त्वमास्थाय केवलम् ॥
ध्यानयोगादुपागम्य निर्ममा निरहङ्कृताः ।
विमुक्तस्सर्वपापेभ्यस् सर्वं त्यजति निष्कलम् ॥ [ इति पठ्यते ॥

2. क-ख—सुखोपायनमव्यक्तं प्रविशन्त्यात्मवत्तया । [ पाठान्तरम् ]

द्व्यक्षरस्तु भवेन्मृत्युस् त्र्यक्षरं ब्रह्म शाश्वतम् ।
ममेति हि भवेन्मृत्युर् न ममेति हि शाश्वतम् ॥ ३०

कर्म केचित् प्रशंसन्ति मन्दबुद्धिरता नराः ।
ये तु बुद्ध्वा महात्मानो न प्रशंसन्ति कर्म ते ॥ ३१

कर्मणा जायते जन्तुर् मूर्तिमान् षोडशात्मकः ।
पुरुषं [1]ग्रजते विद्या तद्ग्राह्यममृताशिनम् ॥ ३२

[2]तस्मात् कर्मसु निस्स्नेहा ये केचित् पारदर्शिनः ।
विद्यामयोऽयं पुरुषो न तु कर्ममयस्स्मृतः ॥ ३३

अपूर्वममृतं नित्यं य एनमभिचारिणम् ।
य एनं विन्दते त्मानम् अमेयमविनाशिनम् ॥ ३४

अग्राह्यो ह्यमृतो भवति स एभिः कारणैर्ध्रुवम् ॥ ३४॥

अपोह्य सर्वसङ्कल्पान् संयम्यात्मानमात्मनि ।
स तद्ब्रह्म शुभं वेत्ति यस्माद्भूयो न विद्यते ॥ ३५॥

प्रसादेन च सत्वस्य प्रसादं समवाप्नुयात् ।
लक्षणं हि प्रसादस्य यथा स्यात् स्वप्नदर्शनम् ॥ ३६॥

गतिरेषा तु मुक्तानां ये ज्ञानपरिनिष्ठिताः ।
[3]प्रवृत्तयश्च यास्सर्वाः पश्यन्ति परिणामजाः ॥ ३७॥

---

1. क-ख—सृजते विद्यादग्राह्यमविनाशिनम् ।
2. अ—अर्धचतुष्टयं न दृश्यते । 3. क-ख—अवृत्तयश्च ।

एषा गतिरसक्तानाम् एष धर्मस्सनातनः ।
एषा ज्ञानवतां प्राप्तिर् एतद्वृत्तमनिन्दितम् ॥　　३८॥

[1]समेन सर्वभूतेषु निस्पृहेण निराशिषा ।
शक्या गतिरियं गन्तुं सर्वत्र समदर्शिना ॥　　३९॥

एतद्वस्सर्वमाख्यातं मया विप्रर्षिसत्तमाः ।
एवमाचरत क्षिप्रं ततस्सिद्धिमवाप्स्यथ ॥　　४०॥

गुरुः—

इत्युक्ता गुरुणा ते तु ब्राह्मणा मुनयस्तथा ।
कृतवन्तो महात्मानस् ततो लोकमवाप्नुवन् ॥　　४१॥

त्वमप्येवं महाभाग यथोक्तं ब्रह्मणो वचः ।
सम्यगाचर शुद्धात्मंस् ततस्सिद्धिमवाप्स्यसि ॥　　४२॥

श्रीभगवान्—

इत्युक्तस्स तदा शिष्यो गुरुणा धर्ममुत्तमम् ।
चकार सर्वं कौन्तेय ततो मोक्षमवाप्तवान् ॥　　४३॥

कृतकृत्यश्च स तदा शिष्यः कुरुकुलोद्वह ।
तत् पदं समनुप्राप्तो यत्र गत्वा न शोचति[2] ॥　　४४॥

---

1. क-ख-घ—निस्सङ्गेनैव तत् सर्वं निराशित्वादलेपनात् ।
[ अधिकः पाठः ]

2. अ—त्वमप्येतन्महाभाग यथोक्तं ब्रह्मणो वचः ।
सम्यगाचर शुद्धात्मंस् ततस्सिद्धिमवाप्स्यसि ॥ [अधिकः पाठः]

अर्जुनः—

को न्वसौ ब्राह्मणः कृष्ण कश्च शिष्यो जनार्दन ।
ज्ञातव्यं चेन्मयैतद्वै तन्ममाचक्ष्व मे विभो ॥ ४५॥

श्रीभगवान्—

अहं गुरुर्महाबाहो मनश्शिष्यो हि विद्धि मे ।
त्वत्प्रीत्या सर्वमेतद्वै कथितं ते धनञ्जय ॥ ४६॥

मयि चेदस्ति ते भक्तिर् नित्यं कुरुकुलोद्वह ।
अध्यात्ममेतच्छ्रुत्वा त्वं सम्यगाचर सुव्रत ॥ ४७॥

ततस्त्वं सम्यगाचारो धर्मेऽस्मिन् कुरुनन्दन ।
सर्वपापविशुद्धात्मा मोक्षं प्राप्स्यसि केवलम् ॥ ४८॥

पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते ।
मया तव महाबाहो तस्मादत्र मनः कुरु ॥ ४९॥

मया तु भरतश्रेष्ठ चिरदृष्टः पिता विभो ।
तमहं द्रष्टुमिच्छामि सम्मते तव फल्गुन ॥ ५०॥

वैशम्पायनः—

इत्युक्तवचनं कृष्णं प्रत्युवाच धनञ्जयः ॥ ५१

अर्जुनः—

यदिष्टं कुरु सर्वस्यापीश्वरोऽस्मान् प्रपालय ॥ ५१॥

नमस्ते सर्वलोकात्मन् नारायण परात् पर ।
मनोमलात् तपोऽशक्यं कर्म चाविद्यया तथा ॥ ५२॥

दानमप्यर्थदोषेण नाम तस्मात् कलौ स्मरेत् ॥ ५३

यदि गन्तुं कृता बुद्धिर् वासुदेव नमोऽस्तु ते ।
गच्छावो नगरं कृष्ण गजसाह्वयमद्य वै ॥ ५४

समेत्य तत्र राजानं धर्मात्मानं युधिष्ठिरम् ।
समनुज्ञाप्य दुर्धर्ष स्वां पुरीं यातुमर्हसि* ॥ ५५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
॥ ९२ ॥ अनुगीतापर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
[ अस्मिन्नध्याये ५५ श्लोकाः ]

---

## ॥ पञ्चपञ्चाशोऽध्यायः ॥

अनुगीतोपदेशानन्तरं कृष्णार्जुनाभ्यां हास्तिनपुरं प्रति प्रस्थानम् ॥ १ ॥ तत्र मध्येमार्गमर्जुनेन कृष्णं प्रति स्तुतिपूर्वकं व्यासनारदादिभ्यः स्वस्य कृष्णयाथात्म्यावगतिनिवेदनम् ॥ २ ॥ ततः कृष्णेन सहार्जुनेन हास्तिनपुरमेत्य धृतराष्ट्रादिभ्यः पादाभिवादनम् ॥ ३ ॥ ततो युधिष्ठिराद्यनुमत्या सुभद्रामानीय सह सात्यकिना द्वारकां प्रति प्रस्थानम् ॥ ४ ॥

---

वैशम्पायनः—

ततो ह्यचोदयत् कृष्णो युज्यतामिति दारुकम् ।
मुहूर्तादिव चाचष्ट युक्तमित्येव दारुकः ॥ १

तथैव चानुयात्राणि चोदयामास पाण्डवः ॥ १॥

---

* अ-क-ख-घ—कोशेषु अत्र अनुगीता समाप्ता इति दृश्यते ॥

अर्जुनः—

[1]सन्नह्यध्वं प्रयास्यामो नगरं गजसाह्वयम् ॥ २

वैशम्पायनः—

इत्युक्तास्सैनिकास्ते तु सज्जीभूता विशाम्पते ।
[2]आचख्युस्सज्जमित्येवं पार्थायामिततेजसे ॥ ३

ततस्तौ रथमास्थाय प्रयातौ कृष्णपाण्डवौ ।
तौ कुर्वाणौ कथाश्चित्राः प्रीयमाणौ विशाम्पते ॥ ४

रथस्थं तं महातेजा वासुदेवं धनञ्जयः ।
पुनरेवाब्रवीद्वाक्यम् इदं भरतसत्तम ॥ ५

अर्जुनः—

त्वत्प्रसादाज्जयं प्राप्तो राजा वृष्णिकुलोद्वह ।
निहताश्शत्रवश्चापि प्राप्तं राज्यमकण्टकम् ॥ ६

नाथवन्तश्च भवता पाण्डवा मधुसूदन ।
भवन्तं प्लवमासाद्य तीर्णास्स्म कुरुसागरम् ॥ ७

भक्तांस्त्वमाश्रितानस्मान् पालयामुत्र चेह च ॥ ७॥

विश्वकर्मन् नमस्तेऽस्तु विश्वात्मन् विश्वसम्भव ।
यथाऽहं त्वां विजानामि तथा हि भगवान् मम ॥ ८॥

त्वत्तेजस्सम्भवो नित्यं हुताशो मधुसूदन ।

---

1. क—सज्जध्वं विप्रयास्यामो । ख—सज्जध्वमथ यास्यामो ।
2. घ—इतः सार्धः श्लोको नास्ति ।

[1]रतिः क्रीडामयी तुभ्यं माया ते रोदसी विभो ॥ ९॥
त्वयि सर्वमिदं विश्वं यदिदं स्थाणुजङ्गमम् ॥ १०
त्वं हि सर्वं विकुरुषे भूतग्रामं सनातनम् ।
पृथिवीं चान्तरिक्षं च तथा स्थावरजङ्गमम् ॥ ११
हसितं [2]तेऽमला ज्योत्स्ना ऋतव[3]श्चेन्द्रियाणि च ।
प्राणो वायुस्सततगः क्रोधो मृत्युस्सनातनः ॥ १२
प्रसादे चापि पद्मा श्रीर् नित्यं तव महामते ।
रतिस्तुष्टिर्धृतिः क्षान्तिस् त्वयि चेदं चराचरम् ॥ १३
त्वमेव हि युगान्तेषु निधनं प्रोच्यतेऽनघ ॥ १३॥
सुदीर्घेणापि कालेन न ते शक्या गुणा मया ।
आत्मा च परमो वक्तुं नमस्ते नलिनेक्षण ॥ १४॥
विदितो मे सुदुर्धर्ष नारदाद्देवलात् तथा ।
कृष्णद्वैपायनाच्चैव तथा कुरुपितामहात् ॥ १५॥
त्वयि सर्वं समासक्तं त्वमेवैको जनार्दनः ॥ १६
[4]यच्चानुग्रहसंयुक्तम् एतदुक्तं त्वयाऽनघ ।
एतत् सर्वमहं सम्यक् करिष्यामि जनार्दन ॥ १७
इदं चाद्भुत[5]मत्यग्रं कृतमस्मत्प्रियेप्सया ।

---

1. क—राशिः । ख—रविः क्रीडामयस्तुभ्यमायातो ।
2. क-ख—ते महज्ज्योत्स्ना ऋतवश्चेन्द्रियाणि च ।
3. अ-घ—श्चादयस्तथा ।
4. घ—श्लोकोऽयं नास्ति　　5. क-ख—मत्यर्थं ।

यत् पापा निहतास्सङ्ख्ये कौरव्या धृतराष्ट्रजाः ॥ १८

त्वया दग्धं हि तत् सैन्यं मया [1]विजितमाहवे ।
भवता तत् कृतं कर्म येनावाप्तो जयो मया ॥ १९

दुर्योधनस्य सङ्ग्रामे तव बुद्धिपराक्रमैः ।
कर्णस्य च वधोपायो यथावत् सम्प्रदर्शितः ॥ २०

सैन्धवस्य च पापस्य भूरिश्रवस एव च ॥ २०॥

तस्मात् त्वमेव सञ्चिन्त्य हितं कुरु यथा तथा ॥ २१

अहं च प्रीयमाणोऽस्मि त्वया देवकिनन्दन ।
यदुक्तं तत् करिष्यामि न हि मेऽस्ति विचारणा ॥ २२

राजानं च समासाद्य धर्मात्मानं युधिष्ठिरम् ।
चोदयिष्यामि धर्मज्ञ गमनार्थं तवानघ ॥ २३

रुचितं हि ममाप्येतद् द्वारकागमनं प्रति ॥ २३॥

द्रष्टासि नचिरादेव मातुलं मधुसूदन ।
बलदेवं च दुर्धर्षं तथाऽन्यान् वृष्णिपुङ्गवान् ॥ २४॥

वैशम्पायनः—

एवं सम्भाषमाणौ तौ प्राप्तौ वारणसाह्वयम् ।
तथा विविशतुश्चोभौ सम्प्रहृष्टजनाकुलम् ॥ २५॥

तौ गत्वा धृतराष्ट्रस्य गृहं शक्रगृहोपमम् ।

1. क-ख-च—विज्ञातमाहवे ।

दृष्टवन्तौ महाराज धृतराष्ट्रं जनेश्वरम् ॥ २६॥
विदुरं च महाबुद्धिं राजानं च युधिष्ठिरम् ।
भीमसेनं च दुर्धर्षं माद्रीपुत्रौ च पाण्डवौ ॥ २७॥
धृतराष्ट्रमुपासीनं युयुत्सुं चापराजितम् ।
गान्धारीं च महाप्राज्ञां पृथां कृष्णां च भामिनीम् ॥ २८॥
सुभद्रां चापि तास्सर्वा भरतानां स्त्रियस्तथा ।
दृष्टवन्तौ स्थितास्सर्वा गान्धारीं परिवार्य ते ॥ २९॥
ततस्समेत्य राजानं धृतराष्ट्रमरिन्दमौ ।
निवेद्य नामधेये स्वे वन्देतां चरणौ ततः ॥ ३०॥
गान्धार्याश्च पृथायाश्च धर्मराजस्य धीमता ।
भीमस्य च ववन्दाते तथा पादौ महात्मनः ॥ ३१॥
क्षत्तारं चाभिसम्पूज्य पृष्ट्वा कुशलमव्ययम् ।
परिष्वज्य महात्मानं वैश्यापुत्रं महारथम् ॥ ३२॥
तैस्सार्धं नृपतिं वृद्धं उपासाते ततस्तु तौ ॥ ३३
ततो निशि महाराजो धृतराष्ट्रो जनेश्वरान् ।
जनार्दनं च मेधावी व्यसर्जयत वै गृहान् ॥ ३४
[1]तेऽनुज्ञाता नृपतिना ययुस्स्वं स्वं निवेशनम् ।
[2]धनञ्जयगृहानेव ययौ कृष्णस्तु वीर्यवान् ॥ ३५

1. घ—तेऽनुज्ञाता नृपतिना कृतसर्वाह्निकक्रियौ ।
2. घ—इतश्श्लोकद्वयं नास्ति

तत्रार्चितो यथान्यायं सर्वकामैरुपस्थितः ।
कृष्णस्सुष्वाप मेधावी धनञ्जयसहायवान् ॥ ३६

प्रभातायां तु शर्वर्यां कृतसर्वाह्निकक्रियौ ।
धर्मराजस्य भवनं जग्मतुः परमार्चितौ ॥ ३७
यत्रास्ते तु सहामात्यो धर्मराजो महामनाः ॥ ३७॥

ततस्तु तत् प्रविश्याथ ददृशाते महाबलौ ।
धर्मराजं तमासीनं देवराजमिवाश्विनौ ॥ ३८॥

तौ समासाद्य राजानं वार्ष्णेयकुरुपुङ्गवौ ।
निषीदतुरनुज्ञातौ प्रीयमाणेन तेन वै ॥ ३९॥

ततस्स राजा मेधावी विवक्षू प्रेक्ष्य तावुभौ ।
प्रोवाच वदतां श्रेष्ठौ वचनं राजसत्तमः ॥ ४०॥

युधिष्ठिरः—

विवक्षू हि युवां मन्ये वीरौ यदुकुरूद्वहौ ।
ब्रूतं कर्तास्मि सर्वं वां न चिरान्मा विचार्यताम् ॥ ४१॥

वैशम्पायनः—

इत्युक्तः फल्गुनस्तत्र धर्मराजानमब्रवीत् ।
विनीतवदुपागम्य वाक्यं वाक्यविशारदः ॥ ४२॥

अर्जुनः—

अयं चिरोषितो राजन् वासुदेवः प्रतापवान् ।
भवन्तं समनुज्ञाप्य पितरं द्रष्टुमिच्छति ॥ ४३॥

स गच्छत्वभ्यनुज्ञातो भवता यदि मन्यसे ।
आनर्तनगरं वीरस् तदनुज्ञातुमर्हसि ॥ ४४॥

युधिष्ठिरः—
पुण्डरीकाक्ष भद्रं ते गच्छ त्वं मधुसूदन ।
पुरीं द्वारवतीमद्य द्रष्टुं शूरसुतं विभुम् ॥ ४५॥

रोचते मे महाबाहो गमनं तव केशव ।
मातुलश्चिरदृष्टस्ते त्वया देवी च देवकी ॥ ४६॥

मातुलं वसुदेवं त्वं बलदेवं च माधव ।
[1]पूजयेथा महाप्राज्ञ मद्वाक्येन यथार्हतः ॥ ४७॥

स्मरेथाश्चापि मां नित्यं भीमं च बलिनां वरम् ।
फल्गुनं नकुलं चैव सहदेवं च माधव ॥ ४८॥

आनर्तानवलोक्य त्वं पितरं च महाभुजम् ।
वृष्णींश्च पुनरागच्छेर् हयमेधे ममानघ ॥ ४९॥

सङ्गच्छ रत्नान्यादाय विविधानि वसूनि च ।
यच्चाप्यन्यन्मनोज्ञं ते तच्चाप्यादत्स्व सात्वत ॥ ५०॥

इयं हि वसुधा सर्वा प्रसादात् तव माधव ।
अस्मानुपागता वीर निहताश्चापि शत्रवः ॥ ५१॥

स्वर्गापवर्गविषयं त्वद्भक्तानां न दुर्लभम् ।
संसारगहने चेद्धपापाग्नेः प्रशमाम्बुद ॥ ५२॥

---

1. घ—इतः सार्धश्लोको नास्ति

वैशम्पायनः—

एवं ब्रुवति कौरव्ये धर्मराजे युधिष्ठिरे ।
वासुदेवः परः पुंसाम् इदं वचनमब्रवीत् ॥ ५३॥

श्रीभगवान्—

तवैव रत्नानि धनं च केवलं
धरा च कृत्स्ना च महाभुजाद्य वै ।
यदस्ति चान्यद्द्रविणं गृहेषु मे
त्वमेव तस्येश्वर नित्यमीशिषे ॥ ५४॥

वैशम्पायनः—

तथेत्यथोक्तः प्रतिपूजितस्तदा
गदाग्रजो धर्मसुतेन वीर्यवान् ।
पितृष्वसारं त्वभिवाद्य सात्यकिं
सम्पूजयंश्चाप्यगमत् प्रदक्षिणम् ॥ ५५॥

तया स सम्यक् प्रतिपूजितस्तदा
तथैव सर्वैर्विदुरादिभिस्ततः ।
विनिर्ययौ नागपुराद्गदाग्रजो
रथेन दिव्येन चतुर्युजा हरिः ॥ ५६॥

रथे सुभद्रामधिरोप्य भामिनीं
युधिष्ठिरस्यानुमते जनार्दनः ।

पितृष्वसुश्चापि जनार्दनस्तदा
विनिर्ययौ पौरजनाभिसत्कृतः ॥ ५७॥

तमन्वगाद्वानरवर्यकेतनस्
ससात्यकी माद्रवतीसुतावपि ।
अगाधबुद्धिर्विदुरश्च माधवं
स्वयं च भीमो गजराजविक्रमः ॥ ५८॥

निवर्त्य वैतान् कुरुराष्ट्रवर्धनांस्
ततश्च सर्वान् विदुरं च वीर्यवान् ।
जनार्दनो दारुकमाह सत्वरः
प्रचोदयाश्वानिति सात्यकिं तदा ॥ ५९॥

ततो ययौ शत्रुगणावमर्दनश्
शिनिप्रवीरानुगतो जनार्दनः ।
यथा निहत्यारिगणं शतक्रतुर्
दिवं तथाऽऽनर्तपुरीं प्रतापवान् ॥ ६०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
॥ ९२ ॥ अनुगीतापर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
[ अस्मिन्नध्याये ६०॥ श्लोकाः ]

---

## ॥ षट्पञ्चाशोऽध्यायः ॥

कुरुपुराद् द्वारकां गच्छता कृष्णेन मध्येमार्गं दृष्टेनोदङ्केन सह संवादः॥ १ ॥ तथा कौरवादिविनाशे स्वोपेक्षाया हेतुत्वधिया स्वं प्रति शापदानोद्यतोदङ्कपरिसान्त्वनाय तं प्रति तत्त्वकथनोपक्रमः ॥ २ ॥

वैशम्पायनः—

तथा प्रयान्तं वार्ष्णेयं द्वारकां भरतर्षभाः ।
परिष्वज्य न्यवर्तन्त सानुयात्राः परन्तपाः ॥ १

पुनः पुनश्च वार्ष्णेयं पर्यष्वजत फल्गुनः ।
आचक्षुर्विषयादेनं ददर्श स पुनः पुनः ॥ २

कृच्छ्रेणैव च तां पार्थो गोविन्दे विनिवेशिताम् ।
सञ्जहार ततो दृष्टिं कृष्णश्चाप्यपराजितः ॥ ३

तस्य प्रयाणे यान्यासन् निमित्तानि महात्मनः ।
बहून्यद्भुतरूपाणि तानि मे गदतश्शृणु ॥ ४

वायुर्वेगेन महता रथस्य पुरतो ववौ ।
कुर्वन् निश्शर्करं मार्गं विरजस्कमकण्टकम् ॥ ५

ववर्ष वासवश्चैव तोयं शुचि सुगन्धि च ।
दिव्यानि चैव पुष्पाणि पुरतश्शार्ङ्गधन्वनः ॥ ६

सम्प्रयातो महाबाहुस् समेषु मरुधन्वसु ।
आगच्छन्तमपश्यद्दै उदङ्कं नाम नामतः ॥ ७

महर्षिं सिद्धतपसं त्रिषु लोकेषु विश्रुतम् ।
[1]स तं सम्पूज्य तेजस्वी मुनिं कमललोचनः ॥ ८
पूजितस्तेन च तदा पर्यपृच्छदनामयम् ॥ ८॥

स पृष्टः कुशलं तेन सम्पूज्य मधुसूदनम् ।
उदङ्को ब्राह्मणश्रेष्ठस् [2]ततः पप्रच्छ माधवम् ॥ ९॥

उदङ्कः—
कच्चिच्छौरे त्वया गत्वा कुरुपाण्डवसद्म तत् ।
कृतं सौभ्रात्रममलं तन्मे व्याख्यातुमर्हसि ॥ १०॥

अपि सन्धाय तान् वीरान् उपावृत्तोऽसि केशव ।
सम्बन्धिनस्सुदयितान् सततं वृष्णिपुङ्गव ॥ ११॥

कच्चित् पाण्डुसुताः पञ्च धृतराष्ट्रस्य चात्मजाः ।
लोकेषु विहरिष्यन्ति त्वया सह परन्तपाः ॥ १२॥

[3]स्वराष्ट्रेषु च राजानः कच्चित् प्राप्स्यन्ति वै सुखम् ।
कौरवेषु प्रशान्तेषु त्वया नाथेन माधव ॥ १३॥

या मे सम्भावना तात त्वयि नित्यमवर्तत ।
अपि सा सफला कृष्ण कृता ते भारतान् प्रति ॥ १४॥

श्रीभगवान्—
कृतो यत्नो मया ब्रह्मन् सौशाम्ये कौरवान् प्रति ।

1. क-घ—ददर्शाथ मुनिश्रेष्ठमुदङ्कमिति विश्रुतम् ।
[अधिकः पाठः अनन्वितश्च]

2. क-ख-घ—पप्रच्छ मधुसूदनम् । 3. क-ख—स्वेषु देशेषु ।

न चाशक्यन्त सन्धातुम् अधर्मरुचयो मया ॥ १५॥
ततस्ते निधनं प्राप्तास् सर्वे ससुतबान्धवाः ॥ १६

न दिष्टमप्यतिक्रान्तुं शक्यं बुद्ध्या बलेन वा ।
महर्षे विदितं नूनं सर्वमेतत् तवानघ ॥ १७

अत्यक्रामन् वचो मह्यं भीष्मस्य विदुरस्य च ।
ततो यमक्षयं जग्मुस् समासाद्येतरेतरम् ॥ १८

पञ्चैव पाण्डवाश्शिष्टा हतामित्रा हतात्मजाः ।
धार्तराष्ट्राश्च निहतास् सर्वे ससुतबान्धवाः ॥ १९

वैशम्पायनः—

इत्युक्तवचने कृष्णे भृशं क्रोधसमन्वितः ।
उदङ्कः प्रत्युवाचेदं क्रोधादुद्वृत्य लोचने ॥ २०

उदङ्कः—

यस्माच्छक्तेन ते कृष्ण न त्राताः कुरुपाण्डवाः ।
सम्बन्धिनः प्रियास्तस्माच् छप्स्येऽहं त्वां न संशयः ॥ २१

न च वै प्रसभं यस्मात् ते निगृह्य निवर्तिताः ।
तस्मान्मन्युपरीतस्त्वां शप्स्यामि मधुसूदन ॥ २२

त्वया शक्तेन हि सता मिथ्याचारेण माधव ।
प्रमापिताः कुरुश्रेष्ठा यत् त्वया समुपेक्षिताः ॥ २३

श्रीभगवान्—

शृणु मे विस्तरेणेदं यद्वक्ष्ये भृगुनन्दन ।

गृहाणानुनयं चैव तपस्वी ह्यसि भार्गव ॥ २४

श्रुत्वा तु मे तदध्यात्मं मुञ्चेथाश्शापमद्य वै ।
न च मां तपसाऽल्पेन शक्नोति शपितुं भवान् ॥ २५

न च ते तपसो नाशम् इच्छामि तपतां वर ।
तपस्ते सुमहत् तप्तं गुरवश्चापि तोषिताः ॥ २६

कौमारं ब्रह्मचर्यं ते जानामि द्विजसत्तम ।
दुःखार्जितस्य तपसस् तस्मान्नेच्छामि ते व्ययम् ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
॥ ९२ ॥ अनुगीतापर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥
[ अस्मिन्नध्याये २७ श्लोकाः ]

---

## ॥ सप्तपञ्चाशोऽध्यायः ॥

---

कृष्णेनोदङ्कं प्रति स्वमाहात्म्यप्रकाशनपूर्वकं कुरूणां स्ववचनातिक्रमणादिरूपस्वापराधेनैव निधनोक्तिः ॥ १ ॥

---

उदङ्कः—

ब्रूहि केशव तत्त्वेन त्वं मेऽध्यात्ममनिन्दितम् ।
श्रुत्वा श्रेयो विधास्यामि न शापं ते जनार्दन ॥ १

श्रीभगवान्—

तमो रजश्च सत्त्वं च विद्धि भावान् मदाश्रयान् ।

स्थितिसृष्टिलयाध्यक्षो विष्णुब्रह्मेशसंज्ञितः ॥ २

कदाचित् तमसा [1]रुद्रो विष्णुस्सत्वगुणे स्थितः ।
रजस्यपि [2]तथा ब्रह्मा स्वगुणान्यगुणावुभौ ॥ ३

प्रणवात्मा च शब्दादि त्रिगुणात्मा चराचरम् ।
तथा रुद्रान् वसून् वाऽपि विद्धि मत्प्रभवान् द्विज ॥ ४

मयि सर्वाणि भूतानि सर्वभूतेषु चाप्यहम् ।
स्थित इत्यभिजानीहि मा ते भूदत्र संशयः ॥ ५

तथा दैत्यगणान् सर्वान् यक्षगन्धर्वराक्षसान् ।
विबुधाप्सरसश्चैव विद्धि मत्प्रभवान् द्विज ॥ ६

सदसच्चैव यत् प्राहुर् अव्यक्तं व्यक्तमेव च ।
अक्षरं च क्षरं चैव सर्वमेतन्मदाश्रयम् ॥ ७

ये चाश्रमेषु वै धर्मांश् चतुर्षु विहिता मुने ।
दैवतानि च कर्माणि विद्धि सर्वान् गुणात्मकान् ॥ ८

असच्च सच्चैव च यद् विश्वं सदसतः परम् ।
ततः परतरं नास्ति देवदेवात् सनातनात् ॥ ९

ओङ्कारप्रभवान् वेदान् विद्धि मां त्वं भृगूद्वह ।

1. क-ख—रौद्रो ।
2. ख-घ—तथाऽन्यौ स्यात् गुणादन्यगुणानुभौ ।
क—तथा ब्रह्मन् स्वगुणान्यगुणावुभौ ।

तथैव यूपं सोमं च त्रिदशाप्यायनं मखे ॥ १०

होतारमपि हव्यं च विद्धि मां भृगुनन्दन ।
अध्वर्युः कल्पकृच्चापि हविः परमसंस्कृतम् ॥ ११

उद्गाता चापि मां स्तौति गीतघोषैर्महाध्वरे ॥ ११॥

प्रायश्चित्तेषु मां ब्रह्मन् शान्तिमङ्गलवाचकाः ।
स्तुवन्ति विश्वकर्माणं सततं द्विजसत्तमाः ॥ १२॥

विद्धि मेऽद्य सुतं धर्मम् अग्रजं द्विजसत्तम ।
मानसं दयितं विप्र सर्वभूतगुणात्मकम् ॥ १३॥

अत्राहं वर्तमानैश्च निवृत्तैश्चापि मानवैः ।
बहुधा जायमानो वै वर्तय द्विजसत्तम ॥ १४॥

लोकसंरक्षणार्थाय धर्मसंस्थापनाय च ।
तैस्तैर्वेषैश्च रूपैश्च त्रिषु लोकेषु भार्गव ॥ १५॥

अहं विष्णुरहं ब्रह्मा [1]शक्रोऽहं प्रभवाप्ययः ।
भूतग्रामस्य सर्वस्य स्रष्टा संहार एव च ॥ १६॥

अधर्मे वर्तमानानां सर्वेषामहमच्युतः ।
धर्मस्य सेतुं बध्नामि चलिते चलिते युगे ॥ १७॥

तास्ता योनीः प्रविश्याहं प्रजानां हितकाम्यया ॥ १८

यदा त्वहं देवयोनौ वर्ते भृगुकुलोद्वह ।

---

1. क-ख-घ—शर्व शक्रो भवाप्ययौ ।

तदाऽहं देववत् सर्वम् आचरामि न संशयः ॥ १९

यदा गन्धर्वयोनौ तु वर्तेऽहं भृगुनन्दन ।
तदा गन्धर्ववच्चेष्टास् सर्वाश्चेष्टामि भार्गव ॥ २०

नागयोनौ यदा [1]वर्ते तदा चेष्टा तु नागवत् ।
यक्षराक्षसयोनौ तु [2]तथावृत्तिश्चराम्यहम् ॥ २१

मानुष्ये वर्तमाने तु कृपणं याचिता मया ।
न च ते जातसम्मोहा वचो गृह्णन्ति मे हितम् ॥ २२

भयं च महदुद्दिश्य त्रासिताः कुरवो मया ।
क्रुद्धेन भूत्वा तु पुनर् यथावदभिगर्हिताः ॥ २३

तेऽधर्मेणेह संयुक्ताः परीताः कालधर्मणा ।
धर्मेण निहता युद्धे गतास्स्वर्गं न संशयः ॥ २४

लोकेषु पाण्डवाः ख्यातिं गमिष्यन्ति द्विजोत्तम ।
एतत् ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

॥ ९२ ॥ अनुगीतापर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

[ अस्मिन्नध्याये २५ श्लोकाः ]

---

1. अ-च—चैव तदा वर्तामि नागवत् ।
2. अ-च—यथावद्विचराम्यहम् ।

## ॥ अष्टपञ्चाशोऽध्यायः ॥

कृष्णेनोदङ्काय विश्वरूपप्रदर्शनपूर्वकं पिपासाकाले जललाभरूप-वरदानम् ॥ १ ॥ कृष्णेनोदङ्कायामृतदानं चोदितेनेन्द्रेण कदाचिद्वनमध्ये पिपासुमुदङ्कं प्रति चण्डालवेषेण जलस्वीकारप्रार्थने उदङ्केन चण्डालत्व-बुद्ध्या तदधिक्षेपः ॥२ ॥ पश्चात् तस्य तिरोधानेन परितप्यमानमुदङ्कं प्रति तत्र सन्निहितेन कृष्णेनेन्द्रकृतवञ्चनानिवेदनपूर्वकं मरुप्रदेशे जललाभ-रूपवरदानम् ॥ ३ ॥

---

उदङ्कः—

अभिजानामि जगतः कर्तारं त्वां जनार्दन ।
नूनं भवत्प्रसादोऽयम् इति मे नात्र संशयः ॥ १

चित्तं च सुप्रसन्नं मे त्वद्भावगतमच्युत ।
विनिवृत्तश्च मे शाप इति विद्धि यदूत्तम ॥ २

यदि त्वनुग्रहं कञ्चित् त्वत्तोऽर्होऽहं जनार्दन ।
द्रष्टुमिच्छामि ते रूपं वैष्णवं मां निदर्शय ॥ ३

वैशम्पायनः—

ततस्स तस्मै प्रीतात्मा दर्शयामास तद्वपुः ।
शाश्वतं वैष्णवं धीमान् यद्ददर्श धनञ्जयः ॥ ४

स ददर्श महात्मानं विश्वरूपं महाभुजम् ।
विस्मयं च ययौ विप्रस् तद् दृष्ट्वा रूपमैश्वरम् ॥ ५

उदङ्कः—

नमो नमस्ते सर्वात्मन् नारायण परात् पर ।

परमात्मन् पद्मनाभ पुण्डरीकाक्ष माधव ॥ ६
हिरण्यगर्भरूपाय संसारोत्तारणाय च ।
पुरुषाय पुराणाय चान्तर्यामाय ते नमः ॥ ७

अविद्यातिमिरादित्यं भवव्याधिमहौषधिम् ।
संसारार्णवपारं त्वां प्रणमामि गतिर्भव ॥ ८

सर्ववेदैकवेद्याय सर्वदेवमयाय च ।
वासुदेवाय नित्याय नमो भक्तप्रियाय ते ॥ ९

दयया दुःखमोहान्मां समुद्धर्तुमिहार्हसि ।
कर्मभिर्बहुभिः पापैर् बद्धं पाहि जनार्दन ॥ १०

विश्वरूप नमस्तेऽस्तु यस्य ते रूपमैश्वरम् ॥ १०॥
पद्भ्यां ते पृथिवी व्याप्ता शिरसा चावृतं नभः ॥ ११

द्यावापृथिव्योर्यन्मध्यं जठरेण तदावृतम् ।
भुजाभ्यामावृताश्चाशास् त्वमिदं सर्वमच्युत ॥ १२

संहरस्व पुनर्देव रूपमक्षय्यमुत्तमम् ।
पुनस्त्वां स्वेन रूपेण द्रष्टुमिच्छामि शाश्वतम् ॥ १३

वैशम्पायनः—

तमुवाच प्रसन्नात्मा गोविन्दो जनमेजय ।
वरं वृणीष्वेति तदा तमुदङ्कोऽब्रवीदिदम् ॥ १४

उदङ्कः—

पर्याप्त एष एवाद्य वरस्त्वत्तो महाद्युते ।

यत् ते रूपमिदं कृष्ण पश्यामि प्रभवाप्ययम् ॥ १५

वैशम्पायनः—

तमब्रवीत् पुनः कृष्णो मा त्वमत्र विचारय ।
अवश्यमेतत् कर्तव्यम् अमोघं दर्शनं मम ॥ १६

उदङ्कः—

अवश्यं करणीयं चेद् यदेवं मन्यसे विभो ।
[1]तोयमिच्छामि यत्रेष्टं मरुष्वेतद्धि दुर्लभम् ॥ १७

वैशम्पायनः—

ततस्संहृत्य तत् तेजः प्रोवाचोदङ्कमीश्वरः ।
एष्टव्ये सति चिन्त्योऽहम् इत्युक्त्वा द्वारकां ययौ ॥ १८

ततः कदाचिद्भगवान् उदङ्कस्तोयकाङ्क्षया ।
तृषितः परिचक्राम मरौ सस्मार चाच्युतम् ॥ १९

ततो दिग्वाससं धीमान् मातङ्गं मलपङ्किनम् ।
अपश्यत मरौ तस्मिन् श्वगणैः परिवारितम् ॥ २०

भीषणं बद्धनिस्त्रिंशं बाणकार्मुकधारिणम् ।
तस्याधस्स्रोतसोऽपश्यद् वारि भूरि द्विजोत्तमः ॥ २१

स्मरन्तं स च तं प्राह मातङ्गः प्रहसन्निव ॥ २१॥

मातङ्गः—

एह्युदङ्क प्रतीच्छस्व मत्तो वारि भृगूद्वह ।

---

1. घ—नास्तीदमर्धम् ।

कृपा हि मे सुमहती त्वां [1]दृष्ट्वा तृट्समन्वितम् ॥ २२॥

वैशम्पायनः—

इत्युक्तस्तेन स मुनिस् तत् तोयं नाभ्यनन्दत ।
चुकोप च स तं धीमान् वाग्भिरुग्राभिरच्युतम् ॥ २३॥

पुनः पुनश्च मातङ्गः पिबस्वेति तमब्रवीत् ।
न चापिबत् स च क्रोधात् क्षुभितेनान्तरात्मना ॥ २४॥

स तथा निश्चयात् तेन प्रत्याख्यातो महामनाः ।
श्वभिस्सह महाराज तत्रैवान्तरधीयत ॥ २५॥

उदङ्कस्तं तथा दृष्ट्वा ततो व्रीडितमानसः ।
मेने प्रलब्धमात्मानं कृष्णेनामिततेजसा ॥ २६॥

अथ तेनैव मार्गेण शङ्खचक्रगदाधरः ।
आजगाम महाबाहुर् उदङ्कश्चैनमब्रवीत् ॥ २७॥

उदङ्कः—

[2]न युक्तं तादृशं दातुं त्वया पुरुषसत्तम ।
सलिलं विप्रमुख्येभ्यो मातङ्गस्रोतसा विभो ॥ २८॥

वैशम्पायनः—

इत्युक्तवचनं तं तु महाबुद्धिर्जनार्दनः ।
उदङ्कं श्लक्ष्णया वाचा सान्त्वयन्निदमब्रवीत् ॥ २९॥

---

1. ब—दृष्ट्वाऽस क्षमान्वितम्। 2. अ—नास्तीतः अर्धचतुष्टयम्

श्रीभगवान्—

यादृशेनैव रूपेण योग्यं दातुमनेन वै ।
तादृशं खलु ते दत्तं त्वं तु तन्नावबुध्यसे ॥ ३०॥

मया त्वदर्थमुक्तो हि वज्रपाणिः पुरन्दरः ।
उदङ्कायामृतं देहि तोयरूपमिति प्रभुः ॥ ३१॥

स मामुवाच देवेन्द्रो न मर्त्योऽमर्त्यतां व्रजेत् ।
अन्यमस्मै वरं देहीत्यसकृद् भृगुनन्दन ॥ ३२॥

अमृतं देयमित्येव मयोक्तस्स शचीपतिः ।
स मां प्रसाद्य देवेन्द्रः पुनरेवेदमब्रवीत् ॥ ३३॥

देवेन्द्रः—

यदि देयमवश्यं चेन्मातङ्गोऽहं महाद्युते ।
भूत्वाऽमृतं प्रदास्यामि भार्गवाय महात्मने ॥ ३४॥

यद्येतत् प्रतिगृह्णाति भार्गवोऽमृतमद्य वै ।
प्रदातुमेष गच्छामि भार्गवायामृतं विभो ॥ ३५॥

प्रत्याख्यातस्त्वहं तेन न दास्यामीति भार्गव ॥ ३६

श्रीभगवान्—

स तथा [1]समयं कृत्वा तेन रूपेण वासवः ।
उपस्थितस्त्वया चापि प्रत्याख्यातोऽमृतं ददत् ॥ ३७
चाण्डालरूपी भगवान् सुमहांस्ते व्यतिक्रमः ॥ ३७॥

यत्तु शक्यं मया कर्तुं भूय एव तवेप्सितम् ।

---

1. क-ख—तेन रूपेण वासवस्समुपस्थितः ।

तोयेप्सां तव दुर्धर्षां करिष्ये सफलामहम् ॥ ३८॥

येष्वहस्सु तव ब्रह्मन् सलिलेप्सा भविष्यति ।
तदा मरौ भविष्यन्ति जलपूर्णाः पयोधराः ॥ ३९॥

रसवच्च प्रदास्यन्ति तोयं ते भृगुनन्दन ।
उदङ्कमेघा इत्युक्ताः ख्यातिं यास्यन्ति चापि ते ॥ ४०॥

वैशम्पायनः—

इत्युक्तः प्रीतिमान् विप्रः कृष्णेन स बभूव ह ।
अद्याप्युदङ्कमेघाश्च मरौ [1]वर्षन्ति भारत ॥ ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
॥ ९२ ॥ अनुगीतापर्वणि द्वाचत्वारिंशोऽध्यायः ॥४२ ॥
[ अस्मिन्नध्याये ४१॥ श्लोकाः ]

## ॥ एकोनषष्टितमोऽध्यायः ॥

वैशम्पायनेन जनमेजयं प्रत्युदङ्कोपाख्यानकथनारम्भः ॥ १॥ उदङ्ककृतपरिचर्याविशेषतुष्टेन गौतमेन तस्मै प्रीत्यतिशयेन चिरादपि गृहगमनायाननुज्ञानम् ॥ २ ॥ कदाचन गुरुशासनेन काष्ठभारमाहृतवतोदङ्केन काष्ठलग्नजरापलितनिजकेशावलोकनेन परिदेवनम् ॥ ३ ॥ ततस्तदवबोधितनिजरोदनहेतुना गुरुणा तस्मै निजतनयाप्रतिपादनम् ॥ ४ ॥ ततस्तेन गुरुपत्नीनिदेशेन कुण्डलयाचनाय सौदासं प्रति गमनम् ॥ ५ ॥

जनमेजयः—

उदङ्कः केन तपसा संयुक्तस्स महातपाः ।
यश्शापं दातुकामोऽभूद् विष्णवे प्रभविष्णवे ॥ १

1. क-ख—वर्तन्ति ।

वैशम्पायनः—

उदङ्को महता युक्तस् तपसा जनमेजय ।
गुरुभक्तस्स तेजस्वी नान्यत् किञ्चिदपूजयत् ॥ २

सर्वेषामृषिपुत्राणाम् एष चासीन्मनोरथः ।
औदङ्कीं गुरुवृत्तिं वै प्राप्नुयामेति भारत ॥ ३

गौतमस्य तु [1]शिष्याणां बहूनां जनमेजय ।
उदङ्केऽभ्यधिका प्रीतिस् स्नेहश्चैवाभवत् तदा ॥ ४

स तस्य दमशौचाभ्यां [2]विक्रान्तेन च कर्मणा ।
सम्यक् चैवोपचारेण गौतमः प्रीतिमानभूत् ॥ ५

अथ शिष्यसहस्राणि समनुज्ञाय गौतमः ।
उदङ्कं परया प्रीत्या नाभ्यनुज्ञातुमैच्छत ॥ ६

तं क्रमेण जरा तात परिरेभे महामुनिम् ।
न चान्वबुध्यत तदा स मुनिर्गुरुवत्सलः ॥ ७

ततः कदाचिद्राजेन्द्र काष्ठान्यानायितुं ययौ ।
उदङ्कः काष्ठभारं तु महान्तं समुपानयत् ॥ ८

स तद्भाराभिभूतात्मा काष्ठभारमरिन्दम ।
निष्पिपेष क्षितौ राजन् परिश्रान्तो बुभुक्षितः ॥ ९

तस्य काष्ठे विलग्नाऽभूज् जटा रूप्यसमप्रभा ।

---

1. क-ख-घ—पुत्राणां । 2. क-ख—विज्ञातेन च ।

ततः काष्ठैस्सह तदा पपात धरणीतले ॥ १०

ततस्स भारनिष्पिष्टः [1]क्षुधाविष्टश्च भार्गवः ।
दृष्ट्वा तां वयसोऽवस्थां रुरोदार्तस्वरं तदा ॥ ११

ततो गुरुसुता तस्य पद्मपत्रायतेक्षणा ।
जग्राहाश्रूणि सुश्रोणी तपोयुक्तस्य धीमतः ॥ १२
पितुर्नियोगाद्धर्मज्ञा शिरसाऽवनता तदा ॥ १२॥

तस्या [2]निपेततुर्दग्धौ करौ तैरश्रुबिन्दुभिः ।
न हि तानश्रुपातान् वै शक्ता धारयितुं मही ॥ १३॥
गौतमस्त्वब्रवीद्विप्रम् उदङ्कं [3]प्रीतमानसः ॥ १४

गौतमः—

कस्मात् तात तवाद्येह शोकोत्तरमिदं मनः ।
स स्वैरं ब्रूहि विप्रर्षे श्रोतुमिच्छामि ते वचः ॥ १५

उदङ्कः—

भवद्गतेन मनसा भवत्प्रियचिकीर्षया ।
भवद्भक्तिगतेनेह भवद्भावानुगेन च ॥ १६
जरेयं नावबुद्धा मे नाभिज्ञातं सुखं च मे ।
शतवर्षोषितं हि त्वं न मामभ्यनुजज्ञिवान् ॥ १७
भवता ह्यभ्यनुज्ञाताश् शिष्याः प्रत्यवरा मम ।

---

1. क-ख—क्षुधार्तस्स भृगूद्वहः।
2. क-ख—निपेतुर्निर्दग्धौ करौ तस्या।
3. क-घ—विप्रसत्तमः। ख—मुनिसत्तमः।

उपपन्ना द्विजश्रेष्ठ शतशोऽथ सहस्रशः ॥ १८

गौतमः—

त्वत्प्रीतियुक्तेन मया गुरुशुश्रूषया तव ।
व्यतिक्रामन्महान् कालो नावबुद्धो द्विजर्षभ ॥ १९

किं त्वद्य यदि ते श्रद्धा गमनं प्रति भार्गव ।
अनुज्ञां प्राप्य मत्तस्त्वं स्वगृहान् गच्छ मा चिरम् ॥ २०

उदङ्कः—

गुर्वर्थं किं प्रयच्छामि ब्रूहि त्वं द्विजसत्तम ।
किमुपाहृत्य गच्छेयम् अनुज्ञातस्त्वया विभो ॥ २१

गौतमः—

दक्षिणा परितोषो वै गुरूणां सद्भिरुच्यते ।
तव ह्याचरतो धर्मं तुष्टोऽहं वै न संशयः ॥ २२

इत्थं हि परितुष्टं मां विजानीहि भृगूद्वह ॥ २२॥

युवा षोडशवर्षो हि तदद्य त्वं भविष्यसि ।
ददानि पत्नीं कन्यां च स्वां ते दुहितरं द्विज ॥ २३॥

एतामृते हि नान्या वै त्वत्तेजोऽर्हति सेवितुम् ॥ २४

वैशम्पायनः—

ततस्तां प्रतिजग्राह युवा भूत्वा तपस्विनीम् ।
गुरुणा चाभ्यनुज्ञातो गुरुपत्नीमथाब्रवीत् ॥ २५

उदङ्कः—

किं भवत्यै प्रयच्छामि गुर्वर्थं विनियुङ्क्ष्व माम् ।
प्रियं हि तव काङ्क्षामि प्राणैरपि धनैरपि ॥ २६

यद्दुर्लभं हि लोकेऽस्मिन् रत्नमत्यद्भुतं भवेत् ।
तदानयेयं तपसा न हि मेऽत्रास्ति संशयः ॥ २७

अहल्या—

[1]परितुष्टाऽस्मि ते विप्र नित्यं भगवता सह ।
पर्याप्तमेतद्भद्रं ते गच्छ तात यथेप्सितम् ॥ २८

वैशम्पायनः—

उदङ्कस्तु महाराज पुनरेवाब्रवीद्वचः ॥ २८॥

उदङ्कः—

आज्ञापयस्व मां मातः किं कर्तव्यं प्रियं तव ॥ २९

अहल्या—

सौदासपत्न्या विधृते दिव्ये ये मणिकुण्डले ।
ते समानय भद्रं ते गुर्वर्थस्स कृतो भवेत् ॥ ३०

वैशम्पायनः—

स तथेति प्रतिश्रुत्य जगाम जनमेजय ।
गुरुपत्नीप्रियार्थं वै ते समानयितुं तदा ॥ ३१

स जगाम ततश्शीघ्रम् उदङ्को ब्राह्मणर्षभः ।

---

1. क-ख-घ—इतः श्लोकद्वयं नास्ति

सौदासं पुरुषादं वै भिक्षितुं मणिकुण्डले ॥ ३२

गौतमस्त्वब्रवीत् पत्नीम् उदङ्को नात्र दृश्यते ।
इति पृष्टा तमाचष्ट कुण्डलार्थं गतं तु वै ॥ ३३

ततः प्रोवाच पत्नीं स न ते सम्यगिदं कृतम् ।
शप्तस्स पार्थिवो नूनं ब्राह्मणं तं हनिष्यति ॥ ३४

अहल्या—

अजानन्त्या नियुक्तस्स भगवन् ब्राह्मणोऽद्य वै ।
भवत्प्रसादान्न भयं किञ्चित् तस्य भविष्यति ॥ ३५

वैशम्पायनः—

इत्युक्तः प्राह तां पत्नीम् एवमस्त्विति गौतमः ।
उदङ्कोऽपि वने शून्ये राजानं तं ददर्श ह ॥ ३६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
॥ ९२ ॥ अनुगीतापर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
[ अस्मिन्नध्याये ३६ श्लोकाः ]

## ॥ षष्टितमोऽध्यायः ॥

शापाद्राक्षसत्वं गतेन सौदासेनोदङ्कभक्षणोद्यमे उदङ्केन पुनः प्रत्यागमनप्रतिज्ञापूर्वकं तं प्रति कुण्डलयाचनम् ॥ १ ॥ उदङ्केन सौदासवचसा तत्पत्नीं प्रति कुण्डलयाचने तया तं प्रति मणिकुण्डलमहिमादिकथनपूर्वकं राजाभिज्ञानानयनचोदना ॥ २ ॥

वैशम्पायनः—

स तं दृष्ट्वा तथाभूतं राजानं घोरदर्शनम् ।
दीर्घश्मश्रुधरं नृणां शोणितेन समुक्षितम् ॥ १

चकार न व्यथां विप्रो राजा त्वेनमथाब्रवीत् ।
प्रत्युत्थाय महातेजा भयकर्ता यमोपमः ॥ २

सौदासः—

दिष्ट्या त्वमसि कल्याण षष्ठे काले ममान्तिकम् ।
भक्ष्यं मृगयमाणस्य सम्प्राप्तो द्विजसत्तम ॥ ३
[1]न च शक्यस्त्वमुत्स्रष्टुं क्षुधितस्य ममाद्य वै ॥ ३॥

उदङ्कः—

[2]राजन् गुर्वर्थिनं विद्धि चरन्तं मामिहागतम् ।
न च गुर्वर्थमुद्युक्तं हिंस्यमाहुर्मनीषिणः ॥ ४॥

सौदासः—

षष्ठे काले ममाहारो विहितो द्विजसत्तम ।
न शक्यस्त्वं समुत्स्रष्टुं क्षुधितेन मयाऽद्य वै ॥ ५॥

उदङ्कः—

एवमस्तु महाराज समयः क्रियतां तु वै ।
गुर्वर्थमभिनिर्वर्त्य पुनरेष्यामि ते वशम् ॥ ६॥
[3]संश्रुतश्च मया योऽर्थो गुरवे राजसत्तम ।
त्वदधीनस्स राजेन्द्र तं त्वा भिक्षे नरेश्वर ॥ ७॥
[4]ददासि विप्रमुख्येभ्यस् त्वं हि रत्नानि नित्यदा ।

---

1. क-ख-घ—नास्तीदमर्धम्
2. अ—श्लोकद्वयं न दृश्यते।
3. ख—अयं श्लोको नास्ति
4. अ—अर्धपञ्चकं नास्ति

दाता च त्वं नरव्याघ्र पात्रभूतः क्षितावहम् ॥ ८॥
पात्रं प्रतिग्रहे चापि विद्धि मां नृपसत्तम ॥ ९

उपाहृत्य गुरोरर्थं त्वदायत्तमरिन्दम ।
समयेनेह राजेन्द्र पुनरेष्यामि ते वशम् ॥ १०

सत्यं ते प्रतिजानामि नात्र मिथ्या कथञ्चन ।
अनृतं नोक्तपूर्वं मे स्वैरेष्वपि कुतोऽन्यथा ॥ ११

सौदासः—

यद्यस्मासु तवायत्तो गुर्वर्थः कृत एव सः ।
यदि चास्ति प्रतिग्राह्यं साम्प्रतं तद्ब्रवीहि मे ॥ १२

उदङ्कः—

प्रतिग्राह्यो वरो मे त्वं सदैव पुरुषर्षभ ।
सोऽहं त्वामनु सम्प्राप्तो भिक्षितुं मणिकुण्डले ॥ १३

सौदासः—

पत्न्यास्त्वं मम विप्रर्षे रुचिरे मणिकुण्डले ।
वरयस्वेदमन्यन्मे तं ते दास्यामि सुव्रत ॥ १४

उदङ्कः—

अलं ते व्यपदेशेन प्रमाणं यदि ते वयम् ।
प्रयच्छ कुण्डले मे त्वं सत्यवाग् भव वै विभो ॥ १५

वैशम्पायनः—

[1]इत्युक्तस्त्वब्रवीद्राजा तमुदङ्कं वचस्तदा ॥ १५॥

---

1. अ—अर्धाष्टकं नास्ति

सौदासः—

गच्छ मद्वचनाद्देवीं ब्रूहि देहीति सत्तम ॥ १६

सैवमुक्ता त्वया नूनं मद्वाक्येन शुचिव्रता ।

[1]प्रदास्यति द्विजश्रेष्ठ कुण्डले ते न संशयः ॥ १७

उदङ्कः—

क्व पत्नी भवतश्शक्या मया द्रष्टुं नरेश्वर ।

स्वयं वाऽपि भवान् पत्नीं किमर्थं नोपसर्पति ॥ १८

सौदासः—

द्रक्ष्यते भवता साऽद्य कस्मिंश्चिद्वननिर्झरे ।

षष्ठे काले न हि मया सा शक्या द्रष्टुमद्य वै ॥ १९

वैशम्पायनः—

उदङ्कस्तु तथेत्युक्त्वा जगाम भरतर्षभ ।

[2]मदयन्तीं च तां दृष्ट्वा [3]ज्ञापयत् स्वं प्रयोजनम् ॥ २०

सौदासवचनं श्रुत्वा ततस्सा पृथुलोचना ।

प्रत्युवाच महाबुद्धिम् उदङ्कं जनमेजय ॥ २१

मदयन्ती—

एवमेतन्महाब्रह्मन् नानृतं भाषसेऽनघ ।

अभिज्ञानं तु किञ्चिन्मे त्वमानेतुमिहार्हसि ॥ २२

इमे हि दिव्ये मणिकुण्डले शुभे

देवाश्च यक्षाश्च महोरगाश्च ।

---

1. घ—अर्धद्वयं नास्ति

2. क—कोशे सर्वत्र दमयन्ती इति वर्तते ।

तैस्तैरुपायैरपहर्तुकामाश्

छिद्रेषु नित्यं परितर्कयन्ते ॥ २३

निक्षिप्तमेतद्भुवि पन्नगास्तु

रत्नं समासाद्य परामृशेयुः ।

यक्षास्तथोच्छिष्टधृतं सुराश्च

निद्रावशं त्वां परिधर्षयेयुः ॥ २४

छिद्रेष्वेतेषु च सदा धृष्यसे च द्विजर्षभ ।

देवराक्षसयक्षाणाम् अप्रमत्तेन धार्यते ॥ २५

एते दिवाऽपि भासेते रात्रौ च द्विजसत्तम।

नक्तं नक्षत्रताराणां प्रभामाक्षिप्य वर्ततः ॥ २६

एते ह्यामुच्य भगवन् क्षुत्पिपासाभयं कुतः ।

विषाग्निश्वापदेभ्यश्च भयं जातु न विद्यते ॥ २७

ह्रस्वेन चैते आमुक्ते भवतो ह्रस्वके सदा ।

अनुरूपेण चामुक्ते तत्प्रमाणे [1]तथैव ते ॥ २८

एवंविधे ममाप्येते कुण्डले परमार्चिते ।

त्रिषु लोकेषु विख्याते तदभिज्ञानमानय ॥ २९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥
॥ ९२ ॥ अनुगीतापर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
[ अस्मिन्नध्याये २९ श्लोकाः ]

---

1. अ-घ—ऽभिजायते ।

## ॥ एकषष्टितमोऽध्यायः ॥

उदङ्केनाभिज्ञाननिवेदनेन मदयन्तीतः कुण्डलग्रहणपूर्वकं प्रतिनिवर्तनम् ॥ १ ॥ मध्येमार्गं क्षुधाविष्टेन तेन बिल्वतरुमारुह्य शाखायां कुण्डलासञ्जनपूर्वकं फलपातनाय शाखाचालनम् ॥ २ ॥ तत्र पतत्फलघट्टनेन कुण्डलयोरधःपतने केनचिदुरगवरेण तदपहृत्य नागलोकगमनम् ॥ ३ ॥ तत इन्द्रसाहाय्याद्भूविदारणेन नागलोकं गतेनोदङ्केन तत्राश्ववचसा तदपानदेशधमने तन्निर्गतधूमपटलनिरुद्धैः सर्पैरुदङ्काय कुण्डलप्रत्यर्पणम् ॥ ४ ॥ तत उदङ्केन गुरुपत्न्यै कुण्डलप्रदानम् ॥ ५ ॥

---

वैशम्पायनः—

स मित्रसहमासाद्य त्वभिज्ञानमयाचत ।
तस्मै ददावभिज्ञानं स चेक्ष्वाकुवरस्तदा ॥ १

सौदासः—

न चैवैषा गतिः क्षेम्या न चान्या विद्यते गतिः ।
एतन्मतं ममाज्ञाय प्रयच्छ मणिकुण्डले ॥ २

वैशम्पायनः—

इत्युक्तस्तामुदङ्कस्तु भर्तुर्वाक्यमथाब्रवीत् ।
श्रुत्वा तु सा ततः प्रादात् तस्मै ते मणिकुण्डले ॥ ३
अवाप्य कुण्डले ते तु राजानं पुनरब्रवीत् ॥ ३॥

उदङ्कः—

किमेतद्गुह्यवचनं श्रोतुमिच्छामि ते वचः ॥ ४

सौदासः—

प्रजातिसर्गाद्विप्रान् वै क्षत्रियाः पूजयन्ति ह ।
विप्रेभ्यश्चापि बहवो दोषाः प्रादुर्भवन्ति नः ॥ ५

सोऽहं द्विजेभ्यः प्रणतो विप्राद्दोषमवाप्तवान् ।
गतिमन्यां न पश्यामि मदयन्तीसहायवान् ॥ ६

न चान्यामपि पश्यामि गतिं गतिमतां वर ।
स्वर्गद्वारस्य गमने स्थाने चेह द्विजोत्तम ॥ ७

न हि राज्ञा विशेषेण विरुद्धेन द्विजातिभिः ।
शक्यं त्रिलोके संस्थातुं प्रेत्य वा सुखमेधितुम् ॥ ८

तदिष्टेन मयैवैते दत्ते स्वे मणिकुण्डले ।
यः कृतस्तेऽद्य समयस् सफलं तं कुरुष्व मे ॥ ९

उदङ्कः—

राजंस्तथैव कर्तास्मि पुनरेष्यामि ते वशम् ।
प्रश्नं च कञ्चित् प्रष्टुं त्वां व्यवसिष्ये परन्तप ॥ १०

सौदासः—

ब्रूहि विप्र यथाकामं प्रतिवक्तास्मि ते वचः ।
छेत्तास्मि संशयं तेऽहं न मेऽत्रास्ति विचारणा ॥ ११

उदङ्कः—

प्राहुर्वाक्सङ्गमं मित्रं धर्मनैपुण्यदर्शिनः ।
मित्रेषु यश्च विषमस् स्तेन इत्येव तं विदुः ॥ १२

स भवान् मित्रतामद्य सम्प्राप्तो मम पार्थिव ।
स मे बुद्धिं प्रयच्छ त्वं युक्तां बुद्धिमतां वर ॥ १३

अवाप्तार्थोऽहमद्यास्मि भवांश्च पुरुषादकः ।
भवत्सकाशमागन्तुं क्षमं मम न वेति वै ॥ १४

सौदासः—

समं चेदिह वक्तव्यं मया द्विजवरोत्तम ।
मत्समीपं द्विजश्रेष्ठ [1]नागन्तव्यं कथञ्चन ॥ १५

तत्रैव तु प्रपश्यामि श्रेयो भृगुकुलोद्वह ।
[2]आगच्छतो हि ते विप्र भवेन्मृत्युरसंशयः ॥ १६

वैशम्पायनः—

इत्युक्तस्स तदा राज्ञा क्षमं बुद्धिसमाहितम् ।
समनुज्ञाप्य राजानम् अहल्यां प्रति जग्मिवान् ॥ १७

गृहीत्वा कुण्डले दिव्ये गुरुपत्न्याः प्रियङ्करः ।
जवेन महता प्रायाद् गौतमस्याश्रमं प्रति ॥ १८

यथा तथा रक्षणं च मदयन्त्याऽभिभाषितम् ।
तथा ते कुण्डले बद्ध्वा तदा कृष्णाजिनेन तत् ॥ १९

स कस्मिंश्चित् क्षुधाऽऽविष्टः फलभारावनामितम् ।
बिल्वं ददर्श तस्मिंश्चाप्यारुरोह क्षुधाऽन्वितः ॥ २०

---

1. क-ख—न गन्तव्यं ।
2. क-ख—आगन्तव्यं । ख—अगन्तव्यं ।

शाखास्वासज्य तस्यैव कृष्णाजिनमरिन्दम ॥　　२०॥

यस्मिंस्ते कुण्डले बद्धे तदा द्विजवरेण वै ।

विशीर्णबन्धने तस्मिन् गते कृष्णाजिने महीम् ॥　　२१॥

अपश्यद्भुजगः कश्चित् ते तत्र मणिकुण्डले ॥　　२२

ऐरावतकुलोद्भूतश् शीघ्रो भूत्वा तदा स वै ।

विगृह्यास्येन वल्मीकं विवेशाथ सकुण्डलः ॥　　२३

ह्रियमाणे स दृष्ट्वा तु कुण्डले पन्नगेन तु ।

पपात वृक्षात् सोद्वेगो दुःखात् परमकोपनः ॥　　२४

स दण्डकाष्ठमादाय वल्मीकं न्यखनत् तदा ।

[1]अहानि त्रिंशदव्यग्रः पञ्च चान्यानि भारत ॥　　२५

क्रोधामर्षाभितप्ताङ्गस् ततो वै द्विजसत्तमः ॥　　२५॥

तस्य वेगमसह्यं तम् असहन्ती वसुन्धरा ।

दण्डकाष्ठाभिनुन्नाङ्गी चचाल भृशमातुरा ॥　　२६॥

ततः खनत एवास्य विप्रर्षेर्धरणीतलम् ।

नागलोकस्य पन्थानं कामयानस्य निश्चयात् ॥　　२७॥

रथेन हरियुक्तेन तं देशमभिजग्मिवान् ।

वज्रपाणिर्महातेजा ददर्शाथ द्विजोत्तमम् ॥　　२८॥

स तत्र ब्राह्मणो भूत्वा तस्य दुःखेन दुःखितः ।

---

1. क-ख—नास्तीदमर्धम्

उदङ्कमब्रवीत् तात नैतच्छक्यं त्वयेति वै ॥ २९॥

इतोऽस्ति नागलोको वै योजनानि सहस्रशः ।
न दण्डकाष्ठसाध्यं च मन्ये कार्यमिदं तव ॥ ३०॥

उदङ्कः—

नागलोकाद्यदि ब्रह्मन् न शक्ये कुण्डले मया ।
प्राप्तुं प्राणान् विमोक्ष्यामि पश्यतस्ते द्विजोत्तम ॥ ३१॥

वैशम्पायनः—

यदा स नाशकत् तस्य निश्चयं कर्तुमन्यथा ।
वज्रपाणिस्तदा दण्डं वज्रास्त्रेण युयोज ह ॥ ३२॥

ततो वज्रप्रहारैस्तैर् दार्यमाणा वसुन्धरा ।
नागलोकस्य पन्थानम् अकरोज्जनमेजय ॥ ३३॥

स तेन मार्गेण तदा नागलोकं विवेश ह ॥ ३४

ददर्श नागलोकं च योजनानि सहस्रशः ॥ ३४॥

प्राकारनिचयैर्दिव्यैर् मणिमुक्ताद्यलङ्कृतैः ।
[1]उपपन्नं महाभाग शतकुम्भमयैस्तथा ॥ ३४॥

वापीस्स्फटिक[2]सोपाना नदीश्च विमलोदकाः ।
ददर्श वृक्षांश्च बहून् नानाद्विजगणायुतान् ॥ ३६॥

नागलोकस्य विवरं स ददर्श भृगूद्वहः ।

---

1. अ—शातकुम्भमयैश्चैव राजतैश्च सहस्रशः ॥ [ अधिकः पाठः]
2. क-ख-घ—सङ्काशास् सोपानविमलोदकाः ।

पञ्चयोजनविस्तारम् आयतं [1]शतयोजनम् ॥ ३७॥

नागलोकमुदङ्कस्तु प्रेक्ष्य दीनोऽभवत् तदा ।
निराशश्चाभवत् तत्र कुण्डलाहरणे ततः ॥ ३८॥

तत्र प्रोवाच तुरगस् तं कृष्णश्वेतवालधिः ।
ताम्रास्यनेत्रः कौरव्य प्रज्वलन्निव तेजसा ॥ ३९॥

अश्वः—

धम ह्यपानमेतन्मे ततस्त्वं विप्र लप्स्यसे ।
ऐरावतसुतेनेह तवानीते हि कुण्डले ॥ ४०॥

मा जुगुप्सां कृथाः पुत्र त्वमत्रार्थे कथञ्चन ।
आसेवितस्त्वयैतद्धि गौतमस्याश्रमे तदा ॥ ४१॥

उदङ्कः—

कथं भवन्तं जानीयाम् उपाध्यायाश्रमं प्रति ।
तन्मया चीर्णपूर्वं च श्रोतुमिच्छामि तत्त्वतः ॥ ४२॥

अश्वः—

गुरोर्गुरुं मां जानीहि ज्वलितं जातवेदसम् ॥ ४३

त्वया ह्यहं सदा वत्स गुरोरर्थे तपोधन ।
सततं पूजितो विप्र शुचिना भृगुसत्तम ॥ ४४
ततश्श्रेयो विधास्यामि तवैव कुरु मा चिरम् ॥ ४४॥

वैशम्पायनः—

इत्युक्तस्स तथाऽकार्षीद् उदङ्कश्चित्रभानुना ।

---

1. क-ख-घ—दश।

घृतार्चिः प्रीतिमांश्चापि प्रजज्वाल दिधक्षया ॥ ४५॥
ततोऽस्य रोमकूपेभ्यो ध्मायमानस्य भारत ।
घनः प्रादुरभूद्धूमो नागलोकभयावहः ॥ ४६॥
तेन धूमेन सहसा वर्धमानेन भारत ।
नागलोके महाराज न प्राज्ञायत किञ्चन ॥ ४७॥
हाहाकृतमभूत् सर्वम् ऐरावतनिवेशनम् ।
वासुकिप्रमुखानां च नागानां जनमेजय ॥ ४८॥
न प्राकाशन्त वेश्मानि धूमरुद्धानि सर्वशः ।
नीहारसंवृतानीव वनानि गिरयस्तदा ॥ ४९॥
ते धूमरक्तनयना वह्नितेजोभितापिताः ।
आजग्मुर्निश्चयं ज्ञातुं भार्गवस्यातितेजसः ॥ ५०॥
श्रुत्वा तु निश्चयं तस्य महर्षेस्तिग्मतेजसः ।
सम्भ्रान्तमनसस्सर्वे पूजां चक्रुर्यथाविधि ॥ ५१॥
सर्वे प्राञ्जलयो नागा बालवृद्धपुरोगमाः ।
शिरोभिः प्रणिपत्योचुः प्रसीद भगवन्निति ॥ ५२॥
प्रसाद्य ब्राह्मणं ते तु पाद्यमर्घ्यं निवेद्य च ।
प्रायच्छत् कुण्डले दिव्ये [1]पन्नगाः परमार्चिते ॥ ५३॥
[2]ततस्स पूजितो नागैस् तदोदङ्कः प्रतापवान् ।

---

1. अ—गुरुपत्न्यै तवानघ। 2. अ—अर्धचतुष्टयं नास्ति

अग्निं प्रदक्षिणं कृत्वा जगाम गुरुसद्म तत् ॥　　५४॥

स गत्वा त्वरितो राजन् गौतमस्य निवेशनम् ।
प्रायच्छत् कुण्डले दिव्ये गुरुपत्न्यास्तदाऽनघ ॥　　५५॥

एवं लोकद्वयं तेन विप्रेण जनमेजय ।
परिक्रम्याहृते दिव्ये ततस्ते मणिकुण्डले ॥　　५६॥

एवंप्रभावस्स मुनिर् उदङ्को भरतर्षभ ।
[1]परेण तपसा युक्तो यन्मां त्वं परिपृच्छसि ॥　　५७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

॥ ९२ ॥ अनुगीतापर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

[ अस्मिन्नध्याये ५७॥ श्लोकाः ]

---

## ॥ द्विषष्टितमोऽध्यायः ॥

उदङ्काय वरदानात् परं द्वारकामागच्छता कृष्णेन मध्ये रैवतकप्रवेशः ॥ १ ॥ रैवतकोत्सववर्णनम् ॥ २ ॥ ततः कृष्णेन स्वभवनमेत्य मातापित्रोरभिवादनम् ॥ ३ ॥

---

जनमेजयः—

उदङ्काय वरं दत्त्वा गोविन्दो द्विजसत्तम ।
अत ऊर्ध्वं महाबाहुः किं चकार महायशाः ॥　　१

---

1. अ—इदमर्धं नास्ति

वैशम्पायनः—

[1]दत्त्वा वरमुदङ्काय प्रायात् सात्यकिना सह ।
द्वारकामेव गोविन्दश् शीघ्रवेगैर्हयोत्तमैः ॥ २

स सरांसि नदीश्चैव वनानि विविधानि च ।
अतिक्रम्याससादाथ रम्यां द्वारवतीं पुरीम् ॥ ३

वर्तमाने महाराज महे रैवतकस्य तु ।
उपायात् पुण्डरीकाक्षो युयुधानानुगस्तथा ॥ ४

अलङ्कृतस्तु स गिरिर् नानारूपैर्विचित्रकैः ।
बभौ रुक्ममयैः कोशैस् सर्वत्र पुरुषर्षभ ॥ ५

काञ्चनस्रग्भिरग्र्याभिस् सुमनोभिस्तथैव च ।
वासोभिश्च महाशैलः कल्पवृक्षैश्च सर्वशः ॥ ६

दीपवृक्षैश्च सौवर्णैर् अभीक्ष्णमभिशोभितः ।
गुहानिर्झरभागेषु दीपभूतो बभूव ह ॥ ७

पताकाभिश्च चित्राभिः सङ्घट्टाभिस्समन्ततः ।
पुंभिस्स्त्रीभिश्च सम्पूर्णः प्रगीत इव चाभवत् ॥ ८

अतीव प्रेक्षणीयोऽभू[2]न्मेरुर्मुनिगणैरिव ॥ ८॥

मत्तानां हृष्टरूपाणां स्त्रीणां पुंसां च भारत ।

---

1. घ—इतः श्लोकद्वयं नास्ति
2. घ—न्मेरुः स्वर । क-ख—न्मरुत्सुरगणैरिव ।

गायतां पर्वतेन्द्रस्य दिविस्पृगिव निस्स्वनः ॥ ९॥

[1]मत्तप्रमत्तसम्मत्तक्ष्वेडिताकृष्टसङ्कुलः ॥ १०

तथा किलकिलाशब्दैर् भूरभूत् सुमनोरमा ॥ १०॥

[2]विपणापणवान् रम्यो भक्ष्यभोज्यविहारवान् ।
वस्त्रमाल्योत्करयुतो वीणावेणुमृदङ्गवान् ॥ ११॥

सुरामैरेयमिश्रेण भक्ष्यभोज्येन चैव हि ।
दीनान्धकृपणादिभ्यो दीयमानेन चानिशम् ॥ १२॥

बभौ परमकल्याणो महस्तस्य महागिरेः ॥ १३

पुण्यावसथवान् वीरैः पुण्यकृद्भिर्निषेवितः ।
विहारो वृष्णिवीराणां बभौ रैवतकस्य च ॥ १४

स तथा वेश्मसङ्कीर्णो देवलोक इवाबभौ ।
तदा च कृष्ण[3]सान्निध्यान्मुदा देवगणैर्युतः ॥ १५

स्तुवन्त्यन्तर्हिता देवा गन्धर्वाश्च सहर्षिभिः ॥ १५॥

देवगन्धर्वाः—

साधकस्सर्वधर्माणाम् असुराणां विनाशकः ।
त्वं स्रष्टा सृज्यमाधारं कारणं धर्मवेदवित् ॥ १६॥

---

1. क-ख—प्रमत्तमत्तसम्मत्तक्ष्वेलितोत्क्रुष्टसङ्कुला ।
2. अ—अर्धचतुष्टयं नास्ति
3. क-ख-घ—सान्निध्यमासाद्य भरतर्षभ ।

त्वया [1]यत् क्रियते देव न जानीमोऽत्र मायया ॥ १७

केवलं त्वाऽभिजानीमश् शरणं परमेश्वरम् ।
ब्रह्मादीनां च गोविन्द सान्निध्यं शरणं नमः ॥ १८

वैशम्पायनः—

इति स्तुते मानुषैश्च पूजिते देवकीसुते ।
[2]शक्रसद्मप्रतीकाशो बभूव स हि शैलराट् ॥ १९

ततस्सम्पूज्यमानस्स विवेश भवनं शुभम् ।
गोविन्दस्सात्यकिश्चापि जग्मतुर्भवनं [3]स्वकम् ॥ २०

विवेश च स हृष्टात्मा चिरकालप्रवासकः ।
कृत्वा नसुकरं कर्म दानवेष्विव वासवः ॥ २१

उपायान्तं तु वार्ष्णेयं भोजवृष्ण्यन्धकास्तदा ।
अभ्यगच्छन्महात्मानं देवा इव शतक्रतुम् ॥ २२

स तानभ्यर्च्य मेधावी पृष्ट्वा च कुशलं तदा ।
अभ्यवादयत प्रीतः पितरं मातरं तदा ॥ २३

ताभ्यां च सम्परिष्वक्तस् सान्त्वितस्स महाभुजः ।
उपोपविष्टस्तैस्सर्वैर् वृष्णिभिः परिवारितः ॥ २४

---

1. क-ख—ऽयं क्रियते 2. क-ख-ब—नास्तीदमर्धद्वयम् ।
3. क-ख—शुभम् ।

स विश्रान्तो महातेजाः कृतपादावसेचनः ।
कथयामास तं कृत्स्नं पृष्टः पित्रा महाहवम् ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥
॥ ९२ ॥ अनुगीतापर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
[ अस्मिन्नध्याये २५ श्लोकाः ]

---

## ॥ त्रिषष्टितमोऽध्यायः ॥

कृष्णेन वसुदेवादीन् प्रति कुरुपाण्डवयुद्धप्रकारकथनम् ॥ १ ॥

---

वसुदेवः—

श्रुतवानस्मि वार्ष्णेय सङ्ग्रामं परमाद्भुतम् ।
नराणां वदतां पुत्र कथोद्घातेषु नित्यशः ॥ १

त्वं तु प्रत्यक्षदर्शी च कार्यज्ञश्च महाभुज ।
तस्मात् प्रब्रूहि सङ्ग्रामं याथातथ्येन मेऽनघ ॥ २

कथं तदभवद्युद्धं पाण्डवानां महात्मनाम् ।
भीष्मकर्णकृपद्रोणशल्यादिभिरनुत्तमम् ॥ ३

अन्येषां क्षत्रियाणां च कृतास्त्राणामनेकशः ।
नानावेषाकृतिमतां नानादेशनिवासिनाम् ॥ ४

वैशम्पायनः—

इत्युक्तः पुण्डरीकाक्षः पित्रा मातुस्तथाऽन्तिके ।
शशंस कुरुवीराणां सङ्ग्रामे निधनं यथा ॥ ५

श्रीभगवान्—

अत्यद्भुतानि कर्माणि क्षत्रियाणां महात्मनाम् ।
बहुलत्वान्न सङ्ख्यातुं [1]शक्योन्यब्दगणैरपि ॥ ६

प्राधान्यतस्तु गदतस् समासेनैव मे शृणु ।
कर्माणि कुरुवीराणां यथावद्मरद्युते ॥ ७

भीष्मस्सेनापतिरभूद् एकादशचमूपतिः ।
कौरव्यः कौरवेयाणां देवानामिव पावकिः ॥ ८

शिखण्डी पाण्डुपुत्राणां नेता सप्तचमूपतिः ।
बभूव रक्षितो नित्यं धीमता सव्यसाचिना ॥ ९

[2]तेषां तदभवद्युद्धं दशाहानि महात्मनाम् ।
कुरूणां पाण्डवेयानां सुमहद्रोमहर्षणम् ॥ १०

[3]अयुध्यमानं गाङ्गेयं शिखण्डी तं महाद्युतिम् ।
जघान बहुभिर्बाणैस् सह गाण्डीवधन्वना ॥ ११

अकरोत् स ततः कालं शरतल्पगतो मुनिः ।

1. ख—शक्यं नाब्दगणैरपि । अ-घ—शक्योवर्षशतैरपि ।
2. घ—इतः श्लोकद्वयं नास्ति
3. अ-घ—ततश्शिखण्डी गाङ्गेयं अयुध्यत महाहवे । [ अधिकः पाठः ]

अयनं दक्षिणं हित्वा सम्प्राप्ते चोत्तरायणे ॥ १२
ततस्सेनापतिरभूद् द्रोणो ब्रह्मविदां वरः ।
विप्रेन्द्रः कौरवेन्द्रस्य काव्यो दैत्यपतेरिव ॥ १३
अक्षौहिणीभिश्शिष्टाभिर् नवभिर्द्विजसत्तमः ।
संवृतस्समरश्लाघी गुप्तः [1]कृपसुतादिभिः ॥ १४
धृष्टद्युम्नस्त्वभून्नेता पाण्डवानां महास्त्रवित् ।
गुप्तो भीमेन मेधावी मित्रेण वरुणो यथा ॥ १५
पाण्डुसेनापरिवृतो द्रोणप्रेप्सुर्महामनाः ।
पितुर्निकारान् संस्मृत्य रणे कर्माकरोन्महत् ॥ १६
तस्मिंस्ते पृथिवीपाला द्रोणपार्षतसङ्गमे ।
नानादेशागता वीराः प्रायशो निधनं गताः ॥ १७
दिनानि पञ्च तद्युद्धम् अभूत् परमदारुणम् ।
ततो द्रोणः परिश्रान्तो धृष्टद्युम्नवशं गतः ॥ १८
ततस्सेनापतिरभूत् कर्णो दौर्योधने बले ।
अक्षौहिणीभिश्शिष्टाभिर् वृतः पञ्चभिराहवे ॥ १९
तिस्रस्तु पाण्डुपुत्राणां शिष्टा बीभत्सुपालिताः ।
हतप्रवीरभूयिष्ठा बभूवुः पर्यवस्थिताः ॥ २०
[2]ततः पार्थं समासाद्य पतङ्ग इव पावकम् ।

---

1. क-ख-घ--कृचवृषादिभिः ।     2. अ-अर्धपञ्चकं नास्ति

स द्वितीयेऽहनि तदा फल्गुनेन निपातितः ॥ २१

हते कर्णे तु कौरव्या निरुत्साहा हतौजसः ।
अक्षौहिणीभिस्तिसृभिर् मद्रेशं पर्यवारयन् ॥ २२

हतवाहनभूयिष्ठाः पाण्डवास्तु युधिष्ठिरम् ।
अक्षौहिण्या निरुत्साहाश् शिष्टया पर्यवारयन् ॥ २३

अवधीन्मद्रराजानं कुरुराजो युधिष्ठिरः ।
तस्मिंस्तदाऽर्धदिवसे कृत्वा कर्म सुदुष्करम् ॥ २४

हते शल्ये तु शकुनिं सहदेवः प्रतापवान् ।
[1]आहर्तारं कलेस्तस्य जघानामित्रकर्शनः ॥ २५

निहते शकुनौ राजा धार्तराष्ट्रस्सुदुर्मनाः ।
अपाक्रामद्गदापाणिर् हतभूयिष्ठसैनिकः ॥ २६

तमन्वधावत् सङ्क्रुद्धो भीमसेनः प्रतापवान् ।
ह्रदे द्वैपायने चैव सलिलस्थं ददर्श सः ॥ २७

ततश्शिष्टेन सैन्येन समन्तात् पर्यवारयत् ।
उपोपविविशुर्हृष्टा ह्रदस्थं पञ्च पाण्डवाः ॥ २८

विगाह्य सलिलं त्वाशु वाग्बाणैर्भृशविक्षतः ।
उत्थाय स गदापाणिर् युद्धाय समुपस्थितः ॥ २९

ततस्स निहतो राजा धार्तराष्ट्रो महामृधे ।

1. ब—नास्तीदमर्धम्

भीमसेनेन विक्रम्य पश्यतां पृथिवीक्षिताम् ॥ ३०

ततस्तत् पाण्डवं सैन्यं संसुप्तं शिबिरे निशि ।
निहतं द्रोणपुत्रेण पितुर्वधममृष्यता ॥ ३१

हतपुत्रा हतबला हतमित्रा मया सह ।
युयुधानद्वितीयेन पञ्च शिष्टास्तु पाण्डवाः ॥ ३२

सहैव कृपभोजाभ्यां द्रौणिर्युद्धादमुच्यत ।
युयुत्सुश्चापि कौरव्यो मुक्तः पाण्डवसंश्रयात् ॥ ३३

निहते कौरवेन्द्रे च सानुबन्धे सुयोधने ।
विदुरस्सञ्जयश्चैव धर्मराजमुपस्थितौ ॥ ३४

एवं तदभवद्युद्धम् अहान्यष्टादश प्रभो ।
यत्र ते पृथिवीपाला निहतास्स्वर्गमावसन् ॥ ३५

वैशम्पायनः—

शृण्वतां तु तथा तेषां कथां तां रोमहर्षणीम् ।
दुःखामर्षपरिक्लेशो वृष्णीनामभवत् तदा ॥ ३६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

॥ ९२ ॥ अनुगीतापर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

[ अस्मिन्नध्याये ३६ श्लोकाः ]

———

## ॥ चतुष्षष्टितमोऽध्यायः ॥

कृष्णेन सभार्यां वसुदेवं प्रति अभिमन्युनिधनाकथने सुभद्रया तं प्रति तत्कथनचोदनापूर्वकं शोकान्मोहावेशेन भुवि निपतनम् ॥ १ ॥ ततः कृष्णेन वसुदेवपरिसान्त्वनम् ॥ २ ॥

वैशम्पायनः—

कथयन्नेव तु तदा वासुदेवः प्रतापवान् ।
महाभारतयुद्धं तत् कथान्ते पितुरग्रतः ॥ १

अभिमन्योर्वधं वीरस् सोऽत्यक्रामत भारत ।
अप्रियं वसुदेवस्य मा भूदिति महामनाः ॥ २

मा दौहित्रवधं श्रुत्वा वसुदेवो महात्ययम् ।
दुःखशोकाभिसन्तप्तो भवेदिति महाद्युतिः ॥ ३

सुभद्रा तु तमुत्क्रान्तम् आत्मजस्य वधं रणे ।
आचक्ष्व कृष्ण सौभद्रवधमित्यपतद्भुवि ॥ ४

तामपश्यन्निपतितां वसुदेवः क्षितौ तदा ।
तथैव च पपातोर्व्यां सोऽपि दुःखेन मूर्छितः ॥ ५

ततस्स दौहित्रवधाद् दुःखशोकसमन्वितः ।
वसुदेवो महाराज कृष्णं वाक्यमथाब्रवीत् ॥ ६

वसुदेवः—

ननु त्वं पुण्डरीकाक्ष सत्यवाग् भुवि विश्रुतः ।

यद्दौहित्रवधं मेऽद्य न ख्यापयसि शत्रुहन् ॥ ७

त्वद्भागिनेयनिधनं तत्त्वेनाचक्ष्व मे विभो ।
सदृशाक्षस्तव कथं शत्रुभिर्निहतो रणे ॥ ८

दुष्करं बत वार्ष्णेय कालेऽप्राप्ते नृभिस्सदा ।
यत्र मे हृदयं दुःखाच् छतधा न विदीर्यते ॥ ९

किमब्रवीत् त्वां सङ्ग्रामे सुभद्रां मातरं प्रति ।
मां चापि पुण्डरीकाक्ष चपलाक्षः प्रियो मम ॥ १०

आहवं पृष्ठतः कृत्वा कच्चिन्न निहतः परैः ।
कच्चिद्दुःखेन गोविन्द तेनाजौ विमुखः कृतः ॥ ११

स हि कृष्ण महातेजाश् श्लाघमानो ममाग्रतः ।
बालभावेन विजयम् आत्मनोऽकथयत् प्रभुः ॥ १२

कच्चिन्न निकृतो बाणैर् द्रोणकर्णकृपादिभिः ।
धरण्यां निहतश्शेते तन्ममाचक्ष्व केशव ॥ १३

स हि भीष्मं तथा द्रोणं कर्णं च रथिनां वरम् ।
स्पर्धते स्म रणे नित्यं दुहितुः पुत्रको मम ॥ १४

एवंविधं बहु तदा विलपन्तं सुदुःखितम् ।
पितरं दुःखिततरो गोविन्दो वाक्यमब्रवीत् ॥ १५

श्रीभगवान्—

न तेन विकृतं वक्त्रं कृतं सङ्ग्राममूर्धनि ।

न पृष्ठतः कृतश्चापि सङ्ग्रामस्तेन दुस्तरः ॥ १६

निहत्य पृथिवीपालान् शतशोऽथ सहस्रशः ।
वेदितो द्रोणकर्णाभ्यां दौश्शासनिवशं गतः ॥ १७

एको ह्येकेन सततं युध्यमानो यदि प्रभो ।
स हि शक्यो न सङ्ग्रामे निहन्तुमपि वज्रिणा ॥ १८

समाहूते तु सङ्ग्रामे पार्थे संशप्तकैस्तदा ।
परिवार्य तु सङ्क्रुद्धैस् स द्रोणादिभिराहवे ॥ १९

ततश्शत्रुक्षयं कृत्वा सुमहान्तं रणे पितः ।
दौहित्रस्तव वार्ष्णेय दौश्शासनिवशं गतः ॥ २०

व्यक्तं च स गतस्स्वर्गं जहि शोकं महामते ।
न हि व्यसनमासाद्य सीदेयुस्सुनराः क्वचित् ॥ २१

द्रोणकर्णप्रभृतयो येन प्रतिसमाहिताः ।
रणे महेन्द्रप्रतिमस् स कथं नाप्नुयाद्दिवम् ॥ २२

स शोकं जहि दुर्धर्ष मा च मन्युवशं गमः ।
शस्त्रपूतां हि स गतिं गतः परमदुर्जयः ॥ २३

तस्मिंस्तु निहते पुत्रे सुभद्रेयं स्वसा मम ।
दुःखार्ता च पृथां प्राप्य कुररीव ननाद ह ॥ २४

द्रौपदीं च समासाद्य पर्यपृच्छत् सुदुःखिता ॥ २४॥

सुभद्रा—

आर्ये क दारकास्सर्वे द्रष्टुमिच्छामि तानहम् ॥ २५

श्रीभगवान्—

अस्यास्तु वचनं श्रुत्वा सर्वास्ताः कुरुयोषितः ।
भुजाभ्यां परिगृह्यैनां चुक्रुशुः परमार्तवत् ॥ २६

उत्तरां चाब्रवीद्भद्रां भद्रे भर्ता क ते गतः ।
क्षिप्रमागमनं मह्यं तस्य त्वं वेदयस्व ह ॥ २७

[1]ननु नाम स वैराटि श्रुत्वा वै मद्गिरः पुरा ।
भवनान्निष्पतत्याशु कस्मान्नाभ्येति ते पतिः ॥ २८

अभिमन्यो कुशलिनो मातुलास्ते महारथाः ।
कुशलं चाब्रुवन् सर्वे त्वां युयुत्सुमुपागतम् ॥ २९

आचक्ष्व मेऽद्य सङ्ग्रामं यथापूर्वमरिन्दम ।
कस्मादेवं विलपतीं नाद्य वै प्रतिभाषसे ॥ ३०

एवमादि तु वार्ष्णेय्यास् तदाऽस्याः परिदेवितम् ।
श्रुत्वा पृथा सुदुःखार्ता शनैर्वाक्यमथाब्रवीत् ॥ ३१

पृथा—

सुभद्रे वासुदेवेन तथा सात्यकिना रणे ।
पित्रा च पालितो बालस् स गतः कालधर्मणा ॥ ३२

---

1. क—ननु नन्वसि वैराटि श्रुत्वा मम गिरस्सदा ।
   ख—मानस्य मम गिरस्सदा ।

ईदृशो मर्त्यभावोऽयं मा शुचो यदुनन्दिनि ।
पुत्रो हि तव दुर्धर्षस् सम्प्राप्तः परमां गतिम् ॥ ३३

कुले महति जाताऽसि क्षत्रियाणां महात्मनाम् ।
मा शुचश्चपलाक्षि त्वं पुण्डरीकनिभेक्षणम् ॥ ३४

उत्तरां त्वमवेक्षस्व गर्भिणीं मा शुचश्शुभे ।
पुत्रमेषा हि तस्याशु जनयिष्यति भामिनी ॥ ३५

श्रीभगवान्—

एवं तु सान्त्वयित्वैनां कुन्ती यदुकुलोद्वहाम् ।
विहाय शोकं दुर्धर्ष श्राद्धमस्याप्यकल्पयत् ॥ ३६

समनुज्ञाप्य धर्मज्ञं राजानं भीममेव च ।
यमौ यमोपमौ चैव ददौ दानान्यनेकशः ॥ ३७

ततः प्रदाय बह्वीर्गा ब्राह्मणेभ्यो यदूद्वह ।
समहृष्यत वार्ष्णेयी वैराटीं चाब्रवीदिदम् ॥ ३८

कुन्ती—

वैराटि नेह सन्तापस् त्वया कार्यो यशस्विनि ।
भर्तारं प्रति सुश्रोणि गर्भस्थं रक्ष मे शिशुम् ॥ ३९

श्रीभगवान्—

एवमुक्त्वा ततः कुन्ती विरराम महाद्युते ।
तामनुज्ञाप्य चेहेमां सुभद्रां पुनरानयम् ॥ ४०

एवं स निधनं प्राप्तो दौहित्रस्तव मानद ।
सन्तापं त्यज दुर्धर्ष मा च शोके मनः कृथाः ॥ ४१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥
॥ ९२ ॥ अनुगीतापर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
[ अस्मिन्नध्याये ४१ श्लोकाः ]

---

## ॥ पञ्चषष्टितमोऽध्यायः ॥

वसुदेवादिभिरभिमन्यवे श्राद्धदानम् ॥ १ ॥ व्यासेन हास्तिनपुरमेत्य उत्तरादिपरिसान्त्वनपूर्वकं युधिष्ठिरं प्रत्यश्वमेधसञ्चोदनेन पुनरन्तर्धानम् ॥ २ ॥

---

वैशम्पायनः—

एतच्छ्रुत्वा तु पुत्रस्य वचश्शूरात्मजस्तदा ।
विहाय शोकं धर्मात्मा ददौ श्राद्धमनुत्तमम् ॥ १
तथैव वासुदेवोऽपि स्वस्रीयस्य महात्मनः ।
दयितस्य पितुर्नित्यम् अकरोदौर्ध्वदैहिकम् ॥ २
षष्टिं शतसहस्राणि ब्राह्मणानां महाभुज ।
विधिवद्भोजयामास भोज्यं सर्वगुणान्वितम् ॥ ३
आच्छाद्य च महाबाहुर् धनतृष्णामपानुदत् ।
ब्राह्मणानां तदा कृष्णस् तदभूद्रोमहर्षणम् ॥ ४
सुवर्णं चैव गाश्चैव शयनाच्छादनं तथा ।

दीयमानं तदा विप्राः प्रभूतमिति चाब्रुवन् ॥ ५

वासुदेवोऽथ दाशार्हो बलदेवस्ससात्यकिः ।

अभिमन्योस्तदा श्राद्धम् अकुर्वन् सत्यविक्रमाः ॥ ६

अतीव दुःखसन्तप्ता न शमं चोपलेभिरे ॥ ६॥

तथैव पाण्डवा [1]धीरा नगरे नागसाह्वये ।

नोपागच्छंस्तथा शान्तिम् अभिमन्युविनाकृताः ॥ ७॥

सुबहूनि च राजेन्द्र दिवसानि विराटजा ।

नाभुङ्क्त पतिशोकार्ता तदभूत् करुणं महत् ॥ ८॥

ध्रियमाणे तु तस्मिंस्तु गर्भे कुक्षिस्थ एव च ।

[2]आजगाम तदा व्यासो ज्ञात्वा दिव्येन चक्षुषा ॥ ९॥

आगम्य चाब्रवीद्धीमान् पृथां पृथुललोचनाम् ।

उत्तरां च महातेजाश् शोकस्सन्त्यज्यतामिति ॥ १०॥

व्यासः—

जनिष्यति महातेजाः पुत्रस्तव यशस्विनि ॥ ११॥

प्रभावाद्वासुदेवस्य मम व्याहरणादपि ॥ ११

पाण्डवानामयं चान्ते पालयिष्यति मेदिनीम् ॥ १२

वैशम्पायनः—

धनञ्जयं च सम्प्रेक्ष्य धर्मराजस्य पश्यतः ।

व्यासो वाक्यमुवाचेदं हर्षयन्निव भारत ॥ १३

---

1. ख—धीरा नगरं नागसाह्वयम् ।

2. अ—कुक्षिस्थ एव तस्यास्तु गर्भो वै सम्प्रणश्यति । [ अधिकः पाठः ]

व्यासः—

पौत्रो ध्रुवं महाभागो भविष्यति महामतिः ।
पृथ्वीं सागरपर्यन्तां पालयिष्यति चैव ह ॥ १४

तस्माच्छोकं कुरुश्रेष्ठ जहि त्वमरिमर्दन ।
विचार्यमत्र न हि ते सत्यमेतद्भविष्यति ॥ १५

यच्चापि वृष्णिवीरेण कृष्णेन कुरुनन्दन ।
पुरा चोक्तं तथा भावि मा ते भूदत्र संशयः ॥ १६

विबुधानां गतो लोकान् अक्षयानात्मनिर्जितान् ।
न स शोच्यस्तथा वत्स न चान्यैः कुरुभिस्तथा ॥ १७

वैशम्पायनः—

एवं पितामहेनोक्तो धर्मात्मा स धनञ्जयः ।
त्यक्त्वा शोकं महाराज हृष्टरूपोऽभवत् तदा ॥ १८

पिताऽपि तव धर्मज्ञ गर्भे तस्मिन् महामते ।
अवर्धत यथाकालं शुक्लपक्षे यथा शशी ॥ १९

ततस्सञ्चोदयामास व्यासो धर्मात्मजं नृपम् ।
अश्वमेधं प्रति तदा ततस्सोऽन्तर्हितोऽभवत् ॥ २०

धर्मराजश्च मेधावी श्रुत्वा व्यासस्य तद्वचः ।
वित्तोपनयने तात चकार मतिमान् मतिम् ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
॥ ९२ ॥ अनुगीतापर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
[ अस्मिन्नध्याये २१ श्लोकाः ]

## ॥ षट्षष्टितमोऽध्यायः ॥

युधिष्ठिरेण व्यासाज्ञया भीमादिभिस्सहालोच्य यज्ञार्थं धनाहरणाय सह भ्रात्रादिभिर्हिमवत्पार्श्वं प्रति प्रस्थानम् ॥ १ ॥

जनमेजयः—

श्रुत्वैतद्वचनं ब्रह्मन् व्यासेनोक्तं महात्मना ।
अश्वमेधं प्रति तदा [1]किं चकार युधिष्ठिरः ॥ १

रत्नं च यन्मरुत्तेन निहितं पृथिवीतले ।
तदवाप्तं कथं चैतत् तन्मे ब्रूहि द्विजोत्तम ॥ २

वैशम्पायनः—

श्रुत्वा द्वैपायनवचो धर्मराजो युधिष्ठिरः ।
भ्रातॄन् सर्वान् समाभाष्य काले वचनमब्रवीत् ॥ ३
अर्जुनं भीमसेनं च माद्रीपुत्रौ यमावपि ॥ ३॥

युधिष्ठिरः—

श्रुतं वो वचनं वीरास् सौहृदाद्यन्महात्मना ।
कुरूणां हितकामेन प्रोक्तं कृष्णेन धीमता ॥ ४॥

तपोवृद्धेन महता सुहृदां भूतिमिच्छता ।
गुरुणा धर्मशीलेन व्यासेनाद्भुतकर्मणा ॥ ५॥

पितामहेन भीष्मेण गोविन्देन च धीमता ।

---

1. क-ख—नृपतिः प्रचकार ह ।

संस्मृत्य तदहं सम्यक् कर्तुमिच्छामि पाण्डवाः ॥ ६॥

[1]आयत्यां च तदात्वे च सर्वेषां तद्धि नो हितम् ।
अनुबन्धे च कल्याणं यद्वचो ब्रह्मवादिनः ॥ ७॥

इयं हि वसुधा सर्वा क्षीणरत्ना कुरूद्वहाः ।
तच्चाचष्ट बहु व्यासो मरुत्तस्य धनं नृपाः ॥ ८॥

यद्येतद्वो बहुमतं मन्यध्वं वा क्षमं यदि ।
तदानयामहे सर्वे कथं वा भीम मन्यसे ॥ ९॥

वैशम्पायनः—

इत्युक्तवाक्ये नृपतौ तदा कुरुकुलोद्वह ।
भीमसेनो नृपश्रेष्ठं प्राञ्जलिर्वाक्यमब्रवीत् ॥ १०॥

भीमसेनः—

रोचते मे महाबाहो यदिदं भाषितं त्वया ।
व्यासाख्यातस्य वित्तस्य समुपानयनं प्रति ॥ ११॥

तत् प्राप्नुयामहे धर्माद् धनमुद्वीक्षितं प्रभो ।
कृतमेव महाराज भवेदिति मतिर्मम ॥ १२॥

ते वयं प्रणिपातेन गिरीशस्य महात्मनः ।
तदानयाम भद्रं ते तमभ्यर्च्य कपर्दिनम् ॥ १३॥

तं विभुं देवदेवेशं शूलपाणिं त्रिलोचनम् ।

1. अ—अर्धद्वयं नास्ति

अनादिनिधनं शम्भुं नमस्याम महेश्वरम् ॥ १४॥

लोकनाथं गणाध्यक्षं तस्यैवानुचरान् स्थितान् ।
प्रसाद्यार्थमवाप्स्यामो मनो वाग्बुद्धिकर्मभिः ॥ १५॥

रक्षन्ति ये च तद्द्रव्यं किन्नरा रौद्रदर्शनाः ।
ते च वश्या भविष्यन्ति प्रसन्ने वृषभध्वजे ॥ १६॥

स हि देवः प्रसन्नात्मा भक्तानां परमेश्वरः ।
ददात्यमरतां चापि किं पुनः काञ्चनं प्रभुः ॥ १७॥

वनस्थस्य पुरा जिष्णोर् अस्त्रं पाशुपतं महत् ।
रौद्रं ब्रह्मशिरश्चादात् प्रसन्नः किं पुनर्धनम् ॥ १८॥

वयं सर्वे च तद्भक्तास् स चास्माकं प्रसीदति ।
तत्प्रसादाद्वयं राज्यं प्राप्ताः कौरवनन्दन ॥ १९॥

अभिमन्योर्वधे वृत्ते प्रतिज्ञाते धनञ्जये ।
जयद्रथवधार्थाय स्वप्ने लोकगुरुर्निशि ॥ २०॥

प्रसाद्य लब्धवानस्त्रम् अर्जुनस्सहकेशवः ॥ २१

ततः प्रभातां रजनीं फल्गुनस्याग्रतः प्रभुः ।
जघान सैन्यं शूलेन प्रत्यक्षं सव्यसाचिनः ॥ २२

कस्तां सेनां महाराज मनसाऽपि प्रधर्षयेत् ।
द्रोणकर्णमुखैर्युक्तां महेष्वासैः प्रहारिभिः । २३

ऋते देवान्महेष्वासाद् बहुरूपान्महेश्वरात् ॥ २३॥

तस्यैव च प्रसादेन निहताश्शत्रवस्तव ।
अश्वमेधस्य संसिद्धिं स तु सम्पादयिष्यति ॥ २४॥

वैशम्पायनः—

श्रुत्वैवं ब्रुवतस्तस्य वाक्यं भीमस्य पार्थिव ।
प्रीतो धर्मात्मजो राजा बभूवातीव भारत ॥ २५॥
अर्जुनप्रमुखाश्चैव तथेत्येवाब्रुवन् मुदा ॥ २६

कृत्वा तु पाण्डवास्सर्वे रत्नाहरणनिश्चयम् ।
सेनामाज्ञापयामासुर् नक्षत्रेऽहनि पूजिते ॥ २७

ततो ययुः पाण्डुसुता ब्राह्मणान् स्वस्ति वाच्य च ।
[1]अर्चयित्वा सुरश्रेष्ठं पूर्वमेव महेश्वरम् ॥ २८

मोदकैः पायसेनाथ माषापूपैस्तथैव च ।
आराध्य च महात्मानं प्रययुर्मुदिता भृशम् ॥ २९

तेषां प्रयास्यतां तत्र मङ्गलानि शुभान्यथ ।
प्राहुः प्रहृष्टमनसो द्विजाग्र्या नागराश्च ये ॥ ३०

ततः प्रदक्षिणीकृत्य शिरोभिः प्रणिपत्य च ।
ब्राह्मणानग्निसहितान् प्रययुः पाण्डवर्षभाः ॥ ३१

समनुज्ञाप्य राजानं पुत्रशोकसमाहतम् ।
धृतराष्ट्रं सभार्यं वै पृथां च पृथुलोचनाम् ॥ ३२

---

1 क-ख-घ—इतः श्लोकद्वयं नास्ति

मूले निक्षिप्य कौरव्यं युयुत्सुं धृतराष्ट्रजम् ॥ ३२॥

सम्पूज्यमानाः पौरैश्च ब्राह्मणैश्च महर्षिभिः ।
प्रययुः पाण्डवा वीरा नियमस्थाऽशुचिव्रताः ॥ ३३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥
॥ ९२ ॥ अनुगीतापर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
[ अस्मिन्नध्याये ३३॥ श्लोकाः ]

---

## ॥ सप्तषष्टितमोऽध्यायः ॥

युधिष्ठिरेण हिमवद्गिरिमेत्य सेनानिवेशनम् ॥ १ ॥ तत्र ब्राह्मणचोदनया तैस्सहोपवासादिव्रताचरणपूर्वकं निशायापनम् ॥ २ ॥

---

वैशम्पायनः—

ततस्ते प्रययुर्हृष्टास् सबलास्सहवाहनाः ।
रथघोषेण महता पूरयन्तो वसुन्धराम् ॥ १

संस्तूयमानास्स्तुतिभिस् सूतमागधवन्दिभिः ।
स्वेन सैन्येन सहिता यथाऽऽदित्यास्स्वरश्मिभिः ॥ २

पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
बभौ युधिष्ठिरस्तत्र पौर्णमास्यामिवोडुराट् ॥ ३

जयाशिषः प्रहृष्टास्ते नराणां पथि पार्थिवाः ।

प्रत्यगृह्णन् यथान्यायं यथावद्भरतर्षभ ॥ ४

तथैव सैनिका राजन् राजानमनुयान्ति ये ।
तेषां हलहलाशब्दो दिगन्तं व्याप्य तिष्ठत ॥ ५

स सरांसि नदीश्चैव वनान्युपवनानि च ।
अत्यक्रामन्महाराजो गिरिं चाप्यन्वपद्यत ॥ ६

तस्मिन् देशे च राजेन्द्र यत्र तद्द्रव्यमुत्तमम् ।
चक्रे निवेशनं राजा पाण्डवस्सहसैनिकैः ॥ ७

शिवे देशे समे चैव तदा भरतसत्तम ॥ ७॥

अग्रतो ब्राह्मणान् कृत्वा तपोविद्यादमान्वितान् ।
पुरोहितं च कौरव्य वेदवेदाङ्गपारगम् ॥ ८॥

प्राङ्निवेशात्तु राजानं ब्राह्मणास्सपुरोहिताः ।
कृत्वा शान्तिं यथान्यायं सर्वतः पर्यवारयन् ॥ ९॥

कृत्वा मध्ये च राजानम् अमात्यांश्च यथाविधि ।
षट्पदं नवसंस्थानं निवेशं चक्रिरे जनाः ॥ १०॥

मत्तानां वारणेन्द्राणां निवेशं च यथाविधि ।
कारयित्वा स राजेन्द्रो ब्राह्मणानिदमब्रवीत् ॥ ११॥

युधिष्ठिरः—

अस्मिन् कार्ये द्विजश्रेष्ठा नक्षत्रे दिवसे शुभे ।
यथा भवन्तो मन्यन्ते कर्तुमर्हन्ति तद्विदः ॥ १२॥

न नः कालात्ययो वै स्याद् इहैव परितिष्ठताम् ।

इति निश्चित्य विप्रेन्द्राः क्रियतां यदनन्तरम् ॥ १३॥

वैशम्पायनः—

श्रुत्वैतद्वचनं राज्ञो ब्राह्मणास्सपुरोधसः ।
इदमूचुर्वचो हृष्टा धर्मराजप्रियेप्सवः ॥ १४॥

ब्राह्मणाः—

अद्यैव नक्षत्रमहश्च पुण्यं
यतामहे श्रेष्ठतमं क्रियासु ।
तपोभि[1]रद्येह वसाम राज-
न्नुपोष्यतां चापि भवद्भिरद्य ॥ १५॥

वैशम्पायनः—

श्रुत्वा तु तेषां द्विजसत्तमानां
कृतोपवासा रजनीं नरेन्द्राः ।
ऊषुः प्रतीताः कुशसंस्तरेषु
यथाऽध्वरेषूज्ज्वलिता हव्यवाहाः ॥ १६॥

ततो निशा सा व्यगमन्महात्मनां
संशृण्वतां विप्रसमीरिता गिरः ।
ततः प्रभाते विमले द्विजर्षभा
वचोऽब्रुवन् धर्मसुतं नराधिपम् ॥ १७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आश्वमेधिकपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
॥ ९२ ॥ अनुगीतापर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
[ अस्मिन्नध्याये १७॥ श्लोकाः ]

---

1. क-ख—रद्यैव वसामि ।

## ॥ अष्टषष्टितमोऽध्यायः ॥



युधिष्ठिरेण विधिवत्स्नानाबलिहरणादिना सपरिचरमहेश्वरपरितोषणेन विविधकनकभाण्डाहरणेन पुनर्नगरं प्रत्यागमनम् ॥ १ ॥

---

**ब्राह्मणाः—**

क्रियतामुपहारोऽद्य त्र्यम्बकस्य महात्मनः ।
कृत्वोपहारं नृपते ततस्स्वार्थे यतामहे ॥ १

**वैशम्पायनः—**

तेषां तु वचनं श्रुत्वा ब्राह्मणानां युधिष्ठिरः ।
गिरीशस्य यथान्यायम् उपहारमुपाहरत् ॥ २

आज्येन तर्पयित्वाऽग्निं विधिवत् संस्कृतेन ह ।
मन्त्रसिद्धं चरुं कृत्वा पुरोधाः प्रययौ तदा ॥ ३

स गृहीत्वा सुमनसो मन्त्रपूता जनाधिप ।
मोदकैः पायसेनाथ मांसैश्चोपाहरद्बलिम् ॥ ४

सुमनोभिश्च चित्राभिर् लाजैरुच्चावचैरपि ॥ ४॥

सर्वं स्विष्टकृतं हुत्वा विधिवद्वेदपारगः ।
किङ्कराणां ततः पश्चाच् चकार बलिमुत्तमम् ॥ ५॥

यक्षेन्द्राय कुबेराय माणिभद्राय चैव ह ।
तथाऽन्येषां च यक्षेभ्यो भूताधिपतयश्च ये ॥ ६॥

[1]कृसरेण समांसेन निवापैस्तिलसंयुतैः ।
[2]पितॄणामञ्जलिं कृत्वा पुरोधास्समुपाहरत् ॥ ७॥

ब्राह्मणेभ्यस्सहस्राणि गवां दत्त्वा तु भूमिपः ।
नक्तञ्चरेभ्यो भूतेभ्यो व्यादिदेश बलिं तदा ॥ ८॥

[3]धूपगन्धनिरुद्धं तत् सुमनोभिश्च संवृतम् ।
शुशुभे स्थानमत्यन्तं देवदेवस्य पार्थिव ॥ ९॥

कृत्वा पूजां तु रुद्रस्य गणानां चैव सर्वशः ।
ययौ व्यासं पुरस्कृत्य तत्र रत्ननिधिं प्रति ॥ १०॥

पूजयित्वा धनाध्यक्षं रुद्रं प्रत्यभिवाद्य च ।
सुमनोभिर्विचित्राभिर् अपूपैः कृसरेण च ॥ ११॥

शङ्खादींश्च निधीन् सर्वान् निधिपालांश्च सर्वशः ।
अर्चयित्वा द्विजाग्र्यान् स स्वस्ति संवाच्य वीर्यवान् ॥ १२॥

तेषां पुण्याहघोषेण [4]तेजसा समवस्थितः ।
प्रीतिमान् स कुरुश्रेष्ठः खानयामास तं निधिम् ॥ १३॥

ततः पात्र्यस्सकरका बहुरूपा मनोरमाः ।
शुभ्राणि च शरावाणि कलशा वर्धमानकाः ॥ १४॥

बहूनि च विचित्राणि भाजनानि सहस्रशः ।

---

1. घ—इतः सार्धः श्लोको नास्ति 2. अ—ओदनं कुम्भशः ।
3. घ—धूमपूजातिरुद्धं । क-ख—धूमपुञ्जनिरुद्धं + संयुतम् ।
4. क-ख—तेजसाऽपि प्रतर्पितः । घ—तेजसाऽपि प्रतर्षितः ।

उद्धारयामास तदा धर्मपुत्रो युधिष्ठिरः ॥　　१५॥
तेषां लक्षणमप्यासीन्महान् करपुटस्तथा ।
त्रिलक्षं भाजनं राजंस् [1]वितुलार्हं भवन्नृप ॥　　१६॥
वाहनं पाण्डुपुत्रस्य तत्रासीत्तु विशाम्पते ।
षष्टिरुष्ट्रसहस्राणि शतानि द्विगुणा हयाः ॥　　१७॥
वारणाश्च महाराज सहस्रशतसम्मिताः ।
शकटानि रथाश्चैव तावदेव यथा गजाः ॥　　१८॥
खराणां पुरुषाणां च परिसङ्ख्या न विद्यते ॥　　१९
एतावद्वित्तमभवद् यदुद्दध्रे युधिष्ठिरः ॥　　१९॥
षोडशाष्टौ [2]चतुर्विंशत्सहस्रं भारलक्षणम् ।
एतेष्वाधाय तद्द्रव्यं पुनरभ्यर्च्य पाण्डवः ॥　　२०॥
महादेवं महाराज प्रत्यागच्छद्युधिष्ठिरः ॥　　२१
द्वैपायनाभ्यनुज्ञातः पुरस्कृत्य पुरोहितम् ।
गोरुते गोरुते चापि न्यवसत् पुरुषर्षभः ॥　　२२
सा पुराभिमुखी राजन् जगाम महती चमूः ।
कृच्छ्राद्द्रविणभारार्ता वाहयन्ती कुरूत्तमान् ॥　　२३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
॥ ५२ ॥ अनुगीतापर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
[ अस्मिन्नध्याये २३ श्लोकाः ]

---

1. क—त्रितुलं च भवन्नृप । ख—त्रितुलामभवं प्रपा ।
च—त्रितुलामभवन्नृप ।　　2. क-ख—चतुस्त्रिंशत्सहस्रं ।

## ॥ एकोनसप्ततितमोऽध्यायः ॥

कृष्णेन बलभद्रसुभद्रादिभिस्सह यज्ञार्थं हास्तिनपुरं प्रत्यागमनम् ॥ १ ॥ तत उत्तरायां परीक्षितो जननम् ॥ २ ॥ अश्वत्थामास्त्रेण जननकाल एव शवभूतस्य तस्योज्जीवनाय कुन्त्यादिभिः श्रीकृष्णं प्रति प्रार्थना ॥ ३ ॥

वैशम्पायनः—

एतस्मिन्नेव काले तु वासुदेवः प्रतापवान् ।
उपायाद्वृष्णिभिस्सार्धं पुरं वारणसाह्वयम् ॥ १

समयं वाजिमेधस्य विदित्वा पुरुषर्षभ ।
यथोक्तो धर्मपुत्रेण प्रव्रजन् स्वपुरीं प्रति ॥ २

रौक्मिणेयेन सहितो युयुधानेन चैव हि ।
चारुदेष्णेन साम्बेन गदेन कृतवर्मणा ॥ ३

सारणेन च वीरेण निशठेनोन्मुखेन च ॥ ३॥
बलदेवं पुरस्कृत्य सुभद्रासहितस्तदा ॥ ४

द्रौपदीमुत्तरां चापि पृथां चाप्यवलोककः ।
समाश्वासयितुं चापि क्षत्रियान् निहतेश्वरान् ॥ ५

तानागतान् समीक्ष्यैव धृतराष्ट्रो महीपतिः ।
प्रत्यगृह्णाद्यथान्यायं विदुरश्च महामनाः ॥ ६

तत्रैव न्यवसत् कृष्णस् सत्कृतः पुरुषर्षभः ।
विदुरेण महातेजास् तथैव च युयुत्सुना ॥ ७

वसत्सु वृष्णिवीरेषु तत्राथ जनमेजय ।
जज्ञे तव पिता राजा परीक्षित् परवीरहा ॥ ८

स तु जातो महाराज ब्रह्मास्त्रेण च पीडितः ।
शवो बभूव निश्चेष्टो हर्षशोकविवर्धनः ॥ ९

हृष्टानां सिंहनादेन [1]जनानां तत्र निस्स्वनः ।
[2]आविवेश दिशस्सर्वाः पुनरेवाप्युपारमत् ॥ १०

ततस्सोऽभित्वरन् कृष्णो विवेशान्तः पुरं तदा ।
युयुधानद्वितीयो वै व्यथितेन्द्रियमानसः ॥ ११

ततस्त्वरितमायान्तीं ददर्श स्वां पितृष्वसाम् ।
[3]क्रोशन्तीमभिधावन्तीं वासुदेवं पुनः पुनः ॥ १२

पृष्ठतो द्रौपदीं चैव सुभद्रां च यशस्विनीम् ।
विक्रोशन्त्यश्च करुणं पाण्डवानां स्त्रियो नृप ॥ १३

ततः कृष्णं समासाद्य कुन्ती राजसुता तदा ।
प्रोवाच राजशार्दूल बाष्पगद्गदया गिरा ॥ १४

कुन्ती—

वासुदेव महाबाहो सुप्रजा देवकी त्वया ।
त्वं नो गतिः प्रतिष्ठा च [4]त्वदायत्तमिदं कुलम् ॥ १५

---

1. क—जानतां । ख—राजानां ।
2. क-ख—आविश्य प्रदिशस्सर्वाः पुनरेवाप्युपारमत् ।
3. ख—नास्तीदमधर्मम्  4. क-ख—त्वया दत्तमिदं कुलम् ।

यदुप्रवीर योऽयं ते स्वस्रीयस्यात्मजः प्रभो ।
अश्वत्थाम्ना हतो जातस् तमुज्जीवय केशव ॥ १६

त्वया ह्येतत् प्रतिज्ञातम् ऐषीके यदुनन्दन ।
अहं सञ्जीवयिष्यामि मृतं जातमिति प्रभो ॥ १७

सोऽयं जातो मृतस्तात पश्यैनं पुरुषर्षभ ।
उत्तरां च सुभद्रां च द्रौपदीं मां च माधव ॥ १८

धर्मपुत्रं च भीमं च फल्गुनं नकुलं तथा ।
सहदेवं च दुर्धर्षं सर्वांश्च भरतानपि ॥ १९

अस्मिन् प्राणास्समायत्ताः पाण्डवानां ममैव च ।
पाण्डोश्च पिण्डो दाशार्ह तथैव श्वशुरस्य मे ॥ २०

अभिमन्योश्च भद्रं ते प्रियस्य सदृशस्य ते ।
प्रियमुत्पादयाद्य त्वं प्रेतस्यापि जनार्दन ॥ २१

उत्तरा हि पुरोक्तं वै कथयत्यरिसूदन ।
अभिमन्योर्वचः कृष्ण प्रियं तत् ते न संशयः ॥ २२

अब्रवीन् किल दाशार्ह वैराटीमार्जुनिस्तदा ॥ २२॥

अभिमन्युः—

मातुलस्य कुलं भद्रे तव पुत्रो [1]गामिष्यति ॥ २३

गत्वा वृष्ण्यन्धककुलं धनुर्वेदं ग्रहीष्यति ।

---

1. क-ख—भविष्यति ।

अस्त्राणि च विचित्राणि नीतिशास्त्रं च केवलं ॥ २४

कुन्ती—

इत्येतत् प्रणयात् तात सौभद्रः परवीरहा ।
कथयामास दुर्धर्षस् तथैवैतन्न संशयः ॥ २५

तास्त्वां वयं प्रणम्येह याचामो मधुसूदन ।
कुलस्यास्य हितार्थं त्वं कुरु कल्याणमुत्तमम् ॥ २६

वैशम्पायनः—

एवमुक्त्वा तु वार्ष्णेयं पृथा पृथुललोचना ।
उद्धृत्य बाहू दुःखार्ता प्रापतद्भुवि विह्वला ॥ २७

अब्रुवंश्च महाराज सर्वास्सास्राविलेक्षणाः ।
स्वस्रीयो वासुदेवस्य मृतो जात इति प्रभो ॥ २८

एवं गते ततः कुन्तीं पर्यगृह्णाज्जनार्दनः ।
भूमौ निपतितां चैनां सान्त्वयामास भारत ॥ २९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम
आश्वमेधिकपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

॥ ९२ ॥ अनुगीतापर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

[ अस्मिन्नध्याये २९ श्लोकाः ]

———

## ॥ सप्ततितमोऽध्यायः ॥

सुभद्रया श्रीकृष्णं प्रति तन्महिमसंस्तवनपूर्वकं परीक्षिज्जीवनप्रार्थना ॥ १ ॥

वैशम्पायनः—

उत्थितायां पृथायां तु सुभद्रा भ्रातरं तदा ।
दृष्ट्वा चुक्रोश दुःखार्ता वचनं चेदमब्रवीत् ॥ १

सुभद्रा—

पुण्डरीकाक्ष पश्य त्वं पौत्रं पार्थस्य धीमतः ।
परिक्षीणेषु कुरुषु परिक्षीणं गतायुषम् ॥ २

इषीका द्रोणपुत्रेण भीमसेनार्थमुद्यता ।
सोत्तरायां निपतिता विजये मयि चैव ह ॥ ३

सेयं ज्वलन्ती हृदये मम तिष्ठति केशव ।
यन्न पश्यामि दुर्धर्षम् अहं पुत्रसुतं विभो ॥ ४

किं नु वक्ष्यति धर्मात्मा धर्मपुत्रो युधिष्ठिरः ।
भीमसेनार्जुनौ चोभौ माद्रवत्यास्सुतौ च तौ ॥ ५

श्रुत्वाऽभिमन्योस्तनयं जातं च मृतमेव च ।
मुषिता इव वार्ष्णेय द्रोणपुत्रेण पाण्डवाः ॥ ६

अभिमन्युः प्रियः कृष्ण पितॄणां नात्र संशयः ।
ते श्रुत्वा किं नु वक्ष्यन्ति द्रोणपुत्रास्त्रनिर्जिताः ॥ ७

भविता नः परं दुःखं किं नु मन्ये जनार्दन ।
अभिमन्योस्सुतात् कृष्ण मृताज्जातादरिन्दम ॥ ८

साऽहं प्रसादये कृष्ण त्वामद्य शिरसा नता ।
पृथां च द्रौपदीं चैव मां पश्य पुरुषोत्तम ॥ ९

यदा द्रोणसुतो गर्भान् पाण्डूनां हन्ति माधव ।
त्वया किल पुरा द्रौणिः क्रुद्धेनोक्तोऽरिमर्दन ॥ १०

श्रीभगवान्—

अकामं त्वां करिष्यामि ब्रह्मबन्धो नराधम ।
अहं सञ्जीवयिष्यामि किरीटितनयात्मजम् ॥ ११

सुभद्रा—

इत्येतद्वचनं [1]श्रुत्वा जानानाऽहं बलं तव ।
प्रसादये त्वां दुर्धर्ष [2]जीवतामभिमन्युजः ॥ १२

[3]यद्येतत् त्वं प्रतिश्रुत्य न करोषि वचश्शुभम् ।
सफलं वृष्णिशार्दूल मृतां मामवधारय ॥ १३

अभिमन्योस्सुतो वीर न सञ्जीवति यद्ययम् ।
जीवति त्वयि दुर्धर्ष किं करिष्याम्यहं त्वया ॥ १४

सञ्जीवयैनं दुर्धर्ष मृतं त्वमभिमन्युजम् ।

---

1. क-ख—मत्वा जानाम्यद्य ।
2. क-ख—मृतं त्वमभिमन्युजम् ।
3. क-ख—अर्धपञ्चकं नास्ति घ—इतः सार्धःश्लोको नास्ति

सदृशाक्षसुतं वीर सस्यं वर्षास्विवाम्बुदः ॥ १५

त्वं हि केशव धर्मात्मा सत्यवाक् सत्यविक्रमः ।
स तां वाचमृतां कर्तुम् अर्हसि त्वमरिन्दम ॥ १६

इच्छन्नपि हि लोकांस्त्रीन् जीवयेथा मृतानपि ।
किं पुनर्दयितं जातं स्वस्रीयस्यात्मजं मृतम् ॥ १७

प्रभावज्ञाऽस्मि ते कृष्ण तस्मादेतद् ब्रवीमि ते ।
कुरुष्व पाण्डुपुत्राणाम् इमं परमनुग्रहम् ॥ १८

स्वसेति वा महाबाहो हतपुत्रेति वा पुनः ।
प्रपन्ना मामियं वेति दयां कर्तुमिहार्हसि ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥
॥ ९२ ॥ अनुगीतापर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
[ अस्मिन्नध्याये १९ श्लोकाः ]

## ॥ एकसप्ततितमोऽध्यायः ॥

कृष्णस्य परीक्षित्सूतिकागृहप्रवेशः ॥ १ ॥ तत्रोत्तरया कृष्णसमीपे बहुधा विलापपूर्वकं पुत्रोज्जीवनप्रार्थना ॥ २ ॥

वैशम्पायनः—

एवमुक्तस्तु राजेन्द्र केशिहा दुःखमूर्च्छितः ।
तथेति व्याजहारोच्चैर् ह्लादयन्निव तं जनम् ॥ १

वाक्येनैतेन सहसा तं जनं पुरुषर्षभः ।
ह्लादयामास स विभुर् घर्मार्थं सलिलैरिव ॥ २

ततस्स प्राविशत् तूर्णं जन्मवेश्म पितुस्तव ।
अर्चितं पुरुषव्याघ्र सितैर्माल्यैर्यथाविधि ॥ ३

अपां कुम्भैस्सुपूर्णैश्च विन्यस्तैस्सर्वतोदिशम् ।
घृतेन तिन्दुकालाजैस् सर्षपैश्च महाभुजः ॥ ४

शस्त्रैश्च विमलैर्न्यस्तैः पावकैश्च समन्ततः ॥ ४॥

वृद्धाभिश्चानुरूपाभिः परिवारार्थमप्युत ।
दक्षैश्च परितो वीर भिषग्भिः कुशलैस्तथा ॥ ५॥

ददर्श च स तेजस्वी रक्षोघ्नान्यपि सर्वशः ।
द्रव्याणि स्थापितानि स्म विधिवत् कुशलैस्तथा ॥ ६॥

जनैर्युक्तं च तद्दृष्ट्वा जन्मवेश्म पितुस्तव ।
हृष्टोऽभवद्धृषीकेशस् साधु साध्विति सोऽब्रवीत् ॥ ७॥

तथा ब्रुवति गोविन्दे प्रहृष्टवदने तदा ।
द्रौपदी त्वरिता गत्वा वैराटीं वाक्यमब्रवीत् ॥ ८॥

द्रौपदी—

अयमायाति ते भर्तुर् मातुलो मधुसूदनः ।
पुराणर्षिरचिन्त्यात्मा समीपमपराजितः ॥ ९॥

वैशम्पायनः—

सा तु बाष्पकलां वाचं निगृह्याश्रूणि चैव ह ।

सुसंवीता तदा भूत्वा दैववत् कृष्णमीक्षति ॥ १०॥

सा तदा दूयमानेन हृदयेन मनस्विनी ।
दृष्ट्वा गोविन्दमायान्तं कृपणं पर्यदेवयत् ॥ ११॥

उत्तरा—

पुण्डरीकाक्ष पश्य त्वं बालाविह विनाकृतौ ।
अभिमन्युं च मां चैव हतौ तुल्यं जनार्दन ॥ १२॥

वार्ष्णेय मधुहन् वीर शिरसा त्वां प्रसादये ।
द्रोणपुत्रास्त्रनिर्दग्धं जीवयैनं जनार्दन ॥ १३॥

यदि स्म धर्मराजेन भीमसेनेन वा पुनः ।
त्वया वा पुण्डरीकाक्ष वाक्यमुक्तमिदं भवेत् ॥ १४॥

अजातानामिषीकेयं जनित्रीं हन्त्विति प्रभो ।
अहमेवं विनष्टा स्यां नेदमेवं गतं भवेत् ॥ १५॥

गर्भस्थस्यास्य बालस्य ब्रह्मास्त्रेण निपातनम् ।
कृत्वा नृशंसं दुर्बुद्धिर् द्रौणिः किं फलमश्नुते ॥ १६॥

सा त्वां प्रणम्य शिरसा याचे शत्रुनिबर्हण ।
प्राणांस्त्यक्ष्यामि गोविन्द नायं जीवति वा यदि ॥ १७॥

अस्मिन् हि बहवः कृष्ण ये ममासन् मनोरथाः ।
ते द्रोणपुत्रेण हताः किं नु जीवामि केशव ॥ १८॥

आसीन्मम मतिः कृष्ण पूर्णोत्सङ्गा जनार्दन ।

अभिवादयिष्ये हृष्टेति तदिदं वितथं कृतम् ॥ १९॥
चपलाक्षस्य दायादे मृतेऽस्मिन् पुरुषर्षभ ।
विफला मे कृताः कृष्ण हृदि सर्वे मनोरथाः ॥ २०॥
चपलाक्षः किलातीव प्रियस्ते मधुसूदन ।
सुतमीक्षस्व तस्यैनं ब्रह्मास्त्रेण निपातितम् ॥ २१॥
[1]कृतघ्नोऽयं नृशंसोऽयं यथाऽस्य जनकस्तथा ।
यः पाण्डवीं श्रियं त्यक्त्वा गतोऽद्य यमसादनम् ॥ २२॥
मया चैतत् प्रतिज्ञातं रणमूर्धनि केशव ।
अभिमन्यौ हते वीर त्वामेष्याम्यचिरादिव ॥ २३॥
तच्च नाकरवं कृष्ण नृशंसा जीवितप्रिया ।
इदानीमागतां तत्र किं नु वक्ष्यति फाल्गुनिः ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकसप्ततितमोऽध्यायः॥ ७१ ॥
॥ ९२ ॥ अनुगीतापर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
[ अस्मिन्नध्याये २४॥ श्लोकाः ]

## ॥ द्वासप्ततितमोऽध्यायः ॥

कृष्णेन सशपथं संस्पर्शनेन परीक्षितः समुज्जीवनम् ॥ १ ॥

वैशम्पायनः—

एवं विलप्य करुणं सोन्मादेव तपस्विनी ।
उत्तरा न्यपतद्भूमौ कृपणा पुत्रगर्द्धिनी ॥ १

1. क-ख-घ—प्रियस्सोऽयं भवेद् तात ।

तां तु दृष्ट्वा निपतितां हतबन्धुपरिच्छदाम् ।
चुक्रोश कुन्ती दुःखार्ता सर्वाश्च भरतस्त्रियः ॥ २

मुहूर्तमिव तद्राजन् पाण्डवानां निवेशनम् ।
अप्रेक्षणीयमभवद् आर्तस्वरविनादितम् ॥ ३

सा मुहूर्तं च राजेन्द्र पुत्रशोकाभिपीडिता ।
कश्मलाभिहता वीर वैराटी त्वभवत् तदा ॥ ४

प्रतिलभ्य तु सा संज्ञाम् उत्तरा भरतर्षभ ।
अङ्कमारोप्य तं पुत्रम् इदं वचनमब्रवीत् ॥ ५

उत्तरा—

धर्मज्ञस्य सुतस्संस्त्वं न धर्ममवबुध्यसे ।
यस्त्वं वृष्णिप्रवीरस्य कुरुषे नाभिवादनम् ॥ ६

[1]पुत्र गत्वा मम वचो ब्रूयास्त्वं पितरं तव ।
दुर्मरं प्राणिनां वीर कालेऽप्राप्ते कथञ्चन ॥ ७

याऽहं त्वया विहीनाऽद्य हीना पुत्रेण चैव ह ।
मरणं नाधिगच्छामि तव स्वस्ति न किञ्चन ॥ ८

अथवा धर्मराज्ञाऽहम् अनुज्ञाता महाभुज ।
खादयिष्ये विषं तीक्ष्णं प्रवेक्ष्याम्यथवाऽनलम् ॥ ९

अथवा दुर्मरं तात यदिदं मे सहस्रधा ।
पतिपुत्रविहीनाया हृदयं नावदीर्यते ॥ १०

1. क-ख-घ—नास्तीदमर्धम् ।

उत्तिष्ठ पुत्र पश्येमां दुःखितां प्रपितामहीम् ।
आर्तामुपप्लुतां दीनां निमग्नां शोकसागरे ॥ ११

आर्यां च पश्य पाञ्चालीं सात्वतीं च तपस्विनीम् ।
मां च पश्य सुदुःखार्तां व्याधविद्धां मृगीमिव ॥ १२

उत्तिष्ठ पश्य वदनं लोकनाथस्य पश्यतः ।
पुण्डरीकविशालाक्षं पुरेव चपलेक्षणम् ॥ १३

वैशम्पायनः—

एवं विलपतीं तां तु दृष्ट्वा निपतितां पुनः ।
उत्तरां तां स्त्रियस्सर्वाः पुनरुत्थापयन्त्युत ॥ १४

उत्थाय च पुनर्धैर्यात् तदा मत्स्यपतेस्सुता ।
प्राञ्जलिः पुण्डरीकाक्षं भूमावेवाभ्यवन्दत ॥ १५

श्रुत्वा तस्यापि विपुलं विलापं पुरुषर्षभः ।
उपस्पृश्य ततः कृष्णो ब्रह्मास्त्रं सञ्जहार तत् ॥ १६

प्रतिजज्ञे स दाशार्हस् तस्य जीवितमच्युतः ।
अब्रवीच्च विशुद्धात्मा सर्वं विश्रावयञ्जगत् ॥ १७

श्रीभगवान्—

न ब्रवीम्युत्तरे मिथ्या सत्यमेतद्भविष्यति ॥
एष सञ्जीवयाम्येनं पश्यतां सर्वदेहिनाम् ॥ १८

नोक्तपूर्वं मया मिथ्या स्वैरेष्वपि कदाचन ।
न च युद्धात् परावृत्तस् तथा सञ्जीवयाम्यहम् ॥ १९

यथा मे दयितो धर्मो ब्राह्मणाश्च विशेषतः ।
अभिमन्योस्सुतो जातो मृतो जीवत्वयं तथा ॥ २०

यथाऽहं नाभिजानामि विजये न कदाचन ।
विरोधं तेन सत्येन मृतो जीवत्वयं शिशुः ॥ २१
यथा सत्यं च धर्मश्च मया नित्यं प्रतिष्ठितौ ।
तथा मृतश्शिशुरयं जीवत्वद्याभिमन्युजः ॥ २२

यथा कंसश्च केशी च धर्मेण निहतौ मया ।
तेन सत्येन बालोऽयं पुनरुज्जीवयामि ह ॥ २३

वैशम्पायनः—

इत्युक्त्वा वासुदेवोऽथ तं बालं भरतर्षभ ।
[1]हस्तेन कमलाभेन ब्रह्मरुद्रार्चितेन च ॥ २४
पस्पर्श पुण्डरीकाक्ष आपादतलमस्तकम् ॥ २४॥

स्पृष्टमात्रस्तु कृष्णेन स बाल अभिमन्युजः ।
शनैश्शनैर्महाराज प्रापद्यत स चेतनाम् ॥ २५॥
[2]शनैश्शनैर्महाराज प्रास्पन्दत सचेतनः ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि द्वासप्ततितमोऽध्यायः ॥ ७२ ॥

॥ ९२ ॥ अनुगीतापर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

[ अस्मिन्नध्याये २६ श्लोकाः ]

---

1. क-ख-घ—इतः श्लोकद्वयं नास्ति  2. अ—इदमर्धं नास्ति

## ॥ त्रिसप्ततितमोऽध्यायः ॥

कृष्णेनाभिमन्युसुतस्य पदप्रवृत्तिनिमित्तकथनपूर्वकं नामकरणम् ॥ १ ॥ अत्रान्तरे युधिष्ठिरादीनां स्वर्णभारानयनेन हास्तिनपुरं प्रत्यागमनश्रवणेन कृष्णादिभिस्तत्प्रत्युत्थानम् ॥ २ ॥

वैशम्पायनः—

ब्रह्मास्त्रं तु महाराज कृष्णेन प्रतिसंहृतम् ।
तदा तद्वेश्म ते पित्रा [1]सर्वतोऽपि विदीपितम् ॥ १

ततो रक्षांसि सर्वाणि नेशुस्त्यक्त्वा गृहं तु तत् ।
अन्तरिक्षे च वागासीत् साधु केशव साध्विति ॥ २

तदस्त्रं ज्वलितं चापि पितामहमगात् तदा ।
ततः प्राणान् पुनर्लेभे पिता तव जनेश्वर ॥ ३

व्यचेष्टत च बालोऽसौ यथोक्तं शौरिणा तदा ।
बभूवुर्मुदिता राजंस् ततस्ता भरतस्त्रियः ॥ ४

ब्राह्मणा वाचयामासुर् गोविन्दस्य च शासनात् ।
ततस्ता मुदितास्सर्वाः प्रशशंसुर्जनार्दनम् ॥ ५

स्त्रियो भरतसिंहानां नावं दृष्ट्वेव पारगाः ॥ ५॥

कुन्ती द्रुपदपुत्री च सुभद्रा चोत्तरा तथा ।

1. च—सर्वलोकप्रदीपितम् । अ—तेजसा हि विपीडितः ।

स्त्रियश्चान्या नृसिंहानां बभूवुर्हृष्टमानसाः ॥ ६॥

तत्र मल्ला नटा झल्ला रञ्जिकास्सौखशायिकाः ।
सूतमागधसङ्घाश्चाप्यस्तुवंस्तं जनार्दनम् ॥ ७॥

[1]कुरुवंशस्तवार्थाभिर् आशीर्भिर्भरतर्षभ ।
सभाजयत संहृष्टो महाराज महाजनः ॥ ८॥

उत्थाय तु यथाकालम् उत्तरा यदुनन्दनम् ।
अभ्यवादयत प्रीता सह पुत्रेण भारत ॥ ९॥

तस्यै कृष्णो ददौ प्रीतो बहुरत्नं विशेषवित् ।
तथैव वृष्णिशार्दूलो नाम चास्याकरोत् प्रभुः ॥ १०॥
पितुस्तव महाराज सत्यसन्धो जनार्दनः ॥ ११

परिक्षीणे कुले यस्माज् जातोऽयमभिमन्युजः ।
परीक्षिदिति नामास्य भवत्वित्यब्रवीत् तदा ॥ १२

सोऽवर्धत यथाकालं पिता तव नराधिप ।
मनःप्रह्लादनश्चासीत् सर्वलोकस्य भारत ॥ १३

मासं जातस्तु ते वीर पिता भवति भारत ।
अथाजग्मुस्सुबहुलं रत्नमादाय पाण्डवाः ॥ १४

मेरुकूटनिभान् भाण्डान् कलशान् भाजनानि च ।
कृताकृतं महद्धेमम् आदाय पुरुषोत्तमाः ॥ १५

1. अ—अर्धद्वयं नास्ति

भारार्तैर्वाहनैस्तत्र गोरुते गोरुते पथि ।
निवसन्तो ययुर्देवं स्मरन्तः परमेष्ठिनम् ॥　　१६

नासीत् तत्र नरः कश्चिद् अभारार्तो नृपं विना ।
भीमाद्योऽपि यज्ञार्थं वहन्ते किं पुनर्जनाः ॥　　१७

तान् समीपगतान् दृष्ट्वा निर्ययुर्वृष्णिपुङ्गवाः ।
अलञ्चक्रुश्च माल्यौघैर् नगरं नागसाह्वयम् ॥　　१८

पताकाभिर्विचित्राभिर् ध्वजैश्च विविधैरपि ।
वेश्मानि समलञ्चक्रुः पौराश्चापि नराधिप ॥　　१९

देवतायतनानां च पूजा बहुविधास्तथा ।
सन्दिदेशाथ विदुरः पाण्डुपुत्रप्रियेप्सया ॥　　२०

राजमार्गाश्च तत्रासन् सुमनोभिरलङ्कृताः ।
शुशुभे तत् पुरं चापि समुद्रौघनिभस्वनम् ॥　　२१

नर्तकैश्चापि नृत्यद्भिर् गायकानां च निस्स्वनैः ।
आसीद्वैश्रवणस्येव निवासस्तत् पुरं तदा ॥　　२२

वन्दिभिश्च नरै राजन् स्त्रीसहायैस्सहस्रशः ।
तत्र तत्र विविक्तेषु समन्तादुपशोभितम् ॥　　२३

[1]पताका धूयमानाश्च समन्तान्मातरिश्वना ।
अदर्शयन्निव तदा कुरून् वै दक्षिणोत्तरान् ॥　　२४

---

1. क-ख-घ—इतः श्लोकद्वयं नास्ति

अघोषयंस्तदा चापि पुरुषा राजमार्गतः ।
सर्वरात्रविहारोऽद्य रत्नाभरणलक्षणः ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
॥ ९२ ॥ अनुगीतापर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
[ अस्मिन्नध्याये २५ श्लोकाः ]

---

## ॥ चतुस्सप्ततितमोऽध्यायः ॥

कृष्णादिभिः प्रत्युद्गम्यमानैर्युधिष्ठिरादिभिः स्वर्णभारपुरस्कारेण हास्तिनपुरप्रवेशः ॥ १ ॥ ततस्तत्रोपागतेन व्यासेन युधिष्ठिरं प्रत्यश्वमेधप्रशंसनपूर्वकं तत्करणविधानम् ॥ २ ॥ युधिष्ठिरेणाश्वमेधे स्वयं दीक्षास्वीकारं प्रार्थितेन कृष्णेन सहेतुकथनं तं प्रत्येव दीक्षास्वीकारविधानम् ॥ ३ ॥

---

वैशम्पायनः—

तान् समीपगताञ्छ्रुत्वा पाण्डवाञ्छत्रुकर्शनः ।
वासुदेवस्सहामात्यः प्रत्युद्यातो दिदृक्षया ॥ १

ते समेत्य यथान्यायं पाण्डवा वृष्णिभिस्सह ।
विविशुस्सहिता राजन् पुरं वारणसाह्वयम् ॥ २

महतस्तस्य सैन्यस्य रथनेमिस्वनेन च ।
द्यावापृथिव्यौ खं चैव शब्देनासीत् समावृतम् ॥ ३

ते कोशमग्रतः कृत्वा विविशुस्स्वपुरं तदा ।

पाण्डवाः प्रीतमनसस् सामात्यास्ससुहृद्गणाः ॥ ४

ते समेत्य यथान्यायं धृतराष्ट्रं जनेश्वरम् ।
कीर्तयन्तस्स्वनामानि तस्य पादौ ववन्दिरे ॥ ५

धृतराष्ट्रस्यानुमते गान्धारीं सुबलात्मजाम् ।
कुन्तीं च राजशार्दूल तदा भरतसत्तमाः ॥ ६

विदुरं पूजयित्वा च वैश्यापुत्रं समेत्य च ।
पूज्यमानास्तु ते वीरा व्यराजन्त विशाम्पते ॥ ७

ततस्तत् परमाश्चर्यं विचित्रं महदद्भुतम् ।
शुश्रुवुस्ते महावीराः पितुस्ते जन्म भारत ॥ ८

तदुपश्रुत्य ते कर्म वासुदेवस्य धीमतः ।
पूजार्हं पूजयामासुः कृष्णं देवकिनन्दनम् ॥ ९

ततः कतिपयाहस्सु व्यासस्सत्यवतीसुतः ।
आजगाम महातेजा नगरं नागसाह्वयम् ॥ १०

तस्य सर्वे यथान्यायं पूजां चक्रुः कुरूद्वहाः ।
सह वृष्ण्यन्धकव्याघ्रैर् उपासाञ्चक्रिरे तदा ॥ ११

तत्र नानाविधाकाराः कथास्समनुकीर्त्य वै ।
युधिष्ठिरो धर्मसुतो व्यासं वचनमब्रवीत् ॥ १२

युधिष्ठिरः—

भवत्प्रसादाद्भगवन् यदिदं रत्नमाहृतम् ।

उपयोक्तुं तदिच्छामि वाजिमेधे महाक्रतौ ॥ १३

तदनुज्ञातुमिच्छामि भवता मुनिसत्तम ।
त्वदधीना वयं सर्वे कृष्णेन च महात्मना ॥ १४

व्यासः—

अनुजानामि राजंस्त्वां क्रियतां यदनन्तरम् ।
यजस्व वाजिमेधेन विधिवद्दक्षिणावता ॥ १५

अश्वमेधो हि राजेन्द्र पावनस्सर्वपाप्मनाम् ।
तेनेष्ट्वा त्वं विपाप्मा वै भविता नात्र संशयः ॥ १६

वैशम्पायनः—

इत्युक्तस्स तु धर्मात्मा कुरुराजो युधिष्ठिरः ।
अश्वमेधस्य कौरव्य चकाराहरणे मतिम् ॥ १७

समनुज्ञाप्य तु स तं कृष्णद्वैपायनं नृप ।
वासुदेवमथामन्त्र्य वाग्मी वचनमब्रवीत् ॥ १८

युधिष्ठिरः—

देवकी सुप्रजा देव त्वया पुरुषसत्तम ।
यद्ब्रूयास्त्वं महाबाहो तत् कुर्यामहमच्युत ॥ १९

त्वं गतिस्सर्वभूतानाम् इति मे निश्चिता मतिः ।
त्वत्प्रभावार्जितान् भोगान् अश्नीमो यदुनन्दन ॥ २०

पराक्रमेण बुद्ध्या च तवेयं निर्जिता मही ॥　२०॥

दीक्षयस्व त्वमात्मानं त्वं हि नः परमो गुरुः ।
त्वयीष्टवति धर्मज्ञ विपाप्मा स्यामहं विभो ॥　२१॥

त्वं हि यज्ञोऽक्षरश्शब्दो धर्मज्ञस्त्वं प्रजापतिः ॥　२२

श्रीभगवान् —

त्वमेवैतन्महाबाहो वक्तुमर्हस्यरिन्दम ।
त्वं गतिस्सर्वभूतानाम् इति मे निश्चिता मतिः ॥　२३

त्वं चाद्य कुरुवीराणां धर्मेणाति विराजसे ।
गुरुभूतस्तु मे राजंस् त्वं नो राजा मतो गुरुः ॥　२४

यजस्व वाजिमेधेन प्राप्त एष क्रतुस्त्वया ।
युनक्तु नो भवान् कार्ये यत्र वाञ्छसि भारत ॥　२५

सत्यं ते प्रतिजानामि सर्वं कर्तास्मि तेऽनघ ॥　२५॥

भीमसेनार्जुनौ चैव तथा माद्रवतीसुतौ ।
इष्टवन्तो भविष्यन्ति त्वयीष्टवति पार्थिव ॥　२६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥
॥ ९२ ॥ अनुगीतापर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
[ अस्मिन्नध्याये २६॥ श्लोकाः ]

---

## ॥ पञ्चसप्ततितमोऽध्यायः ॥

व्यासेन युधिष्ठिरं प्रति पृथिवीसञ्चाराय मेध्याश्वोत्सर्जनचोदना ॥ १ ॥ तथाऽश्वरक्षणेऽर्जुनस्य नियोजनम् ॥ २ ॥

वैशम्पायनः—

एवमुक्तस्तु कृष्णेन धर्मराजो युधिष्ठिरः ।
व्यासमामन्त्र्य मेधावी ततो वचनमब्रवीत् ॥ १

युधिष्ठिरः—

यदा कालं भवान् वेत्ति हयमेधस्य तत्त्वतः ।
दीक्षयस्व तदाऽऽत्मानं त्वदायत्तो हि मे क्रतुः ॥ २

व्यासः—

अहं पैलोऽथ कौन्तेय याज्ञवल्क्यस्तथैव च ।
विधानं यद्यथाकालं तत् कर्तारो न संशयः ॥ ३
चैत्र्यां हि पौर्णमास्यां वै तव दीक्षा भविष्यति ।
सम्भारास्सम्भ्रियन्तां ते यज्ञार्थं पुरुषर्षभ ॥ ४
अश्वविद्याविदश्चैव सूता विप्राश्च तद्विदः ।
मेध्यमश्वं परीक्षन्तां तव यज्ञार्थसिद्धये ॥ ५
तमुत्सृज यथाशास्त्रं पृथिवीं सागराम्बराम् ।
स पर्येतु यशो [1]दीप्तं तव पार्थिव वर्धयन् ॥ ६

---

1. क—वार्हि + सत्तम । ख—वाह्री × सत्तम ।

वैशम्पायनः—

इत्युक्तस्स तथेत्युक्त्वा पाण्डवः पृथिवीपतिः ।
चकार सर्वं राजेन्द्रो यथोक्तं ब्रह्मवादिना ॥ ७

सम्भाराश्चैव राजेन्द्र सर्वे सङ्कल्पिता भवन् ॥ ७॥

स सम्भारान् समाहृत्य नृपो धर्मात्मजस्तदा ।
न्यवेदयदमेयात्मा कृष्णद्वैपायनाय वै ॥ ८॥

ततोऽब्रवीन्महातेजा व्यासो धर्मात्मजं नृपम् ॥ ९

व्यासः—

यथाकालं यथायोगं सज्जास्स्म तव दीक्षणे ॥ ९॥

स्रुक् च कूर्चं च सौवर्णं यच्चान्यदपि कौरव ।
यत्तु योग्यं भवेत् किञ्चित् [1]तद्रौक्मं क्रियतामिह ॥ १०॥

अश्वश्चोत्सृज्यतामद्य पृथ्व्यामथ यथाक्रमम् ।
सुगुप्तश्च चरत्वेष यथाशास्त्रं युधिष्ठिर ॥ ११॥

युधिष्ठिरः—

अयमश्वो यथा ब्रह्मन्नुत्सृष्टः पृथिवीमिमाम् ।
चरिष्यति यथाकामं तत्र सम्यग्विधीयताम् ॥ १२॥

पृथिवीं पर्यटन्तं हि तुरगं कामचारिणम् ।
कः पालयेदिति मुने तद्भवान् वक्तुमर्हति ॥ १३॥

---

1. क—तद्रौप्यं क्रियतामिति ।

वैशम्पायनः—

इत्युक्तस्स तु राजेन्द्र कृष्णद्वैपायनोऽब्रवीत् ॥ १४

व्यासः—

भीमसेनादवरजश् श्रेष्ठस्सर्वधनुष्मताम् ।
जिष्णुस्सहिष्णु[1]र्धर्मिष्णुस् स एनं पालयिष्यति ॥ १५

शक्तस्स हि महीं जेतुं निवातकवचान्तकः ।
तस्मिन्नस्त्राणि दिव्यानि वर्तन्ते खलु सर्वदा ॥ १६

दिव्यं धनुश्चेषुधी च स एनमनुयास्यति ॥ १६॥

[2]स हि धर्मार्थकुशलस् सर्वविद्याविशारदः ।
यथाशास्त्रं नृपश्रेष्ठ चारयिष्यति ते हयम् ॥ १७॥

राजपुत्रो महाबाहुश् श्यामो राजीवलोचनः ।
अभिमन्योः पिता वीरस् स एनमनुयास्यति ॥ १८॥

भीमसेनोऽपि तेजस्वी कौन्तेयोऽमितविक्रमः ।
समर्थो रक्षितुं राष्ट्रं नकुलश्च विशाम्पते ॥ १९॥

सहदेवस्तु कौरव्य [3]सर्वमन्यत् करिष्यति ।
कुटुम्बतन्त्रं [4]विधिवत् सर्वमेतन्महायशाः ॥ २०॥

---

1. क-ख—:कृष्णश्च ।
2. अ—अर्धचतुष्टयं नास्ति
3. क-ख—स्सुनीतिस्सुमहामतिः ।
4. क-ख—सुमहच्च सर्वमेव ।

वैशम्पायनः—

एतत् सर्वं यथान्यायम् उक्तं कुरुकुलोद्वहः ।
चकार फल्गुनं चापि सन्दिदेश हयं प्रति ॥ २१॥

युधिष्ठिरः—

एह्यर्जुन त्वया वीर हयोऽयं परिपाल्यताम् ।
त्वमर्हो रक्षितुं ह्येनं नान्यः कश्चन मानवः ॥ २२॥

ये चापि त्वां महाबाहो प्रत्युदीयुर्नराधिपाः ।
तैर्विग्रहो यथा न स्यात् तथा कार्यं [1]त्वयाऽनघ ॥ २३॥

आख्यातव्यश्च भवता यज्ञोऽयं मम सर्वशः ।
पार्थिवेभ्यो महाबाहो समये गम्यतामिति ॥ २४॥

वैशम्पायनः—

एवमुक्त्वा स धर्मात्मा भ्रातरं सव्यसाचिनम् ।
भीमं च नकुलं चैव पुरगुप्तौ समादधत् ॥ २५॥

कुटुम्बतन्त्रे च तदा सहदेवं युधां पतिम् ।
अनुमान्य महीपालं धृतराष्ट्रं युधिष्ठिरः ॥ २६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
॥ ९२ ॥ अनुगीतापर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
[ अस्मिन्नध्याये २६॥ श्लोकाः ]

---

1. क-ख—तथा त्वरन् ।

## ॥ षट्सप्ततितमोऽध्यायः ॥

अर्जुनेन युधिष्ठिरनियोगाद् ब्राह्मणैः क्षत्रियैश्च सह प्रथममुत्तरदिश्य-श्वसञ्चारणेन रक्षणाय तदनुसरणम् ॥ १ ॥

वैशम्पायनः—

दीक्षाकाले तु सम्प्राप्ते ततस्ते सुमहर्त्विजः ।
विधिवद्दीक्षयामासुर् अश्वमेधाय पार्थिवम् ॥ १

[1]कृत्वा स पशुमेधांस्तु दीक्षितः पाण्डुनन्दनः ।
धर्मराजो महातेजास् सहर्त्विग्भिर्व्यरोचत ॥ २

हयश्च हयमेधार्थं स्वयं स ब्रह्मवादिना ।
उत्सृष्टश्शास्त्रविधिना व्यासेनामिततेजसा ॥ ३

स राजा धर्मतो राजन् दीक्षितो विबभौ तदा ।
हेममाली रुक्मकण्ठः प्रदीप्त इव पावकः ॥ ४

[2]कृष्णाजिनी दण्डपाणिः क्षौमवासास्स धर्मजः ।
विबभौ द्युतिमान् भूयः प्रजापतिरिवाध्वरे ॥ ५

तथैवास्यर्त्विजस्सर्वे तुल्यवेषा विशाम्पते ।
बभूवुरर्जुनश्चैव प्रदीप्त इव पावकः ॥ ६

[3]श्वेताश्वः कपिकेतुश्च ससाराश्वं धनञ्जयः ।

---

1. क-ख—स कृत्वा पशुबन्धांस्तु दीक्षितः पाण्डवोऽध्वरे ।
2. ख—अर्धचतुष्टयं नास्ति
3. अ—कृष्णसारं ससाराश्वं कपिकेतुं धनञ्जयः ।

[1]विधिवत् पृथिवीपाल धर्मराजस्य शासनात् ॥ ७

विक्षिपन् गाण्डिवं राजन् बद्धगोधाङ्गुलित्रवान् ।
तमश्वं पृथिवीपाल मुदा युक्तस्ससार ह ॥ ८

आकुमारं तदा राज[2]न्नागमत् तत् पुरं विभो ।
द्रष्टुकामं कुरुश्रेष्ठं प्रयास्यन्तं धनञ्जयम् ॥ ९

[3]तेषामन्योन्यसम्मर्दाद् ऊष्मेव समजायत ।
दिदृक्षूणां हयं तं च तं चैव हयसारिणम् ॥ १०

ततश्शब्दो महाराज दशाशाः प्रतिपूरयन् ।
बभूव वीक्षतां नृणां कुन्तीपुत्रं धनञ्जयम् ॥ ११

एष गच्छति कौन्तेयस् तुरगश्चैव दीप्तिमान् ।
समन्वेति महाबाहुस् संस्पृशन् धनुरुत्तमम् ॥ १२

एवं शुश्राव वदतां गिरो जिष्णुरुदारधीः ।
स्वस्ति तेऽस्तु व्रजारिष्टं पुनश्चैहीति भारत ॥ १३

अथापरे मनुष्येन्द्र पुरुषा वाक्यमब्रुवन् ।
नैनं पश्याम सम्मर्दे धनुरेतत् प्रदृश्यते ॥ १४

एतद्धि मेघनिर्ह्रादं विश्रुतं गाण्डिवं धनुः ।

---

1. अ—याज्ञवल्क्यस्सशिष्यश्च कुशलो यज्ञकर्मणि ।
प्रयात्यर्थेन सहितश् शान्त्यर्थं वेदपारगः ॥
अनुजग्मुर्महात्मानं क्षत्रियाश्च विशोऽपि च ॥ [अधिकः पाठः]

2. क-ख—न्नगरं नागसाह्वयम् ।  3. अ-व—अर्धचतुष्टयं नास्ति

स्वस्ति गच्छत्वरिष्टं वै पन्थानमकुतोभयम् ॥ १४

निवृत्तमेनं द्रक्ष्यामः पुनरेवं च तेऽब्रुवन् ॥ १५॥

[1]एवमादि मनुष्याणाम् अर्जुनो भरतर्षभ ।
शुश्राव मधुरा वाचः पुनः पुनरुदीरिताः ॥ १६॥

याज्ञवल्क्यस्सशिष्यश्च कुशलो यज्ञकर्मणि ।
प्रायात् पार्थेन सहितश् शान्त्यर्थं वेदपारगः ॥ १७॥

ब्राह्मणाश्च महीपाल बह्वो वेदपारगाः ।
अनुजग्मुर्महात्मानं क्षत्रियाश्च विशोऽपि च ॥ १८॥

[2]पाण्डवैः पृथिवीमश्वो निर्जितां शस्त्रतेजसा ।
चचार स महाराज यथादेशं च सत्तम ॥ १९॥

यत्र युद्धानि वृत्तानि यान्यासन् पाण्डवस्य ह ।
तानि वक्ष्यामि ते वीर विचित्राणि महान्ति च ॥ २०॥

स हयः पृथिवीं राजन् प्रदक्षिणमरिन्दम ।
ससारोत्तरतः पूर्वं तन्निबोध महीपते ॥ २१॥

अवमृद्नन् स राष्ट्राणि पार्थिवानां हयोत्तमः ॥
शनैस्तथा परिययौ श्वेताश्वश्च महारथः ॥ २२॥

तत्र सङ्गणना नास्ति राज्ञामयुतशस्तदा ॥ २३

---

1. अ—इदमर्धं नास्ति
2. अ-क—विधिवत् पृथिवीपाल धर्मराजस्य शासनात् ।[ अधिकः पाठः ]

अयुध्यन्त महाराज क्षत्रिया हतबान्धवाः ।
किराता विकृता राजन् बहवो हि धनुर्धराः ॥ २४

म्लेच्छाश्चान्ये विनिकृताः पुरा राजन् महारणे ॥ २४॥

आर्याश्च पृथिवीपालाः प्रहृष्टनरवाहनाः ।
समीयुः पाण्डुपुत्रेण बहवो युद्धदुर्मदाः ॥ २५॥

एवं युद्धानि वृत्तानि तत्र तत्र विशाम्पते ।
अर्जुनस्य महीपालैर् नानादेशनिवासिभिः ॥ २६॥

यानि तूभयतो राजन् प्रवृत्तानि महान्ति च ।
तानि युद्धानि वक्ष्यामि कौन्तेयस्य महात्मनः ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥
॥ ९२ ॥ अनुगीतापर्वणि षष्टितमोऽध्यायः ॥ ६० ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

---

## ॥ सप्तसप्ततितमोऽध्यायः ॥

अर्जुनेन त्रैगर्तानां पराजयः ॥ १ ॥

---

वैशम्पायनः—

त्रिगर्तैरभवद्युद्धं कृतवैरैः किरीटिनः ।
महारथसमाज्ञातैर् हतानां पुत्रनप्तृभिः ॥ १

ते तमाज्ञाय सम्प्राप्तं याज्ञियं तुरगोत्तमम् ।
विषयान्ते ततो वीरा दंशिताः पर्यवारयन् ॥ २

रथिनो बद्धतूणीरास् सदश्वैस्समलङ्कृतैः ।
परिवार्य हयं राजन् ग्रहीतुमुपचक्रमुः ॥ ३

ततः किरीटी सञ्चिन्त्य तेषां राज्ञां चिकीर्षितम् ।
वारयामास तान् सर्वान् सान्त्वपूर्वमरिन्दमः ॥ ४

तमनादृत्य ते सर्वे शरैरभ्यहनंस्तदा ।
तमोरजोभ्यां सञ्छन्नांस् तान् किरीटी न्यवारयत् ॥ ५

अब्रवीच्च ततो जिष्णुः प्रहसन्निव भारत ॥ ५॥

अर्जुनः—

निवर्तध्वमधर्मज्ञाश् श्रेयो जीवितमेव वः ॥ ६

वैशम्पायनः—

स्वयं वीरः प्रयास्यन् वै धर्मराजेन वारितः ।
"अबान्धवा न ते पार्थ हन्तव्याः क्षत्रिया" इति ॥ ७

स तदा तद्वचश्श्रुत्वा धर्मराजस्य धीमतः ।
तान् निवर्तध्वमित्याह न न्यवर्तन्त चापि ते ॥ ८

[1]ततस्त्रिगर्तराजानं सूर्यवर्माणमाहवे ।
वितत्य शरजालेन प्रजहास धनञ्जयः ॥ ९

---

1. ब—ततः श्लोकचतुष्टयं नास्ति

ततस्ते रथघोषेण खुरनेमिस्वनेन च ।
पूरयन्तो दिशस्सर्वा धनञ्जयमुपाद्रवन् ॥ १०

सूर्यवर्मा ततः पार्थे शराणां नतपर्वणाम् ।
शतान्यमुञ्चद्राजेन्द्र लाघवं त्वभिदर्शयन् ॥ ११

तथा चान्ये महेष्वासा ये तस्यैवानुयायिनः ।
मुमुचुश्शरवर्षाणि धनञ्जयमुपाद्रवन् ॥ १२

ततस्त्रिगर्तैर्निर्मुक्तान् बहुभिस्सुबहूञ्छरान् ।
चिच्छेद पाण्डवो राजंस् ते भूमौ न्यपतंस्तदा ॥ १३

केतुवर्मा तु तेजस्वी तस्यैवावरजो युवा ।
युयुधे भ्रातुरर्थाय पाण्डवेन महात्मना ॥ १४

तमापतन्तं सम्प्रेक्ष्य केतुवर्माणमाहवे ।
अभ्यघ्नन्निशितैर्बाणैर् बीभत्सुः परवीरहा ॥ १५

केतुवर्मण्यभिहते धृतवर्मा महारथः ।
रथेनाशु समावृत्य शरैर्जिष्णुमवाकिरत् ॥ १६

तस्य तां शीघ्रतां ज्ञात्वा तुतोषातीव वीर्यवान् ।
गुडाकेशो महातेजा बालस्य धृतवर्मणः ॥ १७

न सन्दधा[1]नं ददृशे नाददानं च तं तदा ।
किरन्तमेव स शरान् ददृशे पाकशासनिः ॥ १८

स तु तं पूजयामास धृतवर्माणमाहवे ।

---

1. क-ख—नमद्राक्षीन्नाददानं तथा तदा।

मनसा तु मुहूर्तं वै रणे समभिहर्षयन् ॥ १९
न विव्याध रणे क्रुद्धं कुन्तीपुत्रो हसन्निव ।
सौभद्रस्येव तत् कर्म दृष्ट्वा बालस्य विस्मितः ॥ २०
तं पन्नगमिव क्रुद्धं कुरुवीरस्स्मयन्निव ।
प्रीतिपूर्वं महाराज न च प्राणैर्व्ययोजयत् ॥ २१
स तथा रक्ष्यमाणो वै पार्थेनामिततेजसा ।
धृतवर्मा शरं तीक्ष्णं मुमोच विजये तदा ॥ २२
स तेन विजयस्तूर्णम् अस्यन् विद्धः करे भृशम् ।
मुमोच गाण्डिवं हस्तात् तत् पपाताथ भूतले ॥ २३
धनुषः पततस्तस्य सव्यसाचिकराद्विभो ।
इन्द्रस्येवायुधस्यासीद् रूपं भरतसत्तम ॥ २४
तस्मिन् निपतिते दिव्ये महाधनुषि पार्थिव ।
जहास सस्वरं राजन् धृतवर्मा महाहवे ॥ २५
ततो रोषान्वितो जिष्णुः प्रमृज्य रुधिरं करात् ।
धनुरादत्त तद्दिव्यं शरवर्षैर्ववर्ष च ॥ २६
ततो हलहलाशब्दो दिविस्पृगभवत् तदा ।
नानाविधानां भूतानां तत् कर्मातीव शंसताम् ॥ २७
ततस्सम्प्रेक्ष्य सङ्क्रुद्धं कालान्तकयमोपमम् ॥
जिष्णुं त्रैगर्तका योधास् त्वरिताः पर्यवारयन् ॥ २८
अभिसृत्य परीप्सार्थे ततस्ते धृतवर्मणः ।

परिवव्रुर्गुडाकेशं तत्राक्रुध्यद्धनञ्जयः ॥ २९

ततो योधाञ्जघानाशु तेषां स दश चाष्ट च ।
महेन्द्रवज्रप्रतिमैर् आयसैर्निशितैश्शरैः ॥ ३०

तांस्तु भग्नान् स सम्प्रेक्ष्य त्वरमाणो धनञ्जयः ।
शरैराशीविषाकारैर् जघान स्वनवद्धसन् ॥ ३१

ते भग्नमनसस्सर्वे त्रैगर्तास्तु महारथाः ।
दिशो विदुद्रुवू राजन् धनञ्जयशरार्दिताः ॥ ३२

हतावशिष्टा हि पुरा पार्थं दृष्टपराक्रमाः ।
तमूचुः पुरुषव्याघ्रं संशप्तकनिषूदनम् ॥ ३३

त्रैगर्ताः—

तव स्म किङ्करास्सर्वे सर्वे च वशगास्तव ।
आज्ञापयस्व नः पार्थ प्रह्वान् प्रेष्यानिव स्थितान् ॥ ३४

करिष्यामः प्रियं सर्वे तव कौरवनन्दन ॥ ३४॥

वैशम्पायनः—

एतदाज्ञाय वचनं सर्वांस्तानब्रवीत् तदा ॥ ३५

अर्जुनः—

जीवितं रक्षत नृपाश् शासनं गृह्यतां मम ॥ ३५॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

॥ ९२ ॥ अनुगीतापर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

[अस्मिन्नध्याये ३५॥ श्लोकाः]

---

## ॥ अष्टसप्ततितमोऽध्यायः ॥

अर्जुनेन प्राग्ज्योतिषपुरमेत्याश्वरक्षणाय भगदत्तसुतेन वज्रदत्तेन सहायोधनम् ॥ १ ॥

वैशम्पायनः—

प्राग्ज्योतिषमथाभ्येत्य व्यचरत् स हयोत्तमः ।
भगदत्तात्मजस्तत्र निर्ययौ रणकर्कशः ॥ १

सहयं पाण्डुपुत्रं तं विषयान्तमुपागतम् ।
युयुधे भरतश्रेष्ठ वज्रदत्तो महीपतिः ॥ २

सोऽभिनिर्याय नगराद् भगदत्तसुतो नृपः ।
अश्वमायान्तमुन्मथ्य नगराभिमुखो ययौ ॥ ३

तमालक्ष्य महाबाहुः कुरूणामृषभस्तदा ।
गाण्डीवं विक्षिपंस्तूर्णं सहसा समुपाद्रवत् ॥ ४

ततो गाण्डीवनिर्मुक्तैर् इषुभिर्मोहितो नृपः ।
हयमुत्सृज्य तं वीरस् ततः पार्थमुपाद्रवत् ॥ ५

पुनः प्रविश्य नगरं दंशितस्तु नृपोत्तमः ।
आरुह्य नागप्रवरं निर्ययौ योद्धुकाङ्क्षया ॥ ६

पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
दोधूयमानेन तदा चामरेण महारथः ॥ ७

ततः पार्थं समासाद्य पाण्डवानां महारथम् ।
आहूतवान् हि कौरव्यं बाल्यान्मोहाच्च संयुगे ॥ ८

स वारणं नगप्रख्यं प्रभिन्नकरटामुखम् ।
प्रेषयामास सङ्क्रुद्धस् ततश्श्वेतहयं प्रति ॥ ९

विक्षरन्तं यथा मेघं परवारणवारणम् ।
शास्त्रवत् कल्पितं सङ्ख्ये [1]विशालं युद्धदुर्मदम् ॥ १०

प्रचोद्यमानस्स गजस् तेन राज्ञा महाबलः ।
तदाऽङ्कुशेन विबभावुत्पतिष्यन्निवाम्बरम् ॥ ११

तमापतन्तं सम्प्रेक्ष्य क्रुद्धो राजन् धनञ्जयः ।
भूमिष्ठो वारणगतं योधयामास भारत ॥ १२

वज्रदत्तस्तु सङ्क्रुद्धो मुमोचाशु धनञ्जये ।
तोमरानग्निसङ्काशाञ् छलभानिव वेगितान् ॥ १३

अर्जुनस्तानसम्प्राप्तान् गाण्डीवप्रेषितैश्शरैः ।
द्विधा त्रिधा च चिच्छेद ख एव खगमैस्तदा ॥ १४

स तान् दृष्ट्वा तदा छिन्नांस् तोमरान् भगदत्तजः ।
इषूनसक्तांस्त्वरितः प्राहिणोत् पाण्डवं प्रति ॥ १५

ततोऽर्जुनस्तूर्णतरं रुक्मपुङ्खानजिह्मगान् ।
प्रेषयामास सङ्क्रुद्धो भगदत्तात्मजं प्रति ॥ १६

---

1. क—निस्सहं । ख-घ—विस्सहं ।

स तैर्विद्धो महातेजा वज्रदत्तो महाहवे ।
भृशं हतः पपातोर्व्यां न त्वेनमजहात् स्मृतिः ॥ १७

ततस्स पुनरारुह्य वारणप्रवरं रणे ।
अव्यग्रं प्रेषयामास जयार्थी विजयं प्रति ॥ १८

तस्मै बाणांस्ततो जिष्णुर् निर्मुक्ताशीविषोपमान् ।
प्रेषयामास सङ्क्रुद्धो ज्वलितानिव पावकान् ॥ १९

स तैर्विद्धो महाभागो विस्रवन् रुधिरं बभौ ।
हिमवानिव शैलेन्द्रो बहुप्रस्रवणस्तदा । २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
॥ ९२ ॥ अनुगीतापर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥
[ अस्मिन्नध्याये २० श्लोकाः ]

---

## ॥ एकोनाशीतितमोऽध्यायः ॥

अर्जुनेन भगदत्तात्मजपराजयः ॥ १ ॥

---

वैशम्पायनः—

एवं त्रिरात्रमभवत् तद्युद्धं भरतर्षभ ।
अर्जुनस्य नरेन्द्रेण वृत्रेणेव शतक्रतोः ॥ १

ततश्चतुर्थे दिवसे वज्रदत्तो महाबलः ।

जहास सस्वनं हासं वाक्यं चेदमथाब्रवीत् ॥ २

वज्रदत्तः—

अर्जुनार्जुन तिष्ठ त्वं न मे जीवन् विमोक्ष्यसे ।
त्वां निहत्य करिष्यामि पितुस्तोयं यथाविधि ॥ ३

त्वया वृद्धो मम पिता भगदत्तः पितुस्सखा ।
हतो वृद्धोऽपचायित्वा शिशुं मामद्य योधय ॥ ४

वैशम्पायनः—

इत्येवमुक्त्वा सङ्क्रुद्धो वज्रदत्तो नराधिपः ।
प्रेषयामास कौरव्य वारणं पाण्डवं प्रति ॥ ५

स प्रेष्यमाणो नागेन्द्रो वज्रदत्तेन धीमता ।
उत्पतिष्यन्निवाकाशे ह्यभिदुद्राव पाण्डवम् ॥ ६

अग्रहस्तप्रयुक्तेन शीकरेण स फल्गुनम् ।
[1]समुक्षत महाराज शैलं नील इवाम्बुदः ॥ ७

स तेन प्रेषितो राज्ञा मेघवद्विनदन् मुहुः ।
मुखाडम्बरघोषेण समाद्रवत फल्गुनम् ॥ ८

स नृत्यन्निव नागेन्द्रो वज्रदत्तप्रचोदितः ।
आससाद द्रुतं राजन् कौरवाणां महारथम् ॥ ९

तमापतन्तं सम्प्रेक्ष्य वज्रदत्तस्य वारणम् ।

---

1. क—इवमादि अर्धत्रयं नास्ति

गाण्डीवमाश्रित्य बली न ह्यकम्पत शत्रुहा ॥ १०

चुक्रोध बलवच्चापि पाण्डवस्तस्य भूपतेः ।
[1]कार्यविघ्नमनुस्मृत्य पूर्ववैरं च भारत ॥ ११

ततस्तु वारणं क्रुद्धश् शरजालेन पाण्डवः ।
निवारयामास तदा वेलेव मकरालयम् ॥ १२

स नागप्रवरो वीर्याद् अर्जुनेन निवारितः ।
तस्थौ शरैर्विनुन्नाङ्गश् श्वाविच्छललितो यथा ॥ १३

निवारितं गजं दृष्ट्वा भगदत्तात्मजो नृपः ।
उत्ससर्ज शितान् बाणान् अर्जुने क्रोधमूर्छितः ॥ १४

अर्जुनस्तु महाराजश् शरैश्शरविघातिभिः ।
वारयामास तान् बाणांस् तदद्भुतमिवाभवत् ॥ १५

ततः पुनरपि क्रुद्धो राजा प्राग्ज्योतिषाधिपः ।
प्रेषयामास नागेन्द्रं बलवत् पर्वतोपमम् ॥ १६

तमापतन्तं सम्प्रेक्ष्य बलवान् पाकशासनिः ।
नाराचमग्निसङ्काशं प्राहिणोद्वारणं प्रति ॥ १७

तेन तद्वारणो राजन् मर्मण्यभिहतो भृशम् ।
पपात भूमौ सहसा वज्राहत इवाचलः ॥ १८

स पतञ्शुशुभे नागो धनञ्जयशराहतः ।

---

1. क-ख—कार्यं संस्मृत्य पूर्वं वै पूर्ववैरं च ।

विशन्निव महाशैलो महीं वज्रप्रपीडितः ॥ १९

तस्मिन् निपतिते नागे वज्रदत्तस्य पाण्डवः ।

तं न भेतव्यमित्याह ततो भूमिगतं नृपम् ॥ २०

अर्जुनः—

"अब्रवीच्च महातेजाः प्रस्थितं मां युधिष्ठिरः ।

राजानस्ते न हन्तव्यास् तान् मोचय कथञ्चन ॥ २१

सर्वमेतन्नरव्याघ्र भवत्वेतावता कृतम् ।

योधाश्चापि न हन्तव्या कथञ्चन रणे त्वया ॥ २२

वक्तव्याश्चापि राजानस् सर्वैस्सह सुहृज्जनैः ।

युधिष्ठिरस्याश्वमेधो भवद्भिरनुभूयताम्" ॥ २३

इति भ्रातृवचश्श्रुत्वा न हन्मि त्वां नराधिप ।

उत्तिष्ठ न भयं तेऽस्ति स्वस्तिमान् भव पार्थिव ॥ २४

आगच्छेस्त्वं महाराज परां चैत्रीमुपस्थिताम् ।

तदाऽश्वमेधो भविता धर्मराजस्य धीमतः ॥ २५

वैशम्पायनः—

एवमुक्तस्स राजा तु भगदत्तात्मजस्तदा ।

तथेत्येवाब्रवीद्वाक्यं पाण्डवेनाभिनिर्जितः ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

॥ ९२ ॥ अनुगीतापर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

[ अस्मिन्नध्याये २६ श्लोकाः ॥

## ॥ अशीतितमोऽध्यायः ॥



अश्वानुसरणवशात् सिन्धुदेशं गतेनार्जुनेन सैन्धवैस्सह महदायोधनम् ॥ १ ॥ बाणगणावकीर्णस्यार्जुनस्य कराद्गाण्डीवस्याधःपतने देवर्ष्यादिभिर्जपादिना तस्य तेजोदीपनम् ॥ २ ॥ ततः पुनरर्जुनस्य तैस्सहायोधनम् ॥ ३ ॥

---

वैशम्पायनः—

जित्वा प्रसाद्य राजानं भगदत्तसुतं तदा ।
विसृज्य याते तुरगे सैन्धवान् प्रति भारत ॥ १

सैन्धवैरभवद्युद्धं ततस्तस्य किरीटिनः ।
हतशेषैर्महायुद्धे हतानां च सुतैरपि ॥ २

तेऽवतीर्णमुपश्रुत्य विषयं श्वेतवाहनम् ।
प्रत्युद्ययुरमृष्यन्तो राजानः पाण्डवर्षभम् ॥ ३

अश्ववन्तं परामृश्य विषयान्ते विगाहितम् ।
न भयं चक्रिरे पार्थाद् भीमसेनादनन्तरात् ॥ ४

तेऽविदूराद्धनुष्पाणिं याज्ञियस्य हयस्य च ।
बीभत्सुं प्रत्यपश्यन्त पदातिं प्रत्युपस्थितम् ॥ ५

ततस्ते तं महावीर्यं राजानः पर्यवारयन् ।
जिगीषन्तो नरव्याघ्राः पूर्वं विनिकृता युधि ॥ ६

ते नामान्यथ गोत्राणि [1]कर्माणि विविधानि च ।
[2]कीर्तयन्तस्तदा पार्थं शरवर्षैरवाकिरन् ॥ ७

ते किरन्तश्शरांस्तीक्ष्णान् वारणेन्द्रनिवारणान् ।
रणे जयमभीप्सन्तः कौन्तेयं पर्यवारयन् ॥ ८

ते समीक्ष्य तु तं वीरम् उग्रकर्माणमाहवे ।
सर्वे युयुधिरे वीरा रथस्थास्तं पदातिनम् ॥ ९

ते तमाजघ्निरे वीरा निवातकवचान्तकम् ।
संशप्तकनिहन्तारं हन्तारं सैन्धवस्य च ॥ १०

ततो रथसहस्रेण गजानामयुतेन च ।
कोष्ठकीकृत्य कौन्तेयं सम्प्रस्थितमवारयन् ॥ ११

संस्मरन्तो वधं वीरास् सिन्धुराजस्य धीमतः ।
जयद्रथस्य कौरव्य समरे सव्यसाचिना ॥ १२

ततः पर्जन्यवत् सर्वे शरवृष्टिमवासृजन् ।
तैः कीर्णश्शुशुभे पार्थो रविर्मेघान्तरे यथा ॥ १३

स शरैस्समवच्छन्नो ददृशे पाण्डवर्षभः ।
पञ्जरान्तरसञ्चारी शकुन्त इव भारत ॥ १४

ततो हाहाकृतं सर्वं कौन्तेये शरपीडिते ।
त्रैलोक्यमभवत् सर्वं रविश्चासीद्रजोरुणः ॥ १५

1. क-ख—श्रावयन्तः पुनः पुनः । 2. क-ख—कर्माणि च तदा ।

ततो ववौ महाराज मारुतो रोमहर्षणः ।
राहुरग्रसदादित्यं युगपत् सोममेव च ॥ १६

उल्काश्च जज्ञिरे सूर्ये कीर्यमाणास्समन्ततः ।
वेपथुश्चाभवद्राजन् कैलासस्य महागिरेः ॥ १७

मुमुचुश्चास्रमत्युष्णं दुःखशोकसमन्विताः ।
सप्तर्षयो जातभयास् तथा देवर्षयोऽपि च ॥ १८

शशश्चाशु विनिर्भिद्य मण्डलं शशिनोऽगमत् ।
विपरीतस्तथाऽऽकाशस् तस्मिन्नुत्पातलक्षणे ॥ १९

[1]रासभारुणसङ्काशा धनुष्मन्तस्सविद्युतः ।
आवृत्य गगनं मेघा मुमुचुर्मांसशोणितम् ॥ २०

एवमासीत् तदा वीरे शरवर्षाभिसंवृते ।
लोकेऽस्मिन् भरतश्रेष्ठ तदद्भुतमिवाभवत् ॥ २१

तस्य तेनाभिकीर्णेन शरजालेन सर्वतः ।
मोहात् पपात गाण्डीवम् आवापश्च करादपि ॥ २२

तस्मिन् मोहमनुप्राप्ते शरजालं महत्तरम् ।
सैन्धवा मुमुचुस्तूर्णं गतसत्वे महारथे ॥ २३

ततो मोहसमापन्नं ज्ञात्वा पार्थं दिवौकसः ।
सर्वे वित्रस्तमनसस् सर्वे शान्तिपरास्स्थिताः ॥ २४

---

1. क-ख-ग—सहस्रारुणसङ्काशाः ।

ततो देवर्षयस्सर्वे तथा सप्तर्षयोऽपि च ।
ब्रह्मर्षयश्च विजयं जेपुः पार्थस्य धीमतः ॥ २५

ततः प्रदीपिते देवैः पार्थतेजसि पार्थिव ।
तस्थावचलवद्धीमान् सङ्ग्रामे परमास्त्रवित् ॥ २६

विचकर्ष धनुर्दिव्यं ततः कौरवनन्दनः ।
वज्रस्येवेह शब्दोऽभून्महांस्तस्य पुनः पुनः ॥ २७

ततस्स शरवर्षाणि प्रत्यमित्रान् प्रति प्रभुः ।
ववर्ष च तथा पार्थो वर्षाणीव पुरन्दरः ॥ २८

ततस्ते सैन्धवा योधास् सर्वे एव सराजकाः ।
नादृश्यन्त शरैः कीर्णाश् शलभैरिव पादपाः ॥ २९

तस्य शब्देन वित्रेसुर् भयार्ताश्च विदुद्रुवुः ।
मुमुचुश्चाश्रु शोकार्ता निकृत्ताश्चापि सैन्धवाः ॥ ३०

तांस्तु सर्वान् नरश्रेष्ठस् सर्वतो विचरद्बली ।
अलातचक्रवद्राजञ् शरजालैस्समर्पयन् ॥ ३१

[1]तमिन्द्रजालप्रतिमं बाणजालममित्रहा ।
व्यसृजद् दिक्षु सर्वासु महेन्द्र इव सर्वतः ॥ ३२

[2]मेघजालनिभं सैन्यं विदार्य स रविप्रभः ।
विबभौ कौरवश्रेष्ठश् शरदीव दिवाकरः ॥ ३३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥
॥ ९२ ॥ अनुगीतापर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥
[ अस्मिन्नध्याये ३३ श्लोकाः ]

---

1. क-ख—तं दृष्ट्वाऽप्रतिमं बाणं । 2. क-ख—फल्गुनो निहतं ।

## ॥ एकाशीतितमोऽध्यायः ॥

अर्जुनागमनश्रवणमात्रेण जयद्रथसुते मृते दुश्शलया तत्सुतमानीयार्जुनं प्रत्यभियानम् ॥ १ ॥ ततोऽर्जुनेन दुश्शलाप्रार्थनया तस्यां बहुमानेन च युद्धादुपरमः ॥ २ ॥

---

वैशम्पायनः—

ततो गाण्डीवभृच्छूरो युद्धाय समुपस्थितः ।
विबभौ युधि दुर्धर्षो हिमवानचलो यथा ॥ १

ततस्सैन्धवयोधास्ते पुनरेव व्यवस्थिताः ।
विमुञ्चन्तस्सुसंरब्धाश्श्शरवर्षाणि भारत ॥ २

तान् प्रसह्य महावीर्यः पुनरेव व्यवस्थितान् ।
ततः प्रोवाच कौन्तेयो[1] मुमूर्षूञ्श्लक्ष्णया गिरा ॥ ३

अर्जुनः—

युध्यध्वं परया शक्त्या यतध्वं च वधे मम ।
कुरुध्वं सर्वकार्याणि महद्वो भयमागतम् ॥ ४

एष योत्स्यामि वस्सर्वान् निवार्य शरवागुराम् ।
तिष्ठध्वं युद्धमनसो दर्पान् विनयितास्मि वः ॥ ५

वैशम्पायनः—

एतावदुक्त्वा कौरव्यो रोषाद्गाण्डीवभृत् तदा ।

---

1. क-ख—यस् तांस्तदा ।

न ततापं वचस्स्मृत्वा भ्रातुर्ज्येष्ठस्य भारत ॥ ६

न हन्तव्या रणे तात क्षत्रिया विजिगीषवः ।
जेतव्याश्चेति यत् प्रोक्तं धर्मराज्ञा महात्मना ॥ ७

चिन्तयामास च तदा फल्गुनः पुरुषर्षभः ॥ ७॥

[1]इत्युक्तोऽहं नरेन्द्रेण न हन्तव्या नृपा इति ।
कथं तन्न मृषेह स्याद् धर्मराजवचश्शुभम् ॥ ८॥

न हन्तव्याश्च राजानो राज्ञश्चाज्ञा कृता भवेत् ॥ ९

इति सञ्चिन्त्य तु तदा भ्रातुः प्रियहिते रतः ।
प्रोवाच वाक्यं धर्मज्ञस् सैन्धवान् युद्धदुर्मदान् ॥ १०

अर्जुनः—

बालांस्त्रियो वा युद्धेषु न हिंसे समुपस्थितान् ॥ १०॥

यश्च वक्ष्यति सङ्ग्रामे तवास्मीति पराजितः ।
एतच्छ्रुत्वा वचो मह्यं कुरुध्वं हितमात्मनः ॥ ११॥

अतोऽन्यथा कृच्छ्रगता भविष्यथ मयाऽर्दिताः ॥ १२

वैशम्पायनः—

एवमुक्त्वा तु तान् वीरान् युयुधे नरपुङ्गवः ।
अत्वरावानसंरब्धस् संरब्धैर्विजिगीषुभिः ॥ १३

ततश्शतसहस्राणि शराणां नतपर्वणाम् ।

1. अ—अर्धचतुष्टयं नास्ति

मुमुचुस्सैन्धवा राजंस् तदा गाण्डीवधन्विनि ॥ १४

स तानापततः क्रूरान् आशीविषविषोपमान् ।
चिच्छेद निशितैर्बाणैर् अन्तरिक्षे धनञ्जयः ॥ १५

छित्त्वा तु तानाशु जवान् कङ्कपत्राञ्शिलाशितान् ।
एकैकमेष दशभिर् बिभेद समरे शरैः ॥ १६

ततः प्रासांश्च शक्तीश्च पुनरेव धनञ्जये ।
जयद्रथं हतं स्मृत्वा चिक्षिपुस्सैन्धवा नृप ॥ १७

तेषां किरीटी सङ्कल्पं मोघं चक्रे महामनाः ।
सर्वांस्तानन्तरा च्छित्त्वा मुदा चुक्रोश पाण्डवः ॥ १८

तथैवापततां तेषां योधानां जयगृद्धिनाम् ।
शिरांसि पातयामास भल्लैस्सन्नतपर्वभिः ॥ १९

तेषां विद्रवतां चैव पुनरेव च धावताम् ।
निवृत्तानां च शब्दोऽभूत् पूर्णस्येव महोदधेः ॥ २०

ते वध्यमाना हि तदा पार्थेनामिततेजसा ।
यथोत्साहं यथाशक्ति योधयामासुरर्जुनम् ॥ २१

ततस्ते फल्गुनेनाजौ शरैस्सन्नतपर्वभिः ।
कृता विसंज्ञा भूयिष्ठाः क्लान्तवाहनसैनिकाः ॥ २२

[1]दुश्शला बालमादाय नप्तारं प्रययौ तदा ॥ २३

महारथ[2]सुतं वीरं रथेनानुगतं तदा ॥ २३॥

शान्त्यर्थं सर्वयोधानाम् अभ्यगच्छद्धि पाण्डवम् ॥ २४

सा धनञ्जयमासाद्य मुमोचार्तस्वरं तदा ।

धनञ्जयोऽपि तां दृष्ट्वा धनुर्विससृजे तदा ॥ २५

समुत्सृष्टधनुः पार्थो विधिवद्भगिनीं तदा ।

प्राह किं करवाणीति सा च तं वाक्यमब्रवीत् ॥ २६

दुश्शला—

एष ते भरतश्रेष्ठ स्वस्रीयस्यात्मजश्शिशुः ।

अभिवादयते वीर तं पश्य भरतर्षभ ॥ २७

वैशम्पायनः—

इत्युक्तस्तस्य पितरं स पप्रच्छार्जुनस्तदा ।

कासाविति ततो राजन् दुश्शला वाक्यमब्रवीत् ॥ २८

दुश्शला—

पितृशोकाभिसन्तप्तो विषादार्तोऽस्य वै पिता ।

पञ्चत्वमगमद्वीरो यथा तन्मे निशामय ॥ २९

स पूर्वं पितरं श्रुत्वा हतं युद्धे त्वयाऽनघ ।

त्वामागतं च संश्रुत्वा युद्धाय हयसारिणम् ॥ ३०

पितुश्च मृत्युदुःखार्तो जहौ प्राणान् धनञ्जय ॥ ३०॥

---

1. ख—इतः श्लोकद्वयं नास्ति

2. क-ख—सुतं वीरं रथेनानागसं तदा ।

प्राप्तो बीभत्सुरित्येव नाम श्रुत्वैव तेऽनघ ।
विषादार्तः पपातोर्व्यां ममार च ममात्मजः ॥ ३१॥

तं दृष्ट्वाऽहं निपतितं ततस्तस्यात्मजं विभो ।
गृहीत्वा समनुप्राप्ता त्वामद्य शरणैषिणी ॥ ३२॥

वैशम्पायनः—
इत्युक्त्वाऽऽर्तस्वरं सा तु मुमोच धृतराष्ट्रजा ।
दीना दीनं स्थितं पार्थम् अब्रवीच्चाप्यधोमुखम् ॥ ३३॥

दुश्शला—
स्वसारं मामवेक्षस्व स्वस्रीयात्मजमेव च ।
कर्तुमर्हसि धर्मज्ञ दयां मयि कुरूद्वह ॥ ३४॥

विस्मृत्य कुरुराजानं तं च मन्दं जयद्रथम् ॥ ३५

अभिमन्योर्यथा जातः परीक्षित् परवीरहा ।
तथाऽयं सुरथाज्जातो मम पौत्रो महाभुज॥ ३६

तमादाय नरव्याघ्र प्राप्ताऽस्म्यद्य तवान्तिकम् ।
शमार्थं सर्वयोधानां शृणु चेदं वचो मम ॥ ३७

आगतोऽयं महाबाहो तस्य मन्दस्य पुत्रकः ।
[1]प्रसादमस्य बालस्य तस्मात् त्वं कर्तुमर्हसि ॥ ३८

एष प्रसाद्य शिरसा मया सार्धमरिन्दम ।
याचते त्वां महाबाहो शमं गच्छ धनञ्जय ॥ ३९

1. अ—अर्धद्वयं नास्ति

[1]बालस्य हतबन्धोश्च पार्थ किञ्चिदजानतः ।
प्रसादं कुरु धर्मज्ञ मा त्वं मन्युवशं गमः ॥ ४०

तमनार्यं नृशंसं च विस्मृत्यास्य पितामहम् ।
आगस्कारिणमत्यर्थं प्रसादं कर्तुमर्हसि ॥ ४१

वैशम्पायनः—

एवं ब्रुवत्यां करुणं दुश्शलायां धनञ्जयः ।
संस्मृत्य देवीं गान्धारीं धृतराष्ट्रं जनेश्वरम् ॥ ४२
प्रोवाच पुत्रशोकार्तः क्षत्रधर्मं विगर्हयन् ॥ ४२॥

अर्जुनः—

धिक् तं दुर्योधनं क्षुद्रं राज्यलुब्धं च मानिनम् ।
यत्कृते बान्धवास्सर्वे मया नीता यमक्षयम् ॥ ४३॥

वैशम्पायनः—

[2]इत्युक्त्वा बहु सान्त्वादि प्रसादमकरोज्जयः ।
परिष्वज्य च तां प्रीतो विससर्ज गृहान् प्रति ॥ ४४॥

दुश्शला चापि तान् सर्वान् निवार्य महतो रणात् ।
सम्पूज्य पार्थं प्रययौ गृहान् प्रति शुभानना ॥ ४५॥

ततस्सैन्धवकान् योधान् निर्जित्य स नरर्षभः ॥ ४६
[3]पुनरेवाश्वमेधार्थं हयं कामविचारिणम् ।

---

1. ख—अर्धचतुष्टयं नास्ति
2. ब—इतः सार्धः श्लोको नास्ति
3. क-ख—हयमेधं च धावन्तं हयं कामविहारिणम् ।
   ब—हयमेव च धावन्तं ।

ससार याज्ञियं वीरो विधिवत् स विशाम्पते ॥ ४७

तारामृगमिवाकाशे देवदेवः पिनाकधृक् ॥ ४७॥

स पार्थिवान् वशे कृत्वा तांस्तान् देशान् यथासुखम् ।
विचचार यथाकामं कर्म पार्थस्य वर्धयन् ॥* ४८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥
॥ ९२ ॥ अनुगीतापर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
[ अस्मिन्नध्याये ४८॥ श्लोकाः ]

---

## ॥ द्व्यशीतितमोऽध्यायः ॥

अर्जुनेन मणलूरपुरं प्रति गमनम् ॥ १ ॥ तथा पितृभक्त्या विनयेनागतं चित्राङ्गदायां जातं स्वात्मजं बभ्रुवाहनं प्रति क्षत्रधर्मपरित्यागजरोषादुपालम्भः ॥ २ ॥ तमसहमानया उलूप्या नागलोकादेत्य बभ्रुवाहनस्यार्जुनेन सह युद्धप्रोत्साहनम् ॥ ३ ॥ बभ्रुवाहनेन स्वशरगाढाभिघातेन निपतिते पार्थे पितृमारणशोकेन मोहाधिगमः ॥ ४ ॥ ततश्चित्राङ्गदया रणाङ्गणमेत्य बहुधा विलापः ॥ ५ ॥

---

वैशम्पायनः—

क्रमेण स हयस्त्वेवं विचरन् भरतर्षभ ।
मणलूरुपतेर्देशं उपायात् सहपाण्डवः ॥ १

---

* क-ख—नात्राध्यायसमाप्तिर्दृश्यते ।

श्रुत्वा तु नृपतिर्वीरं पितरं बभ्रुवाहनः ।
निर्ययौ विनयेनार्यो ब्राह्मणार्घ्यपुरस्सरः ॥ २

मणलूरेश्वरं त्वेवम् उपयातं धनञ्जयः ।
नाभ्यनन्दत मेधावी क्षत्रधर्ममनुस्मरन् ॥ ३

उवाच चैनं धर्मात्मा समन्युः फल्गुनस्तथा ॥ ३॥

अर्जुनः—

प्रक्रियेयं न ते युक्ता बहिस्त्वं क्षत्रधर्मणः ॥ ४

संरक्ष्यमाणं तुरगं यौधिष्ठिरमुपागतम् ।
याज्ञियं विषयं त्वं मां नायोत्सीः किं नु पुत्रक ॥ ५

धिक् धिक् त्वां तु सुदुर्बुद्धिं क्षत्रधर्माविशारदम् ।
यो मां युधि सुसम्प्राप्तं साम्नैवाथो त्वमग्रहीः ॥ ६

न त्वया पुरुषार्थश्च कश्चिदस्तीह जीवता ।
यस्त्वं स्त्रीवद्युधा प्राप्तं साम्ना मां प्रतिगृह्णथाः ॥ ७

यद्यहं न्यस्तशस्त्रं त्वाम् आगच्छेयं सुदुर्मते ।
प्रक्रियेयं ततो युक्ता भवेत् तव नराधम ॥ ८

वैशम्पायनः—

तमेवमुक्तं भर्त्रा च विदित्वा पन्नगात्मजा ।
अमृष्यमाणा भित्त्वोर्वीम् उलूपी तमुपागमत् ॥ ९

सा ददर्श ततः पुत्रं विमृशन्तमधोमुखम् ।

सन्तर्ज्यमानमसकृद् भर्त्रा युद्धार्थिना विभो ॥ १०

ततस्सा चारुसर्वाङ्गी तमुपेत्योरगात्मजा ।
उलूपी प्राह वचनं क्षत्रधर्मविशारदम् ॥ ११

उलूपी—

उलूपीं मां निबोध त्वं मातरं पन्नगात्मजाम् ।
कुरुष्व वचनं पुत्र धर्मस्ते भविता महान् ॥ १२

युद्ध्यस्वैनं कुरुश्रेष्ठं धनञ्जयमरिन्दमम् ।
एवमेष पिता प्रीतो भविष्यति न संशयः ॥ १३

वैशम्पायनः—

एवमुद्धर्षितो मात्रा स राजा बभ्रुवाहनः ।
मनश्चक्रे महातेजा युद्धाय भरतर्षभ ॥ १४

सन्नह्य काञ्चनं वर्म शिरस्त्राणं च भानुमत् ।
तूणीरशरसम्बाधम् आरुरोह महारथम् ॥ १५

सर्वोपकरणैर्युक्तं युक्तमश्वैर्मनोजवैः ।
सुचक्रोपस्करं धीमान् हेमभाण्डपरिष्कृतम् ॥ १६

परमार्चितमुच्छ्रित्य ध्वजं हंसं हिरण्मयम् ।
प्रययौ पार्थमुद्दिश्य स राजा बभ्रुवाहनः ॥ १७

ततोऽभ्येत्य हयं वीरो याज्ञियं पार्थरक्षितम् ।
ग्राहयामास पुरुषैर् हयशिक्षाविशारदैः ॥ १८

गृहीतं वाजिनं दृष्ट्वा प्रीतात्मा स धनञ्जयः ।
पुत्रं रथस्थं भूमिष्ठस् सन्न्यवारयदाहवे ॥　　१९

ततस्स राजा तं वीरश् शरव्रातैस्सहस्रशः ।
अर्दयामास निशितैर् आशीविषविषोपमैः ॥　　२०

तयोस्समभवद्युद्धं पितुः पुत्रस्य चातुलम् ।
देवासुररणप्रख्यम् उभयोः प्रीयमाणयोः ॥　　२१

किरीटिनं तु विव्याध शरेणानतपर्वणा ।
जत्रुदेशे नरव्याघ्र प्रहसन् बभ्रुवाहनः ॥　　२२

सोऽत्यगात् सह पुङ्खेन वल्मीकमिव पन्नगः ।
विनिर्भिद्य च कौन्तेयं महीतलमुपाविशत् ॥　　२३

स गाढवेदनो धीमान् आलम्ब्य धनुरुत्तमम् ।
दिव्यं तेजस्समाविश्य निमीलित इवाबभौ ॥　　२४

स संज्ञामुपलभ्याथ प्रशस्य पुरुषर्षभः ।
पुत्रं शक्रात्मजो वाक्यम् इदमाह महीपते ॥　　२५

अर्जुनः—

साधु साधु महाबाहो वत्स चित्राङ्गदात्मज ।
सदृशं कर्म ते दृष्ट्वा प्रीतिमानस्मि पुत्रक ॥　　२६

विमुञ्चाम्यद्य बाणांश्च युद्धे धीरो भवाद्य वै ॥　　२६॥

वैशम्पायनः—

इत्येवमुक्त्वा नाराचैर् अभ्यवर्षदमित्रहा ॥ २८

तांस्तान् गाण्डीवनिर्मुक्तान् वज्राशनिसमस्वनान् ।
नाराचानच्छिनद्राजा सर्वानेव त्रिधा त्रिधा ॥ २८

तस्य पार्थश्शरैस्तीक्ष्णैर् ध्वजं हेमपरिष्कृतम् ।
सुवर्णतालप्रतिमं क्षणेनापाहरद्रथात् ॥ २९

हयांश्चास्य महाकायान् महावेगपराक्रमान् ।
चकार राजन् निर्जीवान् प्रहसन् पाण्डवर्षभः ॥ ३०

स रथादवतीर्याशु राजा परमकोपनः ।
पदातिः पितरं कोपाद् योधयामास पाण्डवम् ॥ ३१

सम्प्रीयमाणः पाण्डूनाम् ऋषभः पुत्रविक्रमात् ।
नात्यर्थं पीडयामास पुत्रं वज्रधरात्मजः ॥ ३२

[1]स हन्यमानोऽभिमुखं पितरं बभ्रुवाहनः ।
शरैराशीविषाकारैः पुनरेवार्दयद्बली ॥ ३३

ततस्स बाल्यात् पितरं विव्याध हृदि पत्रिणा ।
निशितेन सुपुङ्खेन बलवद्बभ्रुवाहनः ॥ ३४

स शरस्तेजसा दीप्तो ज्वलन्निव हुताशनः ।
विवेश पाण्डवं राजन् मर्म भित्त्वाऽतिदुःखकृत् ॥ ३५

---

1. क-ख—स मन्यमानो विमुखं ।

स तेनातिभृशं विद्धः पुत्रेण कुरुनन्दनः ।
महीं जगाम मोहार्तस् ततो राजन् धनञ्जयः ॥ ३६

तस्मिन् निपतिते वीरे कौरवाणां धुरन्धरे ।
सोऽपि मोहं जगामाशु तत्र चित्राङ्गदात्मजः ॥ ३७

व्यायम्य संयुगे राजा दृष्ट्वा च पितरं हतम् ।
पूर्वमेव च बाणौघैर् गाढविद्धोऽर्जुनेन सः ॥ ३८

भर्तारं निहतं श्रुत्वा पुत्रं च पतितं भुवि ।
चित्राङ्गदा परित्रस्ता प्रविवेश रणाजिरम् ॥ ३९

शोकसन्तप्तहृदया रुदती सा ततश्शुभा ।
मणलूरपतेर्माता ददर्श निहतं पतिम् ॥ ४०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आश्वमेधिकपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥
॥ ९२ ॥ अनुगीतापर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥
[ अस्मिन्नध्याये ४० श्लोकाः ]

## ॥ त्र्यशीतितमोऽध्यायः ॥

चित्राङ्गदया रणाङ्गणनिपतितपतिपुत्रदर्शनाज्जातेन शोकातिरेकेण मोहाधिगमः ॥ १ ॥ तथा संज्ञोपलम्भे उलूपीं प्रत्युपालम्भगर्भवचनम् ॥२॥

वैशम्पायनः—

ततो बहुविधं भीरुर् विलप्य कमलेक्षणा ।
मुमोह दुःखाद् दुर्धर्षा निपपात च भूतले ॥ १

प्रतिलभ्य च सा संज्ञां देवी दिव्यवपुर्धरा ।
उलूपीं पन्नगसुतां दृष्ट्वेदं वाक्यमब्रवीत् ॥ २

चित्राङ्गदा—

उलूपि पश्य भर्तारं शयानं निहतं रणे ।
त्वत्कृते मम पुत्रेण बाणेन समितिञ्जयम् ॥ ३

ननु त्वमार्या धर्मज्ञा ननु चासि पतिव्रता ।
[1]यत् त्वत्कृतेऽयं पतितः पतिस्ते निहतो रणे ॥ ४

किं नु मन्दोऽपराद्धोऽयं यदि तेऽद्य धनञ्जयः ।
[2]उलूपि याच्यमाना मे सञ्जीवय धनञ्जयम् ॥ ५

ननु त्वमार्या धर्मज्ञा त्रैलोक्यविदितं शुभे ।
यद् घातयित्वा भर्तारं पुत्रेण न हि शोचसि ॥ ६

नाहं शोचामि तनयं निहतं पन्नगात्मजे ।
पतिमेव तु शोचामि यस्यातिथ्यमिदं कृतम् ॥ ७

वैशम्पायनः—

इत्युक्त्वा सा तदा देवीम् उलूपीं पन्नगात्मजाम् ।
भर्तारमभिगम्येदम् इत्युवाच यशस्विनी ॥ ८

चित्राङ्गदा—

उत्तिष्ठ कुरुमुख्य त्वं प्रियकाम मम प्रिय ।

---

1. ख—इतः श्लोकद्वयं नास्ति 2. ख—इदमर्धं नास्ति

अयमश्वो महाबाहो मया ते परिमोक्षितः ॥　　९

ननु नाम त्वया वीर धर्मराजस्य याज्ञियः ।
अयमश्वोऽनुसर्तव्यस् संशेषे किं महीतले ॥　　१०

त्वयि प्राणास्समायत्ताः कुरूणां कुरुवर्धन ।
स कस्मात् प्राणदोऽन्येषां प्राणान् सन्त्यक्तवानसि ॥　　११

उलूपि साधु सम्पश्य भर्तारं निहतं रणे ।
पुत्रं चैनं समुत्साह्य पातयित्वा न शोचसि ॥　　१२

कामं स्वपितु बालोऽयं भूमौ प्रेतगतिं गतः ।
लोहिताक्षो गुडाकेशो विजयस्साधु जीवतु ॥　　१३

नापराधोऽस्ति सुभगे नराणां बहुभार्यता ।
नारीणां न भवत्येतन्मा ते भूद् बुद्धिरीदृशी ॥　　१४

सख्यं चैतत् कृतं धात्रा शाश्वतं चाव्ययं च तत् ।
सख्यं समभिजानीहि सत्यं सङ्गतमस्तु ते ॥　　१५

पुत्रेण पातयित्वेमं पतिं यदि न लज्जसे ।
जीवितं दर्शयस्वाद्य परित्यक्ष्यामि जीवितम् ॥　　१६

साऽहं दुःखान्विता भीरुः पतिपुत्रविनाकृता ।
इहैव प्रायमासिष्ये पश्यन्त्यास्ते न संशयः ॥　　१७

वैशम्पायनः—

इत्युक्त्वा पन्नगसुतां सपत्नी चैत्रवाहनी ।
ततः प्रायमुपासीना तूष्णीमासीज्जनाधिप ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥
॥ ९२ ॥ अनुगीतापर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
[ अस्मिन्नध्याये १८ श्लोकाः ]

---

## ॥ चतुरशीतितमोऽध्यायः ॥

चिराल्लब्धसंज्ञेन बभ्रुवाहनेनात्मानमुलूपीं चोपालभ्य प्रायोपवेशनम् ॥ १ ॥

---

वैशम्पायनः—

तथा विलप्योपरता भर्तुः पादौ प्रगृह्य सा ।
उपविष्टाऽभवद्देवी सोच्छ्वासं पुत्रमीक्षती ॥ १

ततस्संज्ञां पुनर्लब्ध्वा स राजा बभ्रुवाहनः ।
मातरं तामथालोक्य रणभूमावथाब्रवीत् ॥ २

बभ्रुवाहनः—

इतो दुःखतरं किं नु यन्मे माता सुखैधिता ।
भूमौ निपतितं वीरम् अनुशेते पतिव्रता ॥ ३

निहन्तारं रणेऽरीणां सर्वशस्त्रभृतां वरम् ।

मया विनिहतं सङ्ख्ये प्रेक्षते दुर्मरं पतिम् ॥ ४
अहोऽस्या हृदयं देव्या दृढं यन्न विदीर्यते ।
व्यूढोरस्कं महाबाहुं प्रेक्षन्त्याः पतितं पतिम् ॥ ५
दुर्मरं पुरुषेणेह मन्ये काले ह्यनागते ।
यत्र नाहं न मे माता विप्रयुक्तौ स्वजीवितात् ॥ ६
अहो धिक् कुरुवीरस्य किरीटं काञ्चनं भुवि ।
अपविद्धं हतस्येह मया पुत्रेण पश्यता ॥ ७
भो भो पश्यत मे वीरं पितरं ब्राह्मणा भुवि ।
शयानं वीरशयने मया पुत्रेण पातितम् ॥ ८
ब्राह्मणाः कुरुमुख्यस्य प्रयुक्ता हयसारिणः ।
कुर्वन्तु शान्तिकं त्वद्य रणे योऽयं मया हतः ॥ ९
आदिशन्तु च किं विप्राः प्रायश्चित्तमिहाद्य मे ।
सुनृशंसस्य पापस्य पितृहन्तू रणाजिरे ॥ १०
दुश्चरा द्वादश समा हत्वा पितरमद्य वै ।
ममेह सुनृशंसस्य संवीतस्यास्य कर्मणा ॥ ११
शिरःकपाले चास्यैव भुञ्जतः पितुरद्य मे ।
प्रायश्चित्तं हि नास्त्यन्यद्धत्वाऽद्य पितरं मम ॥ १२
पश्य नागोत्तमसुते भर्तारं निहतं मया ।
कृतं प्रियं मया तेऽद्य निहत्य समरेऽर्जुनम् ॥ १३

सोऽहमप्यद्य यास्यामि गतिं पितृनिषेविताम् ।
न शक्नोम्यात्मनाऽऽत्मानम् अहं धारयितुं शुभे ॥ १४

सा त्वं मयि मृते मातस् तथा गाण्डीवधन्वनि ।
भव प्रीतिमती देवि सत्येनात्मानमालभे ॥ १५

वैशम्पायनः—

इत्युक्त्वा स ततो राजा दुःखशोकसमाहतः ।
उपस्पृश्य महाराज दुःखाद्वचनमब्रवीत् ॥ १६

बभ्रुवाहनः—

शृण्वन्तु सर्वभूतानि स्थावराणि चराणि च ।
त्वं च मातर्यथा सत्यं ब्रवीमि भुजगोत्तमे ॥ १७

यदि नोत्तिष्ठति जयः पिता मे भरतर्षभः ।
अस्मिन्नेव रणोद्देशे शाययिष्ये कलेबरम् ॥ १८

न हि मे पितरं हत्वा निष्कृतिर्विद्यते क्वचित् ।
नरकं प्रतिपत्स्यामि ध्रुवं गुरुवधार्दितः ॥ १९

वीरं हि क्षत्रियं हत्वा गोसहस्रेण मुच्यते ।
पितरं तु निहत्यैवं दुष्करा निष्कृतिर्मम ॥ २०

एवं ह्येष महातेजाः पाण्डुपुत्रो धनञ्जयः ।
पिता च मम धर्मात्मा तस्य मे निष्कृतिः कुतः ॥ २१

वैशम्पायनः—

इत्येवमुक्त्वा नृपते धनञ्जयसुतो नृपः ।
उपस्पृश्याभवत् तूष्णीं प्रायोपेतो महामतिः ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥
॥ ९२ ॥ अनुगीतापर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
[ अस्मिन्नध्याये २२ श्लोकाः ]

## ॥ पञ्चाशीतितमोऽध्यायः ॥

बभ्रुवाहने प्रायोपविष्टे उलूप्या स्मरणमात्रसन्निहितसञ्जीवनमणिनाऽर्जुनस्य समुद्बोधनम् ॥ १ ॥ ततस्सुप्तोत्थितेनेव तेनार्जुनेन बभ्रुवाहनं प्रति चित्राङ्गदादीनां रणाङ्गणागमने कारणप्रश्ने तेनोलूपीं प्रति प्रश्नचोदना ॥ २ ॥

वैशम्पायनः—

प्रायोपविष्टे नृपतौ मणलूरेश्वरे तदा ।
पितृशोकसमाविष्टे सह मात्रा परन्तप ॥ १
उलूपी चिन्तयामास तदा सञ्जीवनं मणिम् ॥ १॥
स चोपातिष्ठत तदा पन्नगानां परायणम् ॥ २
तं गृहीत्वा तु कौरव्य पन्नगाधिपतेस्सुता ।
मनःप्रह्लादनीं वाचं सैनिकानामथाब्रवीत् ॥ ३

उलूपी—

उत्तिष्ठ मा शुचः पुत्र नैष जिष्णुस्त्वया हतः ।
अजय्यः पुरुषैरन्यैर् देवैरपि सवासवैः ॥ ४

मया तु मोहनी नाम मायैषा सम्प्रयोजिता ।
प्रियार्थं पुरुषव्याघ्र पितुस्तेऽद्य यशस्विनः ॥ ५

जिज्ञासुर्ह्येष वै पुत्र बलस्य तव कौरवः ।
सङ्ग्रामे युद्ध्यमानस्य सम्प्राप्तः परवीरहा ॥ ६

तस्मादसि मया पुत्र युद्धार्थं परिचोदितः ।
मा पापमात्मनः [1]पुत्र शङ्केथा ह्यण्वपि प्रभो ॥ ७

ऋषिरेष महातेजाः पुरुषश्शाश्वतोऽव्ययः ।
नैनं शक्तो हि सङ्ग्रामे जेतुं शक्रोऽपि पार्थिव ॥ ८

अयं तु मे मणिर्दिव्यस् समानीतो विशाम्पते ।
मृतान् मृतान् पन्नगेन्द्रान् सञ्जीवयति सर्वदा ॥ ९

एनमस्योरसि त्वं च स्थापयाद्य पितुः प्रभो ।
सञ्जीवितं पुनः पुत्र ततो द्रष्टासि पाण्डवम् ॥ १०

वैशम्पायनः—

इत्युक्तस्स्थापयामास तस्योरसि मणिं तदा ।
पार्थस्यामिततेजास्स पितुस्स्नेहादपापकृत् ॥ ११

तस्मिन् न्यस्ते मणौ वीर जिष्णुरुज्जीवितः प्रभुः ।

---

1. क-ख-ब—पुत्र शंसेथास्त्वं रणात् प्रभो ।

सुप्तोत्थित इवोत्तस्थौ स्पष्टलोहितलोचनः ॥ १२

तमुत्थितं महात्मानं लब्धसंज्ञं मनस्विनम् ।
समीक्ष्य पितरं स्वस्थं ववन्दे बभ्रुवाहनः ॥ १३

उत्थिते पुरुषव्याघ्रे [1]पुनर्लक्ष्मीवति प्रिये ।
दिव्यास्सुमनसः पुण्या ववर्ष बलसूदनः ॥ १४

अनाहता दुन्दुभयो प्रणेदुर्मेघनिस्स्वनाः ।
साधु साध्विति चाकाशे बभूव सुमहान् स्वनः ॥ १५

उत्थाय तु महाबाहुः पर्याश्वस्तो धनञ्जयः ।
बभ्रुवाहनमालिङ्ग्य समाजिघ्रत मूर्धनि ॥ १६

ददर्श चाविदूरेऽस्य मातरं शोककर्शिताम् ।
उलूप्या सह तिष्ठन्तीं ततोऽपृच्छद्धनञ्जयः ॥ १७

अर्जुनः—

किमिदं लक्ष्यते सर्वं शोकविस्मयहर्षवत् ।
रणाजिरममित्रघ्न यदि जानासि शंस मे ॥ १८

जननी च किमर्थं ते रणभूमिमुपागता ।
नागेन्द्रदुहिता चेयम् उलूपी किमिहागता ॥ १९

जानाम्यहमिदं युद्धं त्वया मद्वचनात् कृतम् ।
स्त्रीणामत्रागमे हेतुम् अहमिच्छामि वेदितुम् ॥ २०

1. क-ख—पुनर्दैवपतिः प्रभो । घ—पुनर्दैवप्रति प्रभुः । (?)

वैशम्पायनः—

तमुवाच ततः पृष्टो मणलूरपतिस्तदा ।
प्रसाद्य शिरसा विद्वान् उलूपी पृच्छ्यतामिति ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आश्वमेधिकपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

॥ ९२ ॥ अनुगीतापर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

[ अस्मिन्नध्याये २१ श्लोकाः ]

## ॥ षडशीतितमोऽध्यायः ॥

उलूप्याऽर्जुनं प्रति चित्राङ्गदादीनां समराङ्गणागमने कारणाभिधानम् ॥ १ ॥ तथा बभ्रुवाहनेन तस्य पराजये विस्तरेण हेतुकथनम् ॥ २॥

अर्जुनः—

किमागमनकृत्यं ते कौरव्यकुलनन्दिनि ।
मणलूरपतेर्मातुस् तथैव च रणाजिरे ॥ १

कच्चित् कुशलकामाऽसि राज्ञोऽस्य भुजगात्मजे ।
मम वा चञ्चलापाङ्गे कच्चित् त्वं सुखमिच्छसि ॥ २

कच्चित् ते पृथुलश्रोणि नाप्रियं शुभदर्शने ।
अकार्षमहमज्ञानाद् अयं वा बभ्रुवाहनः ॥ ३

[1]कच्चिच्च राजपुत्री ते सपत्नी चैत्रवाहनी ।

1. क-ख-घ—इतः श्लोकद्वयं नास्ति

चित्राङ्गदा वरारोहा नापराध्यति किञ्चन ॥ ४

वैशम्पायनः—

तमुवाचोरगपतेर् दुहिता प्रहसन्त्यथ ॥ ४॥

उलूपी—

न मे त्वमपराद्धोऽसि न नृपो बभ्रुवाहनः ।
न जनित्री तथाऽस्येयं मम या प्रेष्यवत् स्थिता ॥ ५॥

श्रूयतां यद्यथा चेदं मया सर्वं विचेष्टितम् ।
न मे कोपस्त्वया कार्यश् शिरसा त्वां प्रसादये ॥ ६॥

त्वत्प्रीत्यर्थं हि कौरव्य कृतमेतन्मयाऽनघ ।
यत् तच्छृणु महाबाहो निखिलेन धनञ्जय ॥ ७॥

महाभारतयुद्धे यत् त्वया शान्तनवो नृपः ।
अधर्मेण हतः पार्थ तस्यैषा निष्कृतिः कृता ॥ ८॥

न हि भीष्मस्त्वया वीर युद्ध्यमानो निपातितः ।
शिखण्डिना तु संसक्तस् तमाश्रित्य हतस्त्वया ॥ ९॥

तस्य शान्तिमकृत्वा तु त्यजेस्त्वं यदि जीवितम् ।
कर्मणा तेन पापेन पतेथा निरये ध्रुवम् ॥ १०॥

एषाऽत्र विहिता शान्तिः पुत्रात् त्वं प्राप्तवानसि ॥ ११

वसुभिर्वसुधापाल गङ्गया च महामते ।
पुरा हि श्रुतमेतद्वै वसुभिः कथितं मम ॥ १२

गङ्गायास्तीरमागम्य हते शान्तनवे नृप ।
आप्लुत्य देवा वसवस् समाप्लुत्य महानदीम् ॥ १२
इदमूचुर्वचो घोरं भागीरथ्या मते तदा ॥ १३॥
"एष शान्तनवो भीष्मो निहतस्सव्यसाचिना ।
अयुद्ध्यमानस्सङ्ग्रामे संसक्तोऽन्येन भामिनि ॥ १४॥
तदनेनाभिषङ्गेण वयमप्यर्जुनं शुभे ।
शापेन योजयामे"ति तथाऽस्त्विति च साऽब्रवीत् ॥ १५॥
तदहं पितुरावेद्य भृशं प्रव्यथितेन्द्रिया ।
अभवं स च तच्छ्रुत्वा विषादमगमत् परम् ॥ १६॥
पिता तु मे वसून् गत्वा त्वदर्थं समयाचत ।
पुनः पुनः प्रसाद्यैनांस् त एनमिदमब्रुवन् ॥ १७॥
"पुत्रोऽस्य तु महाराजो मणलूरेश्वरो युवा ।
स एनं रणमध्यस्थं शरैः पातयिता भुवि ॥ १८॥
एवं कृते स नागेन्द्र मुक्तशापो भविष्यति ।
गच्छे"ति वसुभिश्चोक्तो मम चेदं शशंस सः ॥ १९॥
तच्छ्रुत्वा त्वं मया तस्माच् छापादसि विमोक्षितः ।
[1]न हि त्वां देवराजोऽपि समरेषु पराजयेत् ॥ २०॥
आत्मा पुत्रस्स्मृतस्तस्मात् तेनेहासि पराजितः ।

---

1. क-ख-घ—इतः सार्धं श्लोकद्वयं नास्ति

नात्र दोषो मम मतः कथं वा मन्यसे विभो ॥　　२१॥

वैशम्पायनः—

इत्येवमुक्तो विजयः प्रसन्नात्माऽब्रवीदिदम् ॥　　२२

अर्जुनः—

सर्वं मे सुप्रियं देवि यदेतत् कृतवत्यसि ॥　　२२॥

वैशम्पायनः—

इत्युक्त्वा सोऽब्रवीत् पुत्रं मणलूरेश्वरं जयः ।
चित्राङ्गदायाश्शृण्वन्त्याः कौरव्यदुहितुस्तथा ॥　　२३॥

अर्जुनः—

युधिष्ठिरस्याश्वमेधः परां चैत्रीं भविष्यति ।
तत्रागच्छेस्सहामात्यो मातृभ्यां सहितो नृप ॥　　२४॥

वैशम्पायनः—

इत्येवमुक्तः पार्थेन स राजा बभ्रुवाहनः ।
उवाच पितरं धीमान् इदमस्राविलेक्षणः ॥　　२५॥

बभ्रुवाहनः—

उपयास्यामि धर्मज्ञ भवतश्शासनादहम् ।
अश्वमेधमहायज्ञे द्विजातिपरिवेषकः ॥　　२६॥

मम त्वनुग्रहार्थं हि प्रविशस्व पुरं स्वकम् ।
भार्याभ्यां सह शत्रुघ्न मा भूत् तेऽत्र विचारणा ॥　　२७॥

उषित्वा च विशल्यस्त्वं सुखं वेश्मनि च प्रभो ।
पुनरश्वानुगमनं कर्तासि जयतां वर ॥ २८॥

वैशम्पायनः—

इत्युक्तस्स तु पुत्रेण तदा वानरकेतनः ।
हसन् प्रोवाच कौन्तेयस् तदा चित्राङ्गदासुतम् ॥ २९॥

अर्जुनः—

विदितं ते महाबाहो यथा दीक्षां चराम्यहम् ।
न हि तावत् प्रवेक्ष्यामि पुरं ते पृथुलोचन ॥ ३०॥

यथाकामं प्रयात्वेष याज्ञियश्च तुरङ्गमः ।
स्वस्ति तेऽस्तु गमिष्यामि न स्थानं विद्यते मम ॥ ३१॥

वैशम्पायनः—

स तत्र विधिवत् तेन पूजितः पाकशासनिः ।
भार्याभ्यामभ्यनुज्ञातः प्रायाद्भरतसत्तमः ॥ ३२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

॥ ९२ ॥ अनुगीतापर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

[ अस्मिन्नध्याये ३२॥ श्लोकाः ]

---

## ॥ सप्ताशीतितमोऽध्यायः ॥

अर्जुनेनाश्वानुसरणवशान्मगधदेशगमनम् ॥ १ ॥ तत्र जरासन्धपौत्रस्य मेघसन्धेः पराजयपूर्वकं तत्र तत्र म्लेच्छादिपराजयः ॥ २ ॥

**वैशम्पायनः—**

स तु वाजी समुद्रान्ताम् अभ्येत्य पृथिवीमिमाम् ।
निवृत्तोऽभिमुखो राजन् येन नागाह्वयं पुरम् ॥ १

अनुगच्छन् स तेजस्वी निवृत्तोऽथ किरीटधृक् ।
यदृच्छया समापेदे पुरं राजगृहं तदा ॥ २

तमभ्याशगतं राजा जरासन्धात्मजात्मजः ।
क्षत्रधर्मे स्थितो वीरस् समरायाजुहाव ह ॥ ३

ततः पुरात् स निष्क्रम्य रथी धन्वी तली शरी ।
मेघसन्धिः पदातिं तं धनञ्जयमुपाद्रवत् ॥ ४

आसाद्य तु महातेजा मेघसन्धिर्धनञ्जयम् ।
बालभावान्महाराज प्रोवाचेदं न कौशलात् ॥ ५

**मेघसन्धिः—**

किमयं चार्यते वाजी स्त्रीमध्य इव कौरव ।
हयमेनं हरिष्यामि प्रयतस्व विमोक्षणे ॥ ६

[1]आर्तो ननु पुरा युद्धे यदि त्वं भ्रातृभिस्सह ।

---

1. अ—अदत्तानुनयो युद्धे यदि त्वं पितृभिर्मम । [ पाठभेदः ]

करिष्यामि तवातिथ्यं प्रहर प्रहरामि च ॥ ७

वैशम्पायनः—

इत्युक्तः प्रत्युवाचेदं पाण्डवः प्रहसन्निव ॥ ७॥

अर्जुनः—

विघ्नकर्ता मया वार्य इति मे व्रतमाहितम् ।

भ्रात्रा ज्येष्ठेन नृपते तवापि विदितं ध्रुवम् ॥ ८॥

प्रहरस्व यथाशक्ति न मन्युर्विद्यते मम ॥ ९

वैशम्पायनः—

इत्युक्तः प्राहरत् पूर्वं पाण्डवं मगधेश्वरः ।

[1]किरञ्छरसहस्राणि वर्षाणीव सहस्रदृक् ॥ १०

ततो गाण्डीवभृच्छूरो गाण्डीवप्रेरितैश्शरैः ।

चकार बाणांस्तान् मोघान् अयत्नाद् भरतर्षभ ॥ ११

स मोघं तस्य बाणौघं कृत्वा वानरकेतनः ।

शरान् मुमोच ज्वलितान् दीप्तास्यानिव पन्नगान् ॥ १२

रथे पताकादण्डे च रथयन्त्रहयेषु च ।

अन्येषु च हयाङ्गेषु न शरीरे न सारथौ ॥ १३

[2]संरक्ष्यमाणः पार्थेन शरीरे फल्गुनेन ह ।

मन्यमानस्स्ववीर्यं तं मागधः प्राहिणोच्छरान् ॥ १४

---

1. क-ख—इदमर्धं नास्ति

2. क-ख—स रक्ष्यमाणः । ब—समीक्ष्यमाणः

ततो गाण्डीवभृच्छूरो मागधेन भृशार्दितः ।
बभौ [1]वासन्तिक इव पलाशः पुष्पितो महान् ॥ १५

अवध्यमानस्सोऽभ्यघ्नन्मागधः पाण्डवर्षभम् ।
तेन तस्थौ स कौरव्य लोकवीरस्य दर्शने ॥ १६

सव्यसाची तु सङ्क्रुद्धो विकृष्य बलवद्धनुः ।
हयांश्चकार निर्देहान् सारथेश्च शिरोऽहरत् ॥ १७

[2]धनुश्चास्य महच्चित्रं क्षुरेण विचकर्त ह ।
हस्तावापं पताकां च ध्वजं चास्य न्यवातयत् ॥ १८

स राजा व्यथितो व्यश्वो विधनुष्को विसारथिः ।
गदामादाय कौन्तेयम् अभिदुद्राव वेगवान् ॥ १९

तस्यापतत एवाशु गदां हेमपरिष्कृताम् ।
शरैश्चकर्त निशितैर् बहुभिर्गृध्रवाजितैः ॥ २०

सा गदा शकलीभूता विकीर्णमणिबन्धना ।
व्याली निर्मुच्यमानेव [3]पपात धरणीं प्रति ॥ २१

विरथं तं विधनुषं गदया परिवर्जितम् ।
नैच्छत् ताडयितुं धीमान् अर्जुनस्समराग्रणीः ॥ २२

तत एनं विमनसं क्षत्रधर्मे समास्थितम् ।
सान्त्वपूर्वमिदं वाक्यम् अब्रवीत् कपिकेतनः ॥ २३

---

1. क-ख—वसन्त इव स । 2. अ—अर्धद्वयं नास्ति
3. क-ख—पपातास्य सहस्रधा ।

अर्जुनः—

पर्याप्तः क्षत्रधर्मोऽयं दर्शितः पुत्र गम्यताम् ।
बह्वेतत् समरे कर्म तव बालस्य पार्थिव ॥ २४

युधिष्ठिरस्य सन्देशो न हन्तव्या नृपा इति ।
तेन जीवसि राजंस्त्वम् अपराद्धोऽपि मे रणे ॥ २५

वैशम्पायनः—

इति मत्वा स चात्मानं प्रत्यादिष्टस्स मागधः ।
तथ्यमित्यभिगम्यैनं प्राञ्जलिः प्रत्यपूजयत् ॥ २६

तमर्जुनस्समाश्वास्य पुनरेवेदमब्रवीत् ॥ २६॥

अर्जुनः—

आगन्तव्यं परां चैत्रीम् अश्वमेधे नृपस्य नः ॥ २७

वैशम्पायनः—

इत्युक्तस्स तथेत्युक्त्वा पूजयामास तं हयम् ।
फल्गुनं च युधि श्रेष्ठं विधिवत् सहदेवजः ॥ २८

ततो यथेष्टमगमत् पुनरेव स कौरवः ।
ततस्समुद्रतीरेण वङ्गान् पुण्ड्रान् सकेरलान् ॥ २९

तत्र तत्र च भूरीणि म्लेच्छसैन्यान्यनेकशः ।
विजिग्ये धनुषा राजन् गाण्डीवेन धनञ्जयः ॥ ३०

इति श्रीमहाभार[illegible] शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधि[illegible] पर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥
॥ ९२ ॥ अनु[illegible]तापर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥
[illegible]अस्मिन्नध्याये ३० श्लोकाः ]

## ॥ अष्टाशीतितमोऽध्यायः ॥

दक्षिणां दिशमुपागतेनार्जुनेन चेदीशितुः शिशुपालात्मजस्य पूजा-परिग्रहणम् ॥ १ ॥ तथा काशिकोसलादिदेशाधिपतिपराजयपूर्वकं गान्धारदेशगमनम् ॥ २ ॥

---

वैशम्पायनः—

मागधेनार्चितो राजन् पाण्डवश्श्वेतवाहनः ।
दक्षिणां दिशमास्थाय चारयामास तं हयम् ॥ १

ततस्स पुनरावृत्य हयः कामचरो बली ।
आससाद पुरीं रम्यां चेदीनां शुक्तिसाह्वयाम् ॥ २

शरभेणार्चितस्तत्र शिशुपालात्मजेन सः ।
युद्धपूर्वेण मानेन पूजया च महाबलः ॥ ३

ततोऽर्चितो ययौ राजंश्तदा स तुरगोत्तमः ।
[1]काशीन् मद्रान् कोसलांश्च किरातानथ तङ्कणान् ॥ ४

तत्र पूजां यथान्यायं प्रतिगृह्य स पाण्डवः ।
पुनरागत्य कौन्तेयो दशार्णानचरत् तदा ॥ ५

तत्र चित्राङ्गदो नाम बलवान् वसुधाधिपः ।
तेन युद्धमभूत् तस्य विजयस्यातिभैरवम् ॥ ६

तं चापि वशमानीय किरीटी पुरुषर्षभः ।

---

1. क-ख—काशीनान्ध्रान् ।

निषादराज्ञो विषयम् एकलव्यस्य जग्मिवान् ॥ ८

एकलव्यसुतश्चैनं युद्धेन जगृहे तदा ।
तत्र चक्रे निषादैश्च सङ्ग्रामं रोमहर्षणम् ॥ ८

ततस्तमपि कौन्तेयस् समरेष्वपराजितः ।
जिगाय समरे वीरो यज्ञविघ्नार्थमुद्यतम् ॥ ९

स तं जित्वा महाराज नैषादिं पाकशासनिः ।
अर्चितः प्रययौ भूयो दक्षिणं सलिलार्णवम् ॥ १०

तत्रापि द्रमिलैरान्ध्रै रौद्रैर्माहिषकैरपि ।
[1]तथा गोल्लगिरेयैश्च युद्धमासीत् किरीटिनः ॥ ११

गोकर्णमथ चासाद्य प्रभासमपि जग्मिवान् ॥ ११॥

ततो द्वारवतीं रम्यां वृष्णिवीराभिरक्षिताम् ।
आससाद हयश्श्रीमान् कुरुराजस्य याज्ञियः ॥ १२॥

तमुन्मथ्य हयश्रेष्ठं यादवानां कुमारकाः ।
प्रययुस्तांस्तदा राजन्नुग्रसेनो न्यवारयत् ॥ १३॥

ततः पुराद्विनिष्क्रम्य वृष्ण्यन्धकपतिस्तदा ।
सहितो वासुदेवेन मातुलेन किरीटिना ॥ १४॥

तौ समेत्य नरश्रेष्ठं विधिवत् प्रीतिपूर्वकम् ।
परया भरतश्रेष्ठ पूजया समवस्थितौ ॥ १५॥

1. अ—अर्धचतुष्टयं नास्ति

ततस्ताभ्यामनुज्ञातो ययौ येन हयो गतः ॥ १६

ततः पश्चिमदेशेन समुद्रान्तं तदा हयः ।
क्रमेण व्यचरत् स्फीतं ततः पञ्चनदं ययौ ॥ १७

तस्मादपि स कौरव्य गान्धारविषयं हयः ।
विचचार यथाकामं कौन्तेयानुगतस्तथा ॥ १८

तत्र गान्धारराजेन युद्धमासीन्महात्मनः ।
घोरं शकुनिपुत्रेण पूर्ववैरानुकारिणा ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥
॥ ९२ ॥ अनुगीतापर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥
[ अस्मिन्नध्याये १९ श्लोकाः ]

---

## ॥ एकोननवतितमोऽध्यायः ॥

अर्जुनेन शकुनितनयपराजयपूर्वकं तत्सेनावमर्दनम् ॥ १ ॥ ततः शकुनिभार्यया तेन स्वसुतवधसम्भावनया रणाङ्गणमेत्यार्जुनस्य प्रसादनम् ॥ २ ॥ अर्जुनेन गान्धारीगौरवात् तत्सम्माननपूर्वकं तत्तनयसमाश्वासनम् ॥ ३ ॥

---

वैशम्पायनः—

शकुनेस्तनयो वीरो गान्धाराणां महारथः ।
प्रत्युद्ययौ गुडाकेशं सैन्येन महता वृतः ॥ १

हस्त्यश्वरथपूर्णेन पताकाध्वजमालिना ॥ १॥
अमृष्यमाणास्ते योधा नृपतेश्शकुनेर्वधम् ।
अभ्ययुस्सहिताः पार्थं प्रगृहीतशरासनाः ॥ २॥
तानुवाच स धर्मात्मा बीभत्सुरपराजितः ।
युधिष्ठिरस्य वचनं न च ते जगृहुस्तदा ॥ ३॥
वार्यमाणास्तु पार्थेन सान्त्वपूर्वममर्षिताः ।
परिवार्य हयं जहुस् ततश्चुक्रोध पाण्डवः ॥ ४॥
ततश्शिरांसि दीप्ताग्रैस् तेषां चिच्छेद पाण्डवः ।
शरैर्गाण्डीवनिर्मुक्तैर् नातियत्नादिवार्जुनः ॥ ५॥
ते वध्यमानाः पार्थेन हयमुत्सृज्य सम्भ्रमात् ।
न्यवर्तन्त महाराज शरवर्षार्दिता भृशम् ॥ ६॥
विरुध्यमानस्तैश्चापि गान्धारैः पाण्डवर्षभः ।
आदिश्यादिश्य तेजस्वी परानेव न्यपातयत् ॥ ७॥
वध्यमानेषु तेष्वाजौ गान्धारेषु समन्ततः ।
स राजा शकुनेः पुत्रः पाण्डवं प्रत्यवारयत् ॥ ८॥
तं युध्यमानं राजानं क्षत्रधर्मे व्यवस्थितम् ।
पार्थोऽब्रवीन्न मे वध्या राजानो राजशासनात् ॥ ९॥
अलं युद्धेन ते वीर न तेऽद्यास्ति पराजयः ॥ १०
इत्युक्तस्तदनादृत्य वाक्यमज्ञानमोहितः ।

स शक्रसमकर्माणं अवाकिरत सायकैः ॥ ११

तस्य पार्थश्शिरस्त्राणम् अर्धचन्द्रेण पत्रिणा ।
अपाहरदमेयात्मा जयद्रथशिरो यथा ॥ १२

तं दृष्ट्वा विस्मयं जग्मुर् गान्धारास्सर्व एव ते ।
इच्छता तेन न हतो राजेत्यपि च ते विदुः ॥ १३

गान्धारराजपुत्रस्तु पलायनकृतक्षणः ।
बभौ तैरेव सहितस् त्रस्तैः क्षुद्रमृगैरिव ॥ १४

तेषां तु तरसा पार्थस् तत्रैव परिधावताम् ।
विजहारोत्तमाङ्गानि भल्लैस्सन्नतपर्वभिः ॥ १५

उच्छ्रितांश्च भुजान् केचिन्नाबुध्यन्त शरैर्हृतान् ।
शितैर्गाण्डीवनिर्मुक्तैः पृथुभिः पार्थचोदितैः ॥ १६

सम्भ्रान्त[1]नरनागाश्वम् अथ तद्विद्रुतं बलम् ।
हतविध्वस्तभूयिष्ठम् अवर्तत मुहुर्मुहुः ॥ १७

न ह्यदृश्यन्त वीरस्य केचिदग्रेऽग्र्यकर्मणः ।
रिपवः पात्यमाना वै ये सहेरन् महाशरान् ॥ १८

ततो गान्धारराजस्य मन्त्रिवृद्धपुरस्सरा ।
जननी निर्ययौ भीता पुरस्कृत्यार्घ्यमुत्तमम् ॥ १९

सा न्यवारयदव्यग्रा तं पुत्रं युद्धदुर्मदम् ।

---

1. क—रथनागं च मथितं विद्रुतं ।

प्रसादयामास च तं जिष्णुमक्लिष्टकर्मिणम् ॥ २०

तां पूजयित्वा कौन्तेयः प्रसादमकरोत् तदा ।
शकुनेश्चापि तनयं सान्त्वयन्निदमब्रवीत् ॥ २१

अर्जुनः—

न मे प्रियं महाबाहो यत् ते बुद्धिरियं कृता ।
प्रतियोद्धुमभित्रघ्न भ्रातैव त्वं ममानघ ॥ २२

गान्धारीं मातरं स्मृत्वा धृतराष्ट्रकृतेन च ।
तेन जीवसि राजंस्त्वं निहतास्त्वनुगास्तव ॥ २३

मैवं भूश्शाम्यतां वैरं मा ते भूद् बुद्धिरीदृशी ।
आगन्तव्यं परां चैत्रीम् अश्वमेधे नृपस्य नः ॥ २४

वैशम्पायनः—

इत्युक्त्वाऽनुययौ पार्थो हयं तं कामचारिणम् ।
[1]ते न्यवर्तन्त गान्धारा हतशिष्टास्स्वकं पुरम् ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥

॥ ९२ ॥ अनुगीतापर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

[ अस्मिन्नध्याये २५ श्लोकाः ]

---

1. क-ख-घ—नास्तीदमर्धम्

## ॥ नवतितमोऽध्यायः ॥

चारमुखादर्जुनस्य तुरगसञ्चारणेन पुनर्नगरं प्रत्यागमनश्रवण-हृष्टस्य युधिष्ठिरस्य निदेशाद्भीमेन यज्ञशालादिनिर्मापणम् ॥ १ ॥ तथा नानादेशेभ्यो ब्राह्मणाद्यानयनं तेषां यथार्हं पूजनं च ॥ २ ॥

वैशम्पायनः—

न्यवर्तत ततो वाजी यत्र नागाह्वयं पुरम् ।

तं निवृत्तं तु शुश्राव चारेणैव युधिष्ठिरः ॥ १

श्रुत्वाऽर्जुनं कुशलिनं स च हृष्टमना ह्यभूत् ॥ १॥

विजयस्य च तत् कर्म गान्धारविषये तदा ।

श्रुत्वा चान्येषु देशेषु स सुप्रीतोऽभवन्नृपः ॥ २॥

एतस्मिन्नेव काले तु द्वादशीं माघ[1]मासिकीम् ।

इष्टं गृहीत्वा नक्षत्रं धर्मराजो युधिष्ठिरः ॥ ३॥

समानाय्य महातेजास् सर्वान् भ्रातॄन् महामनाः ।

भीमं च नकुलं चैव सहदेवं च कौरव ॥ ४॥

प्रोवाचेदं वचः काले तदा धर्मभृतां वरः ॥ ५

आमन्त्र्य वदतां श्रेष्ठो भीमं भीमपराक्रमम् ॥ ५॥

युधिष्ठिरः—

आयाति भीमसेनासौ सहाश्वेन तवानुजः ।

1. क-ख—पक्षिकाम् ।

यथा मे पुरुषाः प्राहुर् ये धनञ्जयसारिणः ॥ ६॥

उपस्थितश्च कालोऽयम् अभितो वर्तते हयः ।
माघी च पौर्णमासीयं [1]मासश्शेषो वृकोदर ॥ ७॥

प्रस्थाप्यन्तां हि विद्वांसो ब्राह्मणा वेदपारगाः ।
वाजिमेधार्थसिद्ध्यर्थं देशं पश्यन्तु याज्ञियम् ॥ ८॥

वैशम्पायनः—

इत्युक्तस्स तु तच्चक्रे भीमो नृपतिशासनम् ।
हृष्टश्श्रुत्वा नरवरैर् आयान्तं सव्यसाचिनम् ॥ ९॥

ततो ययौ भीमसेनः प्राज्ञैस्स्थपतिभिस्सह ।
ब्राह्मणानग्रतः कृत्वा कुशलान् यज्ञकर्मसु ॥ १०॥

[2]तं समासाद्य देशं तु सुप्रतोलीविटङ्किनम् ।
मापयामास कौरव्यो यज्ञवाटं यथाविधि ॥ ११॥

[3]प्रासादशतसम्बाधं मणिप्रवरकुट्टिमम् ।
सदस्सपत्नीसदनं साग्नीध्रमपि चोत्तरम् ॥ १२॥

स्तम्भान् कनकचित्रांश्च तोरणानि बृहन्ति च ।
यज्ञायतनदेशेषु सर्वेष्वेव च काञ्चनम् ॥ १३॥

कारयामास विधिवन्मणिहेमविभूषितम् ॥ १४

1. क-ख—मासश्शेषो ।
2. ङ-च—तं देशं सवनग्रामं सुप्रतोलीविटङ्कितम् । [ पाठान्तरम् ]
3. क-ख-च—अर्धद्वयं नास्ति

ब्राह्मणानां तु वेश्मानि नानादेशसमेयुषाम् ।
अन्तःपुराणि राज्ञां च नानादेशनिवासिनाम् ॥ १५

कारयामास [1]धर्मात्मा तत्र तत्र यथाविधि ॥ १५॥

[2]तथा सम्प्रेषयामास दूतान् नृपतिशासनात् ।
भीमसेनो महाराज राज्ञामक्लिष्टकर्मणाम् ॥ १६॥

ते प्रियार्थं कुरुपतेर् आययुर्नृपसत्तमाः ।
रत्नान्यनेकान्यादाय स्त्रियोऽश्वानायुधानि च ॥ १७॥

तेषां निवसतां तेषु शिबिरेषु सहस्रशः ।
नदतस्सागरस्येव शब्दो दिवमिवास्पृशत् ॥ १८॥

प्रत्युद्गम्य नमस्कृत्य ब्राह्मणांश्च न्यवेदयत् ॥ १९

तेषामभ्यागतानां च नानादेशनिवासिनाम् ।
व्यादिदेशान्नपानानि शय्याश्चातीवमानुषाः ॥ २०

वाहनानां च विविधाश् शालाश्शालीक्षुगोरसैः ।
उपेताः पुरुषव्याघ्र व्यादिदेश स धर्मराट् ॥ २१

वर्णाः पृथक्सन्निविष्टा ह्युत्तरोत्तरपूजकाः ।
तथा तस्मिन् महायज्ञे धर्मराजस्य धीमतः ॥ २२

समाजग्मुर्मुनिगणा बहवो ब्रह्मवादिनः ॥ २२॥

---

1. क-ख—भीमश्च विहितानि ह्यनेकशः ।
2. क-ख—इतः सार्धं श्लोकद्वयं नास्ति

अर्जुनः—

पर्याप्तः क्षत्रधर्मोऽयं दर्शितः पुत्र गम्यताम् ।
बह्वेतत् समरे कर्म तव बालस्य पार्थिव ॥ २४

युधिष्ठिरस्य सन्देशो न हन्तव्या नृपा इति ।
तेन जीवसि राजंस्त्वम् अपराद्धोऽपि मे रणे ॥ २५

वैशम्पायनः—

इति मत्वा स चात्मानं प्रत्यादिष्टस्स मागधः ।
तथ्यमित्यभिगम्यैनं प्राञ्जलिः प्रत्यपूजयत् ॥ २६

तमर्जुनस्समाश्वास्य पुनरेवेदमब्रवीत् ॥ २६॥

अर्जुनः—

आगन्तव्यं परां चैत्रीम् अश्वमेधे नृपस्य नः ॥ २७

वैशम्पायनः—

इत्युक्तस्स तथेत्युक्त्वा पूजयामास तं हयम् ।
फल्गुनं च युधि श्रेष्ठं विधिवत् सहदेवजः ॥ २८

ततो यथेष्टमगमत् पुनरेव स कौरवः ।
ततस्समुद्रतीरेण वङ्गान् पुण्ड्रान् सकेरलान् ॥ २९

तत्र तत्र च भूरीणि म्लेच्छसैन्यान्यनेकशः ।
विजिग्ये धनुषा राजन् गाण्डीवेन धनञ्जयः ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥
॥ ९२ ॥ अनुगीतापर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥
[ अस्मिन्नध्याये ३० श्लोकाः ]

---

ददृशुस्तं नृपतयो यज्ञस्य विधिमुत्तमम् ।
देवेन्द्रस्येव विहितं भीमेन कुरुनन्दन ॥ २

ददृशुस्तोरणान्यत्र शातकुम्भमयानि ते ।
शय्यासनविहारांश्च सुबहून् रत्नभूषितान् ॥ ३

घटान् पात्रीः कटाहानि कलशान् वर्धमानकान् ।
न ते किञ्चिदसौवर्णम् अपश्यंस्तत्र पार्थिवाः ॥ ४

यूपांश्च शास्त्रविहितांस् तारवान् हेमभूषितान् ।
उपक्लृप्तान् यथाकालं विधिवद्भूरिवर्चसः ॥ ५

स्थलजा जलजा ये च पशवो ये च सम्भृताः ।
सर्वानेव समानीतांस् तानपश्यन्त भूमिपाः ॥ ६

गाश्चैव महिषीश्चैव तथा वृद्धस्त्रियोऽपि च ।
औदकानि च सत्वानि श्वापदानि वयांसि च ॥ ७

जरायुजान्यण्डजानि स्वेदजान्युद्भिदानि च ।
पर्वतानूपवन्यानि भूतानि ददृशुश्च ते ॥ ८

[1]एवं प्रमुदितं सर्वं पशुगोधनधान्यतः ।
यज्ञवाटं नृपा दृष्ट्वा परं विस्मयमागमन् ॥ ९

अनिशं दीयते च स्म तत्र भोज्यं पृथग्विधम् ।

---

1. क-ख-घ—सर्वे राजन् यथान्यायमानीता नृपशासनात् ।
[अधिकः पाठः]

ब्राह्मणानां विशां चैव बहुमृष्टान्नमृद्धिमत् ॥ १०

पूर्णे शतसहस्रे तु विप्राणां तत्र भुञ्जताम् ।
दुन्दुभिर्मेघनिर्घोषो मुहुर्मुहुरताड्यत ॥ ११

विननादासकृत् सोऽथ दिवसे दिवसे तथा ।
एवं स ववृते यज्ञो धर्मराजस्य धीमतः ॥ १२

अन्नस्य सुबहून् राजन्नुत्सर्गान् पर्वतोपमान् ।
दधिकुल्याश्च ददृशुः सर्पिषां च महाह्रदान् ॥ १३

जम्बूद्वीपो हि सकलो नानाजानपदो जनः ।
राजन्नदृश्यतैकस्थो राज्ञस्तस्य महाक्रतौ ॥ १४

तत्र जातिसहस्राणि पुरुषाणां ततस्ततः ।
गृहीत्वा धनमाजग्मुर् बहूनि भरतर्षभ ॥ १५

राजानस्स्रग्विणश्चापि सुमृष्टमणिकुण्डलाः ।
पर्यवेषन् द्विजाग्र्यांस्तान् शतशोऽथ सहस्रशः ॥ १६

विविधान्यन्नपानानि पुरुषा येऽनुयायिनः ।
तेषां नृपोपभोग्यानि ब्राह्मणानां ददुस्स्म ह ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥

॥ ९२ ॥ अनुगीतापर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

[ अस्मिन्नध्याये १७ श्लोकाः ]

---

## ॥ द्विनवतितमोऽध्यायः ॥

कृष्णेन बलरामादिभिस्सह युधिष्ठिराश्वमेधाय हास्तिनपुरं प्रत्यागमनम् ॥ १ ॥ तथा युधिष्ठिरं प्रति नानादेशेभ्य आगमिष्यतां राज्ञामप्रमादेन यथोचितपूजाया मणलूरादागमिष्यतो बभ्रुवाहनस्य सम्माननस्य च कर्तव्यताप्रतिपादकार्जुनसन्देशनिवेदनम् ॥ २ ॥

वैशम्पायनः—

समागतान् वेदविदो राज्ञश्च पृथिवीश्वरान् ।
दृष्ट्वा युधिष्ठिरो राजा भीमसेनमथाब्रवीत् ॥ १

युधिष्ठिरः—

उपयाता नरव्याघ्रा य इमे जगतीश्वराः ।
[1]एतेषां क्रियतां पूजा पूजार्हा हि नरेश्वराः ॥ २

वैशम्पायनः—

इत्युक्तस्स तथा चक्रे नरेन्द्रेण यशस्विना ।
भीमसेनो महाराज यमाभ्यां सह कौरव ॥ ३

अथाभ्यगच्छद्गोविन्दो वृष्णिभिस्सह धर्मजम् ।
बलदेवं पुरस्कृत्य सर्वप्राणभृतां वरम् ॥ ४

युयुधानेन सहितः प्रद्युम्नेन गदेन च ।
निशठेनाथ साम्बेन तथैव कृतवर्मणा ॥ ५

1. क-ख—एतेभ्यः ।

तेषामपि परां पूजां चक्रे भीमो महाभुजः ।
विविशुस्ते च वेश्मानि रत्नवन्ति नरर्षभाः ॥ ६

युधिष्ठिरसमीपे तु कथान्ते मधुसूदनः ।
अर्जुनं कथयामास बहुसङ्ग्रामकर्शितम् ॥ ७

स तं पप्रच्छ कौन्तेयः पुनःपुनररिन्दमः ।
धर्मराट् भ्रातरं जिष्णुं स चाचष्ट जगत्पतिः ॥ ८

श्रीभगवान्—

आगमद्द्वारकावासी ममाप्तः पुरुषो नृप ।
सोऽद्राक्षीत् पाण्डवश्रेष्ठं बहुसङ्ग्रामकर्शितम् ॥ ९

समीपे च महाबाहुम् आचष्ट मम स प्रभो ।
कुरु कार्याणि कौन्तेय हयमेधार्थसिद्धये ॥ १०

वैशम्पायनः—

इत्युक्तः प्रत्युवाचैनं धर्मराजो युधिष्ठिरः ॥ १०॥

युधिष्ठिरः—

दिष्ट्या स कुशली जिष्णुर् उपायातस्स माधव ॥ ११

तव यत् सन्दिदेशासौ पाण्डवानां बलाग्रणीः ।
तदाख्यातुमिहेच्छामि भवता यदुनन्दन ॥ १२

वैशम्पायनः—

इत्युक्तो राजशार्दूल वृष्ण्यन्धकपतिस्तदा ।
प्रोवाचेदं वचो वाग्मी धर्मात्मानं युधिष्ठिरम् ॥ १३

श्रीभगवान्—

इदमाह महाराज पार्थवाक्यं नरेश्वर ।
निवेद्यो युधिष्ठिरः कृष्ण काले वाक्यमिदं मम ॥ १४

आगमिष्यन्ति राजानस् सर्वतः कौरवान् प्रति ।
तेभ्य एकैकशः पूजा कार्येत्येतत् क्षमं हितम् ॥ १५

इत्येतद्वचनाद्राजा विज्ञाप्यो मम मानद ।
ते तदात्ययिकं न स्याद् यदर्घ्यानयनेऽभवत् ॥ १६

कर्तुमर्हति तद्राजा भवांश्चाप्यनुमन्यताम् ।
राजानो न विनश्येयुर् नेमा राजन् प्रजाः पुनः ॥ १७

इदमन्यच्च कौरव्य वचस्स पुरुषोऽब्रवीत् ।
धनञ्जयस्य नृपते तन्मे निगदतश्शृणु ॥ १८

उपायास्यति यज्ञं नो मणलूरपतिर्नृपः ।
पुत्रो मम महातेजा दयितो बभ्रुवाहनः ॥ १९

तं भवान् मदपेक्षार्थं विधिवत् प्रतिपूजयेत् ।
स हि भक्तोऽनुरक्तश्च मम नित्यमिति प्रभो ॥ २०

वैशम्पायनः—

इत्येतद्वचनं श्रुत्वा धर्मराजो युधिष्ठिरः ।
अभिनन्द्य स तद्वाक्यम् इदं वचनमब्रवीत् ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि द्विनवतितमोऽध्यायः॥ ९२ ॥
॥ ९२ ॥ अनुगीतापर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

[ अस्मिन्नध्याये २१ श्लोकाः ]

———

## ॥ त्रिनवतितमोऽध्यायः ॥

युधिष्ठिरेण पाण्डवेभ्यश्चतुर्भ्योऽर्जुनस्यैव विशेषतोऽध्वसञ्चारादिपरिक्लेशसूचकशारीरलक्षणप्रश्ने कृष्णेन तं प्रति तत्कथनम् ॥ १ ॥ मेध्याश्वस्य पृथ्वीसञ्चारणाय गतेनार्जुनेन सहाश्वेन पुनर्नगरं प्रत्यागमनम् ॥ २ ॥

---

युधिष्ठिरः—

श्रुतं प्रियमिदं कृष्ण यत् त्वया मम भाषितम् ।
तन्मेऽमृतरसप्रख्यं मनो ह्लादयते विभो ॥ १

बहूनि किल युद्धानि विजयस्य नराधिपैः ।
पुनरासन् हृषीकेश तत्र तत्र मया श्रुतम् ॥ २

तन्निमित्तं हि स तदा पार्थस्सुखविवर्जितः ।
अतीव विजयो धीमान् इति मे [1]दूयते मनः ॥ ३

सञ्चिन्तयामि वार्ष्णेय सदा कुन्तीसुतं रहः ॥ ३॥

किं नु तस्य शरीरेऽस्ति सर्वलक्षणपूजिते ।
अनिष्टं लक्षणं कृष्ण येन दुःखान्युपाश्नुते ॥ ४॥

अतीव दुःखभागी स सततं कुन्तिनन्दनः ।
न च पश्यामि बीभत्सोर् निन्द्यं गात्रेषु किञ्चन ॥ ५॥
श्रोतव्यं चेन्मयैतद्वै तन्मे व्याख्यातुमर्हसि ॥ ६

---

1. क-ख—धीयते मनः ।

**वैशम्पायनः—**

इत्युक्तस्स हृषीकेशो ध्यात्वा सुमहदन्तरम् ।
राजानं भोजराजन्यवर्धनो विष्णुरब्रवीत् ॥ ७

**श्रीभगवान्—**

न ह्यस्य नृपते किञ्चिद् अनिष्टमुपलक्षये ।
ऋते पुरुषसिंहस्य [1]पिण्डिकेऽस्याधिके यतः ॥ ८

ताभ्यां स पुरुषव्याघ्रो नित्यमध्वसु युज्यते ।
न ह्यन्यमनुपश्यामि येनासौ दुःखभाग् जयः ॥ ९

**वैशम्पायनः—**

इत्युक्तस्स कुरुश्रेष्ठस् सत्यं कृष्णेन धीमता ।
प्रोवाच वृष्णिशार्दूलम् एवमेतदिति प्रभुः ॥ १०

कृष्णा तु द्रौपदी कृष्णं तिर्यक् सासूयमैक्षत ।
प्रतिजग्राह तस्यास्तं प्रणयं चापि केशिहा ॥ ११

सख्युस्सखा हृषीकेशस् साक्षादिव धनञ्जयः ॥ ११॥

तत्र भीमादयस्ते तु कुरवो यादवास्तदा ।
विचित्रा रेमिरे श्रुत्वा धनञ्जयकथां विभो ॥ १२॥

तथा कथयतामेव तेषामर्जुनसङ्कथाः ।
उपायाद्वचनान्मर्त्यो विजयस्य महात्मनः ॥ १३॥

सोऽभिगम्य कुरुश्रेष्ठं नमस्कृत्य च बुद्धिमान् ।

---

1. क—सिंहिकेऽस्यात्र कायतः । ख—स्यात्र कायतः ।

उपायातं नरव्याघ्रम् अर्जुनं प्रत्यवेदयत् ॥ १४॥

तच्छ्रुत्वा नृपतिस्तस्मै हर्षबाष्पाकुलेक्षणः ।
प्रियाख्याननिमित्तं वै ददौ बहुधनं तदा ॥ १५॥

ततो द्वितीये दिवसे महान् शब्दोऽभ्यवर्तत ।
आयाति पुरुषव्याघ्रे पाण्डवानां धुरन्धरे ॥ १६॥

ततो रेणुस्समुद्भूतो विबभौ तस्य वाजिनः ।
अभितो वर्तमानस्य यथोच्चैःश्रवसस्तथा ॥ १७॥

तत्र हर्षकला वाचो नराणां शुश्रुवेऽर्जुनः ॥ १८

दिष्ट्या हि पार्थः कुशली धन्यो राजा युधिष्ठिरः ॥ १८॥

कोऽन्यो हि पृथिवीं कृत्स्नाम् [1]अभिजित्य सपार्थिवाम् ।
चारयित्वा हयश्रेष्ठम् उपेयादर्जुनादृते ॥ १९॥

ये व्यतीता महात्मानो राजानस्सगरादयः ।
तेषामपीदृशं कर्म न किञ्चिदपि शुश्रुमः ॥ २०॥

नैतदन्ये करिष्यन्ति भविष्यन्तो नराधिपाः ।
यत् त्वं कुरुकुलश्रेष्ठ दुष्करं कृतवानसि ॥ २१॥

इत्येवं वदतां तेषां नृणां श्रुतिसुखावहाः ।
शृण्वन् विवेश धर्मात्मा फल्गुनो यज्ञसंस्तरम् ॥ २२॥

ततो राजा सहामात्यः कृष्णश्च यदुनन्दनः ।

---

1. क-ख—अपजित्य स ।

धृतराष्ट्रं पुरस्कृत्य ते तं प्रत्युद्ययुस्तदा ॥ २३॥

सोऽभिवाद्य पितुः पादौ धर्मराजस्य धीमतः ।
भीमादींश्चापि सम्पूज्य पर्यष्वजत केशवम् ॥ २४॥

तैस्समेत्यार्चितस्तान् स प्रत्यर्च्याथ यथाविधि ।
विशश्राम स धर्मात्मा तीरं लब्ध्वेव पारगः*॥ २५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥
॥ ९२ ॥ अनुगीतापर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥
[ अस्मिन्नध्याये २५॥ श्लोकाः ]

---

## ॥ चतुर्नवतितमोऽध्यायः ॥

बभ्रुवाहनेनोलूपीचित्राङ्गदाभ्यां सह यागदिदृक्षया हास्तिनपुरं प्रत्यागमनम् ॥ १ ॥ ततः स्वयं समागतव्यासाज्ञया युधिष्ठिरेण ऋत्विग्भिः सहाश्वमेधोपक्रमः ॥ २ ॥

---

वैशम्पायनः—

एतस्मिन्नेव काले तु स राजा बभ्रुवाहनः ।
मातृभ्यां सहितो धीमान् कुरूनभ्याजगाम ह॥ १

स समेत्य कुरून् सर्वान् सर्वैस्तैरभिनन्दितः ।
प्रविवेश पितामह्याः कुन्त्या भवनमुत्तमम् ॥† २

---

* क-ख-घ—नात्राध्यायसमाप्तिर्दृश्यते ।

† क-ख-घ—कोशेषु अत्रैव पूर्वतनाध्यायसमाप्तिर्दृश्यते ।

स प्रविश्य यथान्यायं पाण्डवानां निवेशनम् ।
पितामहीमभ्यवदत् साम्ना परमवल्गुना ॥ ३

तथा चित्राङ्गदा देवी कौरवस्यात्मजाऽपि च ।
[1]पृथां कृष्णां च सहिते विनयेनाभिजग्मतुः ॥ ४

सुभद्रां च यथान्यायं याश्चान्याः कुरुयोषितः ॥ ४॥

ददौ कुन्ती ततस्ताभ्यां रत्नानि विविधानि च ।
द्रौपदी च सुभद्रा च याश्चाप्यन्याः कुरुस्त्रियः ॥ ५॥

ऊषतुस्तत्र ते देव्यौ महार्हशयनासने ।
सुपूजिते स्वयं कुन्त्या पार्थस्य प्रियकाम्यया ॥ ६॥

स च राजा महावीर्यः पूजितो बभ्रुवाहनः ।
धृतराष्ट्रं महीपालम् उपतस्थे यथाविधि ॥ ७॥

युधिष्ठिरं च राजानं भीमादींश्चापि पाण्डवान् ।
उपगम्य महातेजा विनयेनाभ्यवादयत् ॥ ८॥

स तैः प्रेम्णा परिष्वक्तः पूजितश्च यथाविधि ।
धनं चास्मै ददुर्भूरि प्रीयमाणा महारथाः ॥ ९॥

तथैव स महीपालः कृष्णं चक्रगदाधरम् ।
प्रद्युम्नवद्धृषीकेशं विनयेनोपजग्मिवान् ॥ १०॥

तस्मै कृष्णो ददौ राज्ञे राजार्हमभिपूजितम् ।

---

1. क—अर्धत्रयं नास्ति

रथं हेमपरिष्कारं दिव्याश्वयुजमुत्तमम् ॥ ११॥

धर्मराजश्च भीमश्च यमजौ फल्गुनस्तथा ।
पृथक्पृथगर्थैवैनं महार्थैरभ्यपूजयन् ॥ १२॥

ततस्तृतीये दिवसे सत्यवत्यास्सुतो मुनिः ।
युधिष्ठिरं समानीय वाग्मी वचनमब्रवीत् ॥ १३॥

व्यासः—

अद्यप्रभृति कौन्तेय [1]यज्ञस्य समयो हि ते ।
मुहूर्तो याज्ञियः प्राप्तश् चोदयन्त्येव याजकाः ॥ १४॥

अहीनो नाम राजेन्द्र क्रतुस्तेऽयं विकल्पवान् ।
बहुत्वात् काञ्चनस्यास्य ख्यातो बहुसुवर्णकः ॥ १५॥

एवमेव महाराज दक्षिणां त्रिगुणां कुरु ।
त्रित्वं व्रजतु ते राजन् ब्राह्मणा ह्यत्र कारणम् ॥ १६॥

त्रीनश्वमेधानत्र त्वं सम्प्राप्य बहुदक्षिणान् ।
ज्ञातिहत्याकृतं पापं प्रहास्यसि नराधिप ॥ १७॥

पवित्रं परमं ह्येतत् पावनानां च पावनम् ।
यदश्वमेधावभृथं प्राप्स्यसे कुरुनन्दन ॥ १८॥

वैशम्पायनः—

इत्युक्तस्स तु तेजस्वी व्यासेनामितबुद्धिना ।
दीक्षां विवेश धर्मात्मा वाजिमेधाप्तये तदा ॥ १९॥

---

1. क-ख—यजस्व ।

नराधिपः प्रायजत वाजिमेधं महाक्रतुम् ।
[1]विधिवद्दक्षिणं राजा सर्वयज्ञगुणान्वितम् ॥ २०॥

तत्र वेदविदो राजंश् चक्रुः कर्माणि याजकाः ।
[2-3]परिक्रामन्ति शास्त्रज्ञा यथावद्द्विजसत्तमाः ॥ २१॥

न तेषां स्खलितं तत्र नासीदपहुतं तदा ।
क्रमयुक्तं च युक्तं च चक्रुस्तत्र द्विजर्षभाः ॥ २२॥

कृत्वा प्रवर्ग्यं धर्मज्ञा यथावद्द्विजसत्तमाः ।
चक्रुस्ते विधिवद्राजंस् तथैवाभिषवं द्विजाः ॥ २३॥

अभिषूय ततो राजन् सोमं सोमपसत्तमाः ।
सवनान्यानुपूर्व्येण चक्रुश्शास्त्रानुसारिणः ॥ २४॥

न तत्र कृपणः कश्चिन्न दरिद्रो बभूव ह ।
क्षुधितो दुःखितो वाऽपि प्राकृतो वाऽपि मानवः ॥ २५॥

भोजनं भोजनार्थिभ्यो दापयामास सर्वदा ।
भीमसेनो महातेजास् सततं राजशासनात् ॥ २६॥

संस्तरे कुशलाश्चापि सर्वकर्माणि याजकाः ।
दिवसे दिवसे चक्रुर् यथाशास्त्रार्थचक्षुषः ॥ २७॥

---

1. क-ख-घ—नास्तीदमर्धम् ।
2. घ—इतः श्लोकद्वयं नास्ति
3. क-ख—परिक्रमन्तश्शास्त्रज्ञा विधिवत् साधु शिक्षिताः ।
[पाठान्तरम्]

नाषडङ्गविदत्रासीत् सदस्यो नाबहुश्रुतः ।
नाव्रतो नानुपाध्यायो [1]न च वादाक्षमो द्विजः ॥ २८॥

यूपोच्छ्रये ततः प्राप्ते षड् बैल्वान् भरतर्षभ ।
खादिरान् [2]बिल्वसहितांस् तावतस्सर्ववर्णिनः ॥ २९॥

देवदारुमयौ द्वौ तु यूपौ कुरुपतेः कृतौ ।
श्लेष्मातक[3]मयं चैकं याजकास्समकारयन् ॥ ३०॥

सर्वानेतान् यथाशास्त्रं याजकास्समयोजयन् ॥ ३१

शोभार्थं चापरान् यूपान् काञ्चनान् भरतर्षभ ।
स भीमः कारयामास धर्मराजस्य शासनात् ॥ ३२

ते व्यराजन्त राजर्षेर् वासोभिरुपशोभिताः ।
नरेन्द्राभिगता देवैर् यथा सप्तर्षयो दिवि ॥ ३३

इष्टकाः काञ्चनाश्चात्र चयनार्थं कृता भवन् ।
शुशुभे चयनं तस्य दक्षस्येव प्रजापतेः ॥ ३४

चतुश्चित्यस्स तस्यासीद् अष्टादशकरात्मकः।
स रुक्मपक्षो निचितस् त्रिगुणो गरुडाकृतिः ॥ ३५

ततो नियुक्ताः पशवो यथाशास्त्रं मनीषिभिः ।
तं तं देवं समुद्दिश्य पक्षिणः पशवश्च ये ॥ ३६

---

1. क—नानूचानाक्षमो । ख—नानूचाना - मो ।
2. क-ख—बैल्वसहितांस्ततश्चुस्सर्ववर्धिनः ।
3. क-ख-ग—मयश्चैकः पालाशोदुम्बरस्तथा ।

ऋषभाऽऽशास्त्रपठितास् तथा जलचराश्च ये ।
सर्वांस्तानभ्ययुञ्जंस्ते तत्राग्निचयकर्मणि ॥ ३७

यूपेषु नियतं चासीत् पशूनां त्रिशतं तथा ।
अश्वरत्नोत्तमं राज्ञः कौन्तेयस्य महात्मनः ॥ ३८

स [1]यज्ञश्शुशुभे तस्य साक्षाद्देवर्षिसङ्कुलः ।
गन्धर्वगणसङ्कीर्णश् शोभितोऽप्सरसां गणैः ॥ ३९

स किम्पुरुषगीतैश्च [2]किन्नरैरुपशोभितः ।
सिद्धविप्रनिवासैश्च समन्तादभिशोभितः ॥ ४०

तस्मिन् सदसि नित्यास्तु व्यासशिष्या द्विजोत्तमाः ।
सर्वशास्त्रप्रणेतारः कुशला यज्ञकर्मणि ॥ ४१

नारदश्च बभूवात्र तुम्बुरुश्च महाद्युतिः ।
विश्वावसुश्चित्रसेनस् तथाऽन्ये गीतकोविदाः ॥ ४२

गन्धर्वा गीतकुशला नृत्तेषु च विशारदाः ।
रमयन्ति स्म तान् विप्रान् यज्ञकर्मान्तरेष्वथ ॥ ४३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

॥ ९२ ॥ अनुगीतापर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

[ अस्मिन्नध्याये ४३ श्लोकाः ]

---

1. क-ख—हयः + साक्षादिव जगत्पतेः ।
2. क-ख—पन्नगैः ।

## ॥ पञ्चनवतितमोऽध्यायः ॥

युधिष्ठिरेणाश्वमेधसमापनानन्तरं राज्ञां यथोचितं सम्मानपूर्वकं स्वस्वदेशान् प्रति प्रस्थापनम् ॥ १ ॥

वैशम्पायनः—

श्रपयित्वा पशूनन्यान् विधिवद्द्विजसत्तमाः ।
तुरगं तं यथाशास्त्रम् आलभन्त द्विजातयः ॥ १

ततस्संज्ञप्य तुरगं विधिवद्याजकर्षभाः ।
उपसंवेशयाञ्चक्रुस् तत[1]स्तां द्विजसत्तमाः ॥ २
कलाभिस्तिसृभी राजन् यथाविधि समन्विताम् ॥ २॥

उद्धृत्य तु वपां तत्र यथाशास्त्रं द्विजर्षभाः ।
श्रपयामासुरपराश् शास्त्रवद्भरतर्षभ ॥ ३॥

तं वपाधूमगन्धं तु धर्मराजस्सहानुजः ।
उपाजिघ्रद्यथान्यायं सर्वपाप्मापहं तदा ॥ ४॥

शिष्टान्यङ्गानि यान्यासंस् तस्याश्वस्य नराधिप ।
तान्यग्नौ जुहुवुर्धीरास् समस्ताष् षोडशर्त्विजः ॥ ५॥

संस्थाप्यैवं तस्य राज्ञस् तं क्रतुं शक्रतेजसः ।
व्यासस्सशिष्यो भगवान् वर्धयामास तं नृपम् ॥ ६॥

---

1. अ-च—स्तां द्रुपदात्मजाम् ।

ततो युधिष्ठिरः प्रादात् सदस्येभ्यो यथाविधि ।
कोटीस्सहस्रं निष्काणां व्यासाय तु वसुन्धराम् ॥ ७॥

प्रतिगृह्य धरां राजन् व्यासस्सत्यवतीसुतः ।
अब्रवीद्भरतश्रेष्ठं धर्मात्मानं युधिष्ठिरम् ॥ ८॥

व्यासः—

पृथिवी भवतस्त्वेषा सन्न्यस्ता राजसत्तम ।
निष्क्रयो दीयतां मह्यं ब्राह्मणा हि धनार्थिनः ॥ ९॥

वैशम्पायनः—

युधिष्ठिरस्तु तान् विप्रान् प्रत्युवाच महामनाः ।
भ्रातृभिस्सहितो धीमान् मध्ये राज्ञां महात्मनाम् ॥ १०॥

युधिष्ठिरः—

अश्वमेधे महायज्ञे पृथिवी दक्षिणा स्मृता ।
अर्जुनेन जिता सेयम् ऋत्विग्भ्यः प्रापिता मया ॥ ११॥

वनं यास्यामि विप्रेन्द्रा विभजध्वं महीमिमाम् ।
चतुर्धा पृथिवीं कृत्वा चातुर्होत्रप्रमाणतः ॥ १२॥

नाहमादातुमिच्छामि ब्रह्मस्वं मुनिसत्तमाः ।
इदं मतं हि मे नित्यं भ्रातॄणां च ममानघाः ॥ १३॥

वैशम्पायनः—

इत्युक्तवति तस्मिंस्ते भ्रातरो द्रौपदी च सा ।
एवमेतदिति प्राहुस् तदभूद्रोमहर्षणम् ॥ १४॥

ततोऽन्तरिक्षे वागासीत् साधु साध्विति भारत ।
तथैव द्विजसङ्घानां शंसतां विबभौ स्वनः ॥ १५॥

द्वैपायनस्तथोक्तस्तु पुनरेव युधिष्ठिरम् ।
उवाच मध्ये विप्राणाम् इदं सम्पूजयन् मुनिः ॥ १६॥

व्यासः—
दत्तैषा भवता मह्यं तां ते प्रतिददाम्यहम् ॥ १८
हिरण्यं दीयतामेभ्यो द्विजातिभ्यो धराऽस्तु ते ॥ १७॥

वैशम्पायनः—
ततोऽब्रवीद्वासुदेवो धर्मराजं युधिष्ठिरम् ॥ १८

श्रीभगवान्—
यथाऽऽह भगवान् व्यासस् तथा त्वं कर्तुमर्हसि ॥ १८॥

वैशम्पायनः—
इत्युक्तस्स कुरुश्रेष्ठः प्रीतात्मा भ्रातृभिस्सह ।
कोटिं कोटिं गवां प्रादाद् दक्षिणां त्रिगुणां क्रतौ ॥ १९॥

न करिष्यति तल्लोके कश्चिदन्यो नराधिपः ।
यत् कृतं कुरुसिंहेन मरुत्तमनुकुर्वता ॥ २०॥

प्रतिगृह्य तु तद्रत्नं कृष्णद्वैपायनः प्रभुः ।
ऋत्विग्भ्यः प्रददौ विद्वांश् चतुर्धा व्यभजंश्च ते ॥ २१॥

पृथिव्या निष्क्रयं दत्त्वा तद्धिरण्यं युधिष्ठिरः ।
धूतपाप्मा जितस्वर्गो मुमुदे भ्रातृभिस्सह ॥ २२॥

ऋत्विजस्तमपर्यन्तं सुवर्णनिचयं तदा ।
व्यभजन्त द्विजातिभ्यो यथोत्साहं यथाविधि ॥ २३॥

यज्ञवाटे तु यत् किञ्चिद्धिरण्यमपि भूषणम् ।
तोरणानि च यूपांश्च घटान् पात्रीस्तथेष्टकाः ॥ २४॥

युधिष्ठिराभ्यनुज्ञातास् तत् सर्वं व्यभजन् द्विजाः ॥ २५
अनन्तरं ब्राह्मणेभ्यः क्षत्रिया जह्रिरे वसु ॥ २५॥

तथा विट्शूद्रसङ्घाश्च तथाऽन्ये म्लेच्छजातयः ।
कालेन महता जह्रुस् तत् सुवर्णं ततस्ततः ॥ २६॥

ततस्ते ब्राह्मणास्सर्वे मुदिता जग्मुरालयान् ।
तर्पिता वसुना चैव धर्मराज्ञा महात्मना ॥ २७॥

स्वमंशं भगवान् व्यासः [1]कुन्त्यै पादाभिवादितः ।
[2]प्रददौ तस्य महतो हिरण्यस्य महाद्युतिः ॥ २८॥

श्वशुरात् प्रीतिदानं तत् प्राप्य सा प्रीतमानसा ।
चकार पुण्यं कालेन [3]सुमहाद्धि पृथा तथा ॥ २९॥

गत्वा त्ववभृथं राजा विपाप्मा भ्रातृभिस्सह ।
सभाज्यमानश्शुशुभे महेन्द्रो दैवतैरिव ॥ ३०॥

---

1. क-ख—कुन्त्याः पादाभिवादनम् ।
2. क—प्रददौ तस्य च ऋषेः प्रीतिदानमनुत्तमम् । [पाठान्तरम्]
ख-घ—नास्तीदमर्धम् ॥
3. अ—सुमहान्तं पृथा तदा । घ—सुमहर्धिं पृथा गता ।

पाण्डवाश्च महीपालैस् समेतैस्संवृतास्तदा ।
अशोभन्त महाराज ग्रहास्तारागणैर्यथा ॥ ३१॥

राजभ्योऽपि ततः प्रादाद् रत्नानि विविधानि च ।
गजानश्वानलङ्कारान् [1]स्त्रीश्च रत्नानि काञ्चनम् ॥ ३२॥

[2]तद्धनौघमपर्यन्तं पार्थः पार्थिवमण्डले ।
विसृजञ्शुशुभे राजन् यथा वैश्रवणस्तथा ॥ ३३॥

आनीय च तथा वीरं राजानं बभ्रुवाहनम् ।
प्रदाय बहुलं वित्तं गृहान् प्रास्थापयत् तदा ॥ ३४॥

दुश्शलायाश्च तं पौत्रं बालकं भरतर्षभ ।
स्वराज्ये पितृभिर्भुक्ते प्रीत्या समभिषेचयत् ॥ ३५॥

राज्ञश्चैवापि तान् सर्वान् सुविभक्तान् सुपूजितान् ।
प्रस्थापयामास वशी कुरुराजो युधिष्ठिरः ॥ ३६॥

एवं बभूव यज्ञस्स धर्मराजस्य धीमतः ।
बह्वन्नधनरत्नौघस् सुरामैरेयसागरः ॥ ३७॥

सर्पिषश्च ह्रदा यत्र बहवश्चान्नपर्वताः ।
[3]रसालकर्दमाः कुल्या बभूवुर्भरतर्षभ ॥ ३८॥

[4]भक्ष्याष्षड्रसरागाणां क्रियतां भुज्यतामिति ।

---

1. अ—स्त्रियोवास्यातिचन्दनम् । घ—स्त्रीस्सरत्नं सकाञ्चनम् ।
2. ख—अर्धद्वयं नास्ति 3. क-ख—रसानां कर्दमाः ।
4. क-ख—भक्ष्यष्षडपरागाणां ? ।

पशूनां वध्यमानानां नान्तं ददृशिरे जनाः ॥ ३९।
मत्तोन्मत्तप्रमुदितं प्रगीतवनिताजनम् ।
मृदङ्गशङ्खनादैश्च मनोरममभूत् तदा ॥ ४०।
दीयतां भुज्यतां चेति तत्र शब्दो महानभूत् ।
पीयतां दीयतां चेति दिवारात्रमवारिताः ॥ ४१।
तं महोत्सवसङ्काशम् अतिहृष्टजनाकुलम् ।
कथयन्ति स्म पुरुषा नानादेशनिवासिनः ॥ ४२॥
वर्षित्वा धनधाराभिः कामै रत्नैर्धनैस्तथा ।
विपाप्मा भरतश्रेष्ठः कृतार्थः प्राविशत् पुरीम् ॥ ४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥
॥ ९२ ॥ अनुगीतापर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥
[ अस्मिन्नध्याये ४३॥ श्लोकाः ]

---

## ॥ षण्णवतितमोऽध्यायः ॥

वैशम्पायनेन जनमेजयं प्रति नकुलाख्यानकथनारम्भः ॥ १ ॥ अश्वमेधावसाने बिलान्निस्सृतेन कनकपार्श्वेन केनचिन्नकुलेन सदस्यान् प्रति उञ्छवृत्तिब्राह्मणस्य सक्तुप्रस्थदानप्रशंसनपूर्वकं युधिष्ठिराश्वमेधगर्हणम् ॥ २ ॥ तथा सदस्यचोदनया तत्कथनोपक्रमः ॥ ३ ॥

---

जनमेजयः—

पितामहस्य मे यज्ञे धर्मपुत्रस्य धीमतः ।
यदाश्चर्यमभूत् किञ्चित् तद्भवान् वक्तुमर्हति ॥ १

**वैशम्पायनः—**

श्रूयतां राजशार्दूल महदाश्चर्यमुत्तमम् ।
अश्वमेधे महायज्ञे निवृत्ते यदभूद्विभो ॥ २

तर्पितेषु द्विजाग्र्येषु ज्ञातिसम्बन्धिबन्धुषु ।
दीनान्धकृपणे चाऽपि तदा भरतसत्तम ॥ ३

घुष्यमाणे महानादे दिक्षु सर्वासु भारत ।
पतत्सु पुष्पवर्षेषु धर्मराजस्य मूर्धनि ॥ ४

बिलान्निस्सृत्य नकुलो रुक्मपार्श्वस्तदा नृप ।
वज्राशनिसमं नादम् अमुञ्चत विशाम्पते ॥ ५

सकृदुत्सृज्य तंनादं त्रासयानो मृगद्विजान् ।
मानुषं वचनं प्राह धृष्टो बिलशयो महान् ॥ ६

**नकुलः—**

सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो नराधिपाः ।
उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः ॥ ७

**वैशम्पायनः—**

तस्य तद्वचनं श्रुत्वा नकुलस्य विशाम्पते ।
विस्मयं परमं जग्मुस् सर्वे ते ब्राह्मणर्षभाः ॥ ८
ततस्समेत्य नकुलं पर्यपृच्छन्त ते द्विजाः ॥ ८॥

**द्विजाः—**

कुतस्त्वं समनुप्राप्तो यज्ञं साधुसमागमम् ॥ ९
किं बलं परमं ते ह किं श्रुतं किं परायणम् ।

कथं भवन्तं विद्याम यो नो यज्ञं विगर्हते ॥ १०

अविलुप्यागमं कृत्स्नं विविधैर्याजकैर्हुतम् ।
यथागमं यथान्यायं कर्तव्यं च तथा कृतम् ॥ ११

पूजार्हाः पूजिताश्चात्र विधिवज्ज्ञानचक्षुषः ।
मन्त्रपूतं हुतश्चाग्निर् दत्तं देयममत्सरम् ॥ १२

तुष्टा द्विजर्षभाश्चात्र दानैर्बहुविधैरपि ।
क्षत्रियाश्च सुयुद्धेन श्राद्धैरपि पितामहाः ॥ १३

पालनेन विशस्तुष्टाः कामैस्तुष्टा वरस्त्रियः ।
अनुक्रोशैस्तथा [1]शूद्रा दानैश्शेषाः पृथग्जनाः ॥ १४

ज्ञातिसम्बन्धिनस्तुष्टाश् शौचेन च नृपस्य नः ।
देवा हविर्भिः पुण्यैश्च रक्षणैश्शरणागताः ॥ १५

यदत्र तथ्यं तद्ब्रूहि सत्यसन्ध द्विजातिषु ।
यथाश्रुतं यथादृष्टं पृष्टो ब्राह्मणकाम्यया ॥ १६

श्रद्धेयवाक्यः प्राज्ञस्त्वं दिव्यरूपं बिभर्षि च ।
समागतश्च विप्रैस्त्वं तत्त्वतो वक्तुमर्हसि ॥ १७

वैशम्पायनः—
इति पृष्टो द्विजैस्तैस्स प्रहस्य नकुलोऽब्रवीत् ॥ १७॥

नकुलः—
नैषा मृषा मया वाणी प्रोक्ता दर्पेण वा द्विजाः ।

---

1. क-ख—शूद्रास्तथा शेषाः ।

यन्मयोक्तमिदं किञ्चिद् युष्माभिश्चाप्युपश्रुतम् ॥ १८॥

सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो द्विजर्षभाः ।

[1]उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः ॥ १९॥

यद्यवश्यं मयैवैतद् वक्तव्यं द्विजपुङ्गवाः ।

शृणुताव्यग्रमनसस् तन्मे सर्वं द्विजर्षभाः ॥ २०॥

अनुभूतं च दृष्टं च यन्मयाऽद्भुतमुत्तमम् ।

उञ्छवृत्तेर्यथा वृत्तं दानधर्मं च यादृशम् ॥ २१॥

स्वर्गं स्थानं च सम्प्राप्तस् सभार्यस्ससुतस्नुषः ।

[2]यथा चार्धं शरीरस्य ममेदं काञ्चनीकृतम् ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥

॥ ९२ ॥ अनुगीतापर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

[ अस्मिन्नध्याये २२॥ श्लोकाः ]

## ॥ सप्तनवतितमोऽध्यायः ॥

नकुलेन युधिष्ठिरादीन् प्रति सकुटुम्बस्योञ्छवृत्तेर्ब्राह्मणस्य धर्मपुरुषाय सक्तुप्रस्थदानमहिमवर्णनपूर्वकं पुनस्तत्रैवान्तर्धानम् ॥ १ ॥

नकुलः—

अत्र वो वर्तयिष्यामि दानस्य फलमुत्तमम् ।

न्यायलब्धस्य सूक्ष्मस्य विप्रे दत्तस्य वै द्विजाः ॥ १

1. अ—इतः अर्धत्रयं नास्ति 2. क-ख-ग—इदमर्धं नास्ति

धर्मक्षेत्रे कुरुक्षेत्रे धर्मज्ञैर्बहुभिर्वृते ।
उञ्छवृत्तिर्द्विजः कश्चित् कापोतिरभवत् पुरा ॥ २

सभार्यस्सह पुत्रेण सस्नुषस्तपसि स्थितः ॥ २॥

वधूचतुर्थो वृद्धस्स धर्मात्मा नियतेन्द्रियः ।
[1]षष्ठे काले सदा विप्रो भुङ्क्ते तैस्सह सुव्रतः ॥ ३॥

षष्ठे काले कदाचित्तु तस्याहारो न विद्यते ।
[2]भुङ्क्तेऽन्यस्मिन् कदाचित् स षष्ठे काले द्विजोत्तमः ॥ ४॥

कपोतधर्मिणस्तस्य दुर्भिक्षे सति दारुणे ।
नाविद्यत तदा विप्रास् सञ्चयस्तन्निबोधत ॥ ५॥

क्षीणौषधिसमावापो द्रव्यहीनोऽभवत् तदा ।
क्षीणे कालेऽस्य सम्प्राप्ते नैवाविद्यत भोजनम् ॥ ६॥

क्षुधापरिगतास्सर्वे प्रातिष्ठन्त तदा तु ते ।
उञ्छं तदा शुक्लपक्षे मध्यं तपति भास्करे ॥ ७॥

उष्णार्तश्च क्षुधार्तश्च विप्रस्तपसि निष्ठितः ।
उञ्छमप्राप्तवानेव सार्धं परिजनेन ह ॥ ८॥

---

1. अ—षष्ठे काले तदा विप्रो द्रव्यहीनोऽभवत् तदा ।
काले कालेऽस्य सम्प्राप्ते नैवाविद्यत भोजनम् ॥ [पाठान्तरम्]
क-ख-घ—श्लोकोऽयं नास्ति । ग—उपरि मुद्रितवत् ।

2. अ—अर्धपञ्चकं नास्ति । क-ख-घ—भुङ्क्ते तस्मिंस्तु सम्प्राप्ते ।

[1]स तथैव क्षुधाविष्टस् स्पृष्ट्वा तोयं यथाविधि ।
[2]क्षपयामास तं कालं सार्धं परिजनेन ह ॥　　९॥

अथ षष्ठे गते काले ते यवप्रस्थमार्जयन् ।
यवप्रस्थं च तत् सक्तून् अकुर्वन्त तपस्विनः ॥　　१०॥

कृतजप्याह्निकास्ते तु हुत्वा वह्निं यथाविधि ।
कुडवं कुडवं सर्वे व्यभजन्त तपस्विनः ॥　　११॥

अथागमद्द्विजः [3]कश्चिद् अतिथिर्भुञ्जतां तदा ।
ते तं दृष्ट्वाऽतिथिं तत्र प्रहृष्टमनसोऽभवन् ॥　　१२॥

तेऽभिवाद्य सुखप्रश्नं पृष्ट्वा तमतिथिं तदा ।
विशुद्धमनसो दान्ताश् श्रद्धादमसमन्विताः ॥　　१३॥

अनसूया गतक्रोधास् साधवो गतमत्सराः ।
[4]त्यक्तात्मानो जितक्रोधा धर्मज्ञा द्विजसत्तमाः ॥　　१४॥

स्वं ब्रह्मचर्यं ते गोत्रम् आख्यायाथ परस्परम् ।
कुटीं प्रवेशयामासुः क्षुधार्तमतिथिं तदा ॥　　१५॥

[5]इदमर्घ्यं च पाद्यं च बृसी चेयं तवानघ ।
शुचयस्सक्तवश्चेमे नियमोपार्जिताः प्रभो ॥　　१६॥

प्रतिगृह्णीष्व भद्रं ते मया दत्तान् द्विजोत्तम ॥　　१७

---

1. घ—श्लोकोऽयं नास्ति　　2. क—अर्धचतुष्टयं नास्ति
3. क-ख-घ—कश्चित्, बुभुक्षूणां तथाऽतिथिः ।
4. अ—इदमर्धं नास्ति　　5. क-ख-घ—नास्तीदमर्धम्

इत्युक्तः प्रतिगृह्याथ सक्तूनां कुडवं द्विजः ।
भक्षयामास राजेन्द्र न च तुष्टिं जगाम सः ॥ १८

स उञ्छवृत्तिस्तं प्रेक्ष्य क्षुधापरिगतं द्विजम् ।
आहारं चिन्तयामास कथं तुष्टो भवेदिति ॥ १९

तस्य भार्याऽब्रवीद्राजन् मद्भागो दीयतामयम् ।
गच्छत्वेष यथाकामं सन्तुष्टो द्विजसत्तमः ॥ २०

इति ब्रुवन्तीं तां साध्वीं धर्मात्मा स द्विजर्षभः ।
क्षुधापरिगतां ज्ञात्वा सक्तूंस्तान् नाभ्यनन्दत ॥ २१

जानन् वृद्धां क्षुधार्तां च श्रान्तां ग्लानां तपस्विनीम् ।
त्वगस्थिभूतां ध्यायन्तीं ततो भार्यामुवाच ताम् ॥ २२

ब्राह्मणः—

अपि कीटपतङ्गानां मृगाणां चैव शोभने ।
स्त्रियो रक्ष्याश्च पोष्याश्च नैवं त्वं वक्तुमर्हसि ॥ २३

[1]अनुकम्प्यो नरः पत्न्या पुष्टो रक्षित एव च ।
प्रपतेद्यशसो दीप्तान्न च लोकानवाप्नुयात् ॥ २४

वैशम्पायनः—

इत्युक्ता सा ततः प्राह धर्मार्थौ नौ समौ मुने ॥ २४॥
सक्तुप्रस्थचतुर्भागं गृहाणेदं प्रसीद मे ॥ २५

---

1. क-ख—अनुकम्पितो नरो नार्या पुष्टो रक्षितं एव वा ।

सत्यं रतिश्च धर्मश्च स्वर्गश्च गुणनिर्जितः ।
स्त्रीणां पतिसमाधीनं तपश्चेदं द्विजोत्तम ॥ २६

भ्रातुर्मातुः पितुर्बीजं दैवतं [1]परमं पतिः ।
भर्तुः प्रसादात् स्त्रीणां वै रतिपुत्रफलं तथा ॥ २७

पालनाद्धि पतिस्त्वं मे भर्ताऽसि भरणान्वितः ।
पुत्रप्रदानाद्वरदस् तस्मात् सक्तून् गृहाण मे ॥ २८

[2]जरापरिगतो वृद्धः क्षुधार्तो दुर्बलोऽदृढः ।
उपवासपरिश्रान्तो यदा त्वमपि कर्शितः ॥ २९

वैशम्पायनः—

इत्युक्तस्स तया सक्तून् प्रगृह्येदं वचोऽब्रवीत् ॥ २९॥

भर्ता—

द्विज सक्तूनिमान् भूयः प्रतिगृह्णीष्व सत्तम ॥ ३०

वैशम्पायनः—

स तान् प्रगृह्य भुक्त्वा च न तुष्टिमगमन्मुनिः ।
तमुञ्छवृत्तिरालक्ष्य ततश्चिन्तापरोऽभवत् ॥ ३१

पुत्रः—

सक्तूनिमान् प्रगृह्य त्वं देहि विप्राय सत्तम ।

---

1. क-ख—परमा गतिः ।
2. क-ख—जरया परितो वृद्धः क्षुधया च तथा दृढम् ।
घ—क्षुधया च तथाऽदृढः ।

इत्येव सुकृतं मन्ये तस्मादेतत् करोम्यहम् ॥ ३२

भवान् हि परिपाल्यो मे सर्वयत्नैर्द्विजोत्तम ।
साधूनां काङ्क्षितं ह्येतत् पितुर्वृद्धस्य पोषणम् ॥ ३३

[1]पुत्रार्थो विहितो ह्येष स्थाविर्ये परिपालनम् ।
श्रुतिरेषा हि विप्रर्षे त्रिषु लोकेषु शाश्वती ॥ ३४

प्राणधारणमात्रेण शक्यं कर्तुं तपस्त्वया ।
प्राणा हि परमो धर्मस् स्थिता देहेषु देहिनाम् ॥ ३५

पिता—

अपि वर्षसहस्रस्त्वं बाल एव मतो मम ।
उत्पाद्य पुत्रं [2]हि पिता कृतकृत्यो भवत्युत ॥ ३६

बालानां क्षुद्बलवती जानाम्येतदहं तव ।
वृद्धोऽहं धारयिष्यामि त्वं बली भव पुत्रक ॥ ३७

जीर्णेन वयसा पुत्र न मां क्षुद्बाधतेऽपि च ।
दीर्घकालं तपस्तप्तं न मे मरणतो भयम् ॥ ३८

पुत्रः—

अपत्यमस्मि ते पुत्रस् त्राणात् पुत्रो हि विश्रुतः ।
आत्मा पुत्रस्स्मृतस्तस्मात् त्राह्यात्मानमिहात्मना ॥ ३९

पिता—

रूपेण सदृशस्त्वं मे शीलेन च बलेन च ।

---

1. घ—इतः श्लोकद्वयं नास्ति
2. क-ख—विहिताः कृतकृत्या भवन्त्युत ।

परीक्षितश्च बहुधा सक्तूनादद्धि ते सुत ॥ ४०

वैशम्पायनः—

इत्युक्त्वाऽऽदाय तान् सक्तून् प्रीतात्मा द्विजसत्तमः ।
प्रहसन्निव विप्राय स तस्मै प्रददौ तदा ॥ ४१

भुक्त्वा तानपि सक्तून् स नैव तुष्टो बभूव ह ।
उञ्छवृत्तिस्तु सव्रीलो बभूव द्विजसत्तमः ॥ ४२

तदा वधूस्स्थिता साध्वी ब्राह्मणप्रियकाम्यया ।
सक्तूनादाय संहृष्टा गुरुं तं वाक्यमब्रवीत् ॥ ४३

वधूः—

सन्तानात् तव सन्तानं ममापि प्रभविष्यति ।
सक्तूनिमानातिथये गृहीत्वा त्वं प्रयच्छ मे ॥ ४४

तव प्रसवनिर्वृत्या मम लोकाः किलाक्षयाः ।
पौत्रेण तानवाप्नोति यत्र गत्वा न शोचति ॥ ४५

धर्माद्या हि [1]यथा त्रेता वह्नित्रेता तथैव च ।
तथैव पुत्रपौत्राणां स्वर्गे त्रेताः किलाक्षयाः ॥ ४६

[2]पितॄणां तारणात् तस्मात् पुत्र इत्यनुशुश्रुमः ।
पुत्रपौत्रैश्च नियतस् साधुलोकानुपाश्नुते ॥ ४७

श्वशुरः—

वातातपविशीर्णाङ्गीं त्वां विशीर्णां निरीक्ष्य वै ।

---

1. क-ख—तथा त्रेधा वह्नित्रेधा । 2. अ-घ—पितॄनृणात् तारयति ।

कर्शितां सुव्रताचारैः क्षुधाविह्वलचेतसम् ॥ ४८

कथं सक्तून् ग्रहीष्यामि भूत्वा धर्मोपघातकः ।
कल्याणवृत्ते कल्याणि नैवं त्वं वक्तुमर्हसि ॥ ४९

षष्ठे काले व्रतवतीं शीलशौचतपोन्विताम् ।
कृच्छ्रवृत्तिं निराहारां द्रक्ष्यामि त्वां कथं न्वहम् ॥ ५०

बाला क्षुधार्ता नारी च रक्ष्या त्वं सततं मया ।
उपवासपरिश्रान्ता त्वं हि बान्धवनन्दिनी ॥ ५१

स्नुषा—

गुरोर्मम गुरुस्त्वं हि यतो दैवतदैवतम् ।
देवातिदेवस्तस्मात् त्वं सक्तूनादत्स्व मे विभो ॥ ५२

देहः प्राणाश्च धर्मश्च शुश्रूषार्थमिदं गुरो ।
तव विप्र प्रसादेन लोकान् प्राप्स्याम्यभीप्सितान् ॥ ५३

अवेक्ष्या हीति कृत्वा त्वं दृढभक्तेति मां द्विज ।
चिन्त्या ममेयमिति वा सक्तूनादातुमर्हसि ॥ ५४

श्वशुरः—

अनेन नित्यं साध्वी त्वं शीलवृत्तेन शोभसे ।
यत् त्वं धर्मपथोपेता गुरुवृत्तिमवेक्षसे ॥ ५५

तस्मात् सक्तून् ग्रहीष्यामि वधूर्नार्हसि वञ्चनाम् ।
गणयित्वा महाभागे त्वं हि धर्मभृतां वरे ॥ ५६

वैशम्पायनः—

इत्युक्त्वा तानुपादाय सक्तून् प्रादाद् द्विजातये ।
ततस्तुष्टोऽभवद्विप्रस् तस्य साधोर्महात्मनः ॥ ५७

प्रीतात्मा स तु तं वाक्यम् इदमाह द्विजर्षभम् ।
वाग्मी तदा द्विजश्रेष्ठो धर्मः पुरुषविग्रहः ॥ ५८

ब्राह्मणः—

अनेन सक्तुदानेन न्यायोपेतेन तत्त्वतः ।
यथाशक्ति विमुक्तेन प्रीतोऽस्मि तव सत्तम ॥ ५९

अहो दानं विघुष्टं ते स्वर्गे स्वर्गनिवासिभिः ।
गगनात् पुष्पवर्षं च पश्य त्वं पतितं [1]भुवि ॥ ६०

सुरा देवर्षिगन्धर्वा ये च देवपुरस्सराः ।
स्तुवन्तो देवदूताश्च सिद्धाश्चापि सुविस्मिताः ॥ ६१

ब्रह्मर्षयो विमानस्था ब्रह्मलोकगताश्च ये ।
काङ्क्षन्ते दर्शनं त्वद्य दिवं गच्छ द्विजर्षभ ॥ ६२

पितृलोकगतास्सर्वे तारिताः पितरस्त्वया ।
अनागताश्च बहवस् सुबहूनि युगानि च ॥ ६३

ब्रह्मचर्येण यज्ञेन दानेन तपसाऽथवा ।
अगह्वरेण धर्मेण तस्माद्गच्छ दिवं द्विज ॥ ६४

श्रद्धया परया यत् त्वं तपश्चरसि सुव्रत ।

---

1. क-ख—द्विज ।

तस्माद्देवास्तवानेन प्रीता द्विजवरोत्तम ॥ ६५

सर्वस्वमेतद्यस्मात् ते त्यक्तं शुद्धेन चेतसा ।
कृच्छ्रकाले ततस्स्वर्गो जितोऽयं तव कर्मणा ॥ ६६

क्षुधा निर्णुदति प्रज्ञां धर्म्यां बुद्धिं व्यपोहति ।
क्षुधापरिगतज्ञानो धृतिं त्यजति चैव हि ॥ ६७

बुभुक्षां जयते यस्तु स स्वर्गं जयते ध्रुवम् ।
यदा दानरुचेर्भावस् तदा धर्मो नु सिद्ध्यति ॥ ६८

अनवेक्ष्य सुतस्नेहं कलत्रस्नेहमेव च ।
धर्ममेव गुरुं ज्ञात्वा तृष्णा न गणिता त्वया ॥ ६९

[1]द्रव्यागमो नृणां सूक्ष्मः पात्रे दानं ततः परम् ।
[2]कालः परतरो दानाच् छ्रद्धा चापि ततः परा ॥ ७०

स्वर्गद्वारं सुसूक्ष्मं हि नरैर्मोहान्न दृश्यते ।
सङ्गार्गलं लोभकीलं रागगुप्तं दुरासदम् ॥ ७१

तं तु पश्यन्ति पुरुषा जितक्रोधा जितेन्द्रियाः ।
ब्राह्मणास्तपसा युक्ता यथाश्रद्धाप्रदायिनः ॥ ७२

सहस्रशक्तिश्च शतं शतशक्तिर्दशापि च ।
दद्यादपश्च यश्शक्त्या सर्वे तुल्यफलास्स्मृताः ॥ ७३

रन्तिदेवोऽपि नृपतिर् अपः प्रादादकिञ्चनः ।

---

1. क-ख—द्रव्यागमे नृणां सूक्ष्मं पात्रे दानं ।
2. ब—नास्तीदमर्धम्

शुद्धेन मनसा विप्र नाकपृष्ठं ततो गतः ॥ ७४

न धर्मः प्रीयते तात दानैर्दत्तैर्महाफलैः ।
न्यायलब्धैर्यथा सूक्ष्मैश् श्रद्धापूतै[1]स्स तुष्यति ॥ ७५

गोप्रदानसहस्राणि द्विजातिभ्यो नृगो नृपः ।
एकं दत्त्वा परस्वं तु नरकं समवाप्तवान् ॥ ७६

आत्ममांसप्रदानेन शिबिरौशीनरो नृपः ।
प्राप्य पुण्यकृताँल्लोकान् मोदते दिवि सुव्रतः ॥ ७७

विभवेन नृणां पुण्यं स्वशक्त्या स्वार्जितं नृणाम् ।
न यज्ञैर्विविधैर्विप्र यथा न्यायेन सञ्चितैः ॥ ७८

क्रोधो दानफलं हन्ति लोभात् स्वर्गं न गच्छति ।
न्यायवृत्तिर्हि तपसा दानवित् स्वर्गमश्नुते ॥ ७९

न राजसूयैर्बहुभिर् इष्ट्वा विपुलदक्षिणैः ।
न चाश्वमेधैर्बहुभिः फलं सममिदं तव ॥ ८०

सक्तुप्रस्थेन हि जितो ब्रह्मलोकस्त्वयाऽनघ ।
विरजो ब्रह्मसदनं गच्छ विप्र यथेप्सितम् ॥ ८१

सर्वेषां वो द्विजश्रेष्ठ दिव्यं यानमुपस्थितम् ।
आरोहत यथाकामं धर्मोऽस्मि द्विजसत्तम ॥ ८२

पावितो हि त्वया देहो लोके कीर्तिस्स्थिरा च ते ।

---

1. क-ख—स्सुशिष्यते ।

सभार्यस्सहपुत्रश्च सस्नुषश्च दिवं व्रज ॥ ८३

नकुलः—

इत्युक्तवाक्यो धर्मेण यानमारुह्य स द्विजः ।
सभार्यस्सस्नुषश्चापि ससुतश्च दिवं ययौ ॥ ८४

तस्मिन् विप्रे गते स्वर्गं सपुत्रे सस्नुषे तदा ।
भार्याचतुर्थे धर्मज्ञे ततोऽहं निस्सृतो बिलात् ॥ ८५

ततस्तु सक्तुगन्धेन क्लेदेन सलिलस्य च ।
दिव्यपुष्पावमर्दाच्च साधोर्दानलवैश्च तैः ॥ ८६

विप्रस्य तपसा तस्य शिरो मे काञ्चनीकृतम् ॥ ८६॥

तस्य सत्याभिसन्धस्य सूक्ष्मदानेन चैव ह ।
शरीरार्धं च मे विप्राश् शातकुम्भमयं कृतम् ॥ ८७॥

पश्यतेदं सुविपुलं तपसा तस्य धीमतः ।
कथमेवंविधं मे स्यात् अन्यत् पार्श्वमिति द्विजाः ॥ ८८॥

तपोवनानि यज्ञांश्च हृष्टोऽभ्येमि पुनः पुनः ॥ ८९

यज्ञं त्वहमिमं श्रुत्वा कुरुराजस्य धीमतः ।
आशया परया प्राप्तो न चाहं काञ्चनः कृतः ॥ ९०

ततो मयोक्तं तत् पुण्यं प्रशस्य द्विजसत्तमाः ।
सक्तुप्रस्थेन यज्ञोऽयं सम्मितो नेति सर्वथा ॥ ९१

सक्तुप्रस्थलवैस्तैर्हि तदाऽहं काञ्चनीकृतः ।
न हि यज्ञो महानेष सदृशस्तैर्मतो मम ॥ ९२

वैशम्पायनः—

इत्युक्त्वा नकुलस्सर्वान् यज्ञे द्विजवरांस्तदा ।
जगामादर्शनं राजंस् ते च विप्रा ययुर्गृहान् ॥ ९३

[1]एतत् ते सर्वमाख्यातं मया परपुरञ्जय ।
यदाश्चर्यमभूत् तस्मिन्नश्वमेधे महाक्रतौ ॥ ९४

न विस्मयस्ते नृपते यज्ञे कार्यः कथञ्चन ।
ऋषिकोटिसहस्राणि तपोभिर्ये दिवं गताः ॥ ९५

अद्रोहस्सर्वभूतेषु सन्तोषश्शीलमार्जवम् ।
तपो दमश्च सत्यं च [2]प्रदानं चेति सम्मितम् ॥ ९६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥
॥ ९२ ॥ अनुगीतापर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥
[ अस्मिन्नध्याये ९६ श्लोकाः ॥

## ॥ अष्टनवतितमोऽध्यायः ॥

जनमेजयेन नकुलस्य यज्ञनिन्दाकारणं पृष्टेन वैशम्पायनेन तं प्रति सत्यदानतपोभिरेव स्वर्गादिसिद्धौ पशुहिंसाहेतुयज्ञस्य नातिप्रशस्ततरत्वमिति नकुलाभिप्रायवर्णनम् ॥ १ ॥

जनमेजयः—

यज्ञे सक्ता नृपतयस् तपस्सक्ता महर्षयः ।
शान्तिव्यवसिता विप्राश् शमे दम इति प्रभो ॥ १

1. क-ख-घ—इतः सार्धं श्लोकद्वयं नास्ति
2. क-ख—दानं चेति समं मतम्

तस्माद्यज्ञफलैस्तुल्यं न किञ्चिदिह विद्यते ।
इति मे वर्तते बुद्धिस् तथा चैतन्न संशयः ॥ २

यज्ञैरिष्ट्वा च बहवो राजानो द्विजसत्तमाः ।
इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमितो गताः ॥ ३

देवराजस्सहस्राक्षः क्रतुभिर्भूरिदक्षिणैः ।
देवराज्यं महातेजाः प्राप्तवानखिलं विभुः ॥ ४

अतो युधिष्ठिरो राजा भीमार्जुनपुरस्सरः ।
सदृशो देवराजेन समृद्ध्या विक्रमेण च ॥ ५

अथ कस्मात् स नकुलो गर्हयामास तं नृपम् ।
अश्वमेधं महायज्ञं राज्ञस्तस्य महात्मनः ॥ ६

वैशम्पायनः—

यज्ञस्य विधिमग्र्यं वै फलं चैव नरर्षभ ।
गदतश्शृणु मे राजन् यथावदिह भारत ॥ ७

पुरा शक्रस्य यजतस् सर्वे ऊचुर्महर्षयः ।
ऋत्विक्षु कर्म कुर्वत्सु वितते यज्ञकर्मणि ॥ ८

[1]हूयमाने तथा वह्नौ हौत्रे गुणसमन्विते ।
देवेष्वाहूयमानेषु स्थितेषु परमर्षिषु ॥ ९

सुव्रतैस्तैस्तदा विप्रैस् स्वागमैस्सुस्वरैर्नृप ।

1. क—अर्धत्रयं नास्ति

अश्रान्तैश्चापि लघुभिर् अध्वर्युवृषभैस्तथा ॥ १०

आलम्भसमये तस्मिन् गृहीतेषु पशुष्वथ ।
महर्षयो महाराज सम्बभूवुः कृपान्विताः ॥ ११

ततो दीनान् पशून् दृष्ट्वा ऋषयस्ते तपोधनाः ।
ऊचुश्शक्रं समागम्य नायं यज्ञविधिश्शुभः ॥ १२

अपरिज्ञानमेतत् ते महान्तं धर्ममिच्छतः ।
न हि यज्ञे [1]पशुवधो विधिदृष्टः पुरन्दर ॥ १३

[2]धर्मोपघातकस्त्वेष समारम्भस्तव प्रभो ।
नायं धर्मकृते यज्ञो न हिंसा धर्म उच्यते ॥ १४

आगमेनैव ते यज्ञं कुर्वन्तु यदिहेच्छसि ।
विधिदृष्टेन यज्ञेन धर्मस्ते सुमहान् भवेत् ॥ १५

[3]यज बीजैस्सहस्राक्ष त्रिवर्षपरमोत्थितैः ।
एष धर्मो महाञ्छक्र [4]महागुणफलोदयः ॥ १६

शतक्रतुस्तु तद्वाक्यम् ऋषिभिस्तत्त्वदर्शिभिः ।
[5]उक्तं न प्रतिजग्राह मानमोहवशानुगः ॥ १७

तेषां विवादस्सुमहान् जज्ञे शक्रमहर्षिणाम् ।

---

1. अ-क-ग-च—बहुगुणा विधिदृष्टाः ।
2. घ—इतः सार्धं श्लोकत्रयं नास्ति
3. क-ख—यज्ञैर्बीजैः + परमास्थितैः ।
4. क-ख—चिन्तयानोऽथ गम्यते । 5. ग—अर्धचतुष्टयं नास्ति

जङ्गमैस्स्थावरैश्चापि यष्टव्यमिति भारत ॥ १८

ते तु खिन्ना विवादेन ऋषयस्तत्त्वदर्शिनः ।
अभिसन्धाय शक्रेण पप्रच्छुर्नृपतिं वसुम् ॥ १९

ऋषयः—

महाप्राज्ञ कथं यज्ञेष्वागमो नृपते स्मृतः ।
यष्टव्यं पशुभिर्मेध्यैर् अथो बीजैरजैरिति ॥ २०

वैशम्पायनः—

तच्छ्रुत्वा तु वसुस्तेषाम् अविचार्य बलाबलम् ।
यथोपनीतैर्यष्टव्यम् इति प्रोवाच पार्थिवः ॥ २१

एवमुक्ते स नृपतिः प्रविवेश रसातलम् ।
उक्त्वेह वितथं राजंश् चेदीनामीश्वरः प्रभुः* ॥ २२

अन्यायोपगतं द्रव्यं सततं योऽह्यपण्डितः ।
धर्माभिकाङ्क्षी त्यजति न धर्मफलमश्नुते ॥ २३

धर्मवैतंसिको ह्येष पापात्मा पुरुषाधमः ।
ददाति दानं विप्रेभ्यो लोके विश्वासकारकम् ॥ २४

---

* ग—तस्मान्न बोध्यं ह्येकेन बहुज्ञेनापि संशये ।
प्रजापतिमपाहाय स्वयम्भुवमृते प्रभुम् ॥
तेन दत्तानि दानानि पापेनाशुद्धबुद्धिना ।
तानि सर्वाण्यनादृत्य नश्यन्ति विपुलान्यपि ॥
तस्याधर्मप्रवृत्तस्य हिंसकस्य दुरात्मनः ।
दानेन कीर्तिर्भवति न प्रेत्येह च दुर्मतेः ॥ [अधिकः पाठः]

पापेन कर्मणा विप्रो धनं लब्ध्वा निरङ्कुशः ।
रागमोहान्वितस्सोऽन्ते कलुषां गतिमश्नुते ॥　२५

[1]तेन दानानि दत्तानि पापेन हतबुद्धिना ।
तानि सत्वमनासाद्य नश्यन्ति विपुलान्यपि ॥　२६

तस्याधर्मे प्रवृत्तस्य हिंसकस्य दुरात्मनः ।
एतेनाकीर्तिर्भवति प्रेत्य चेह च दुर्मतेः ॥　२७

अपि संशयबुद्धिर्हि लोभमोहवशानुगः ।
[2]यज्ञं करोति भूतानि हिंसयन् पापचेतनः ॥　२८

[3]एवं लब्ध्वा धनं मोहाद् यजते यो ददाति च ।
स कृत्वा कर्मणा तेन न सिद्ध्यति दुरागमात् ॥　२९

[4]इच्छन् मूलं फलं शाकम् उदपानं तपोधनः ।
दानं विभवतो दत्त्वा ततस्स्वर्याति धार्मिकः ॥　३०

एष धर्मो महापुण्यो दानं भूतदया तथा ।
ब्रह्मचर्यं तथा सत्यम् अनुक्रोशो धृतिः क्षमा ॥　३१
सनातनस्य धर्मस्य फलमेतत् सनातनम् ॥　३१॥
श्रूयन्ते हि पुरा विप्रा विश्वामित्रादयो नृपाः ॥　३२
विश्वामित्रोऽसितश्चैव जनकश्च महीपतिः ।

---

1. पूर्वपुटे *ग अङ्केन अधिकपाठतया मुद्रितं मूलमातृकायामत्र दृश्यते ।
2. ग—उद्वेजयति भूतानि पापेनाशुभबुद्धिना ।
3. ग—एवं लब्ध्वा धनं मोहाद् यो हि दद्याद्यजेत वा ।
4. ग—उञ्छमूलफलं शाकमुदपात्रं तपोधनाः ।

कक्षसेनार्ष्टिषेणौ च सिन्धुद्वीपश्च पार्थिवः ॥ ३३

एते चान्ये च बहवस् सिद्धिं परमिकां गताः ।
नृपास्सत्यैश्च दानैश्च न्यायलब्धैस्तपोधनाः ॥ ३४

ब्राह्मणाः क्षत्रिया वैश्याश् शूद्रा ये चाश्रितास्तपः ।
दानधर्माश्रिताश्शुद्धास् ते स्वर्गं यान्ति भारत ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥
॥ ९२ ॥ अनुगीतापर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥
[ अस्मिन्नध्याये ३५ श्लोकाः ]

---

## ॥ एकोनशततमोऽध्यायः ॥

---

वैशम्पायनेन जनमेजयं प्रति पशुहिंसां विनैव ध्यानदानादिभिरेव यज्ञफलसंसिद्धौ दृष्टान्ततयाऽगस्त्ययज्ञप्रकारकथनम् ॥ १ ॥

---

जनमेजयः—

धर्मागतेन त्यागेन भगवन् सर्वमस्ति चेत् ।
एतन्मे सर्वमाचक्ष्व कुशलो ह्यसि भाषितुम् ॥ १

तस्योञ्छवृत्तेर्यद्वृत्तं सक्तुदानं महाफलम् ।
कथितं मे महद् ब्रह्मंस् तथ्यमेतदसंशयम् ॥ २

कथं हि सर्वयज्ञेषु निश्चयः परमो भवेत् ।
एतदर्हसि मे वक्तुं निखिलेन द्विजर्षभ ॥ ३

**वैशम्पायनः—**

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
अगस्त्यस्य महायज्ञे पुरा वृत्तमरिन्दम ॥ ४

पुराऽगस्त्यो महातेजा दीक्षां द्वादशवार्षिकीम् ।
प्रविवेश महाराज सर्वभूतहिते रतः ॥ ५

तत्राग्निकल्पा होतारश्चासन् सर्वे महात्मनः ।
मूलाहारा निराहाराश् चाश्मकुट्टा मरीचिपाः ॥ ६

परिपुष्टिका वैघसिकास् सम्प्रक्षालास्तथैव च ।
यतयो भिक्षवश्चात्र बभूवुः पर्यवस्थिताः ॥ ७

सर्वे प्रत्यक्षधर्माणो जितक्रोधा जितेन्द्रियाः ।
दमे स्थिताश्च सर्वे ते दम्भमोहविवर्जिताः ॥ ८

वृद्धैश्शुद्धैस्तथा नित्यम् इन्द्रियैश्चाप्यवाहिताः ।
उपासते स्म तं यज्ञं भुञ्जानास्ते महर्षयः ॥ ९

यथाशक्त्या भगवता तदन्नं समुपार्जितम् ।
तस्मिन् सत्रे तु यत् किञ्चित् अयोग्यं तत्र नाभवत् ॥ १०

यथा ह्यनेकैर्मुनिभिर् बहवः क्रतवः कृताः ॥ १०॥

एवंविधे त्वगस्त्यस्य वर्तमाने महाध्वरे ।
न ववर्ष सहस्राक्षस् तदा भरतसत्तम ॥ ११॥

ततः कर्मान्तरे राजन्नगस्त्यस्य महात्मनः ।

कथेयमभिनिर्वृत्ता मुनीनां भावितात्मनाम् ॥ १२॥

मुनयः—

अगस्त्यो यजमानोऽयं ददात्यन्नं विमत्सरः ।
न च वर्षति पर्जन्यः कथमन्नं भविष्यति ॥ १३॥

सत्रं चेदं महद्विप्रा मुनेर्द्वादशवार्षिकम् ।
न हि वर्षति देवश्च वर्षाण्येतानि द्वादश ॥ १४॥

एतद्ब्रुवन्तस्संश्चिन्त्य महर्षेरस्य धीमतः ।
अगस्त्यस्यातितपसः कर्तुमर्हन्त्यनुग्रहम् ॥ १५॥

वैशम्पायनः—

इत्येवमुक्ते वचने ततोऽगस्त्यः प्रतापवान् ।
प्रोवाचेदं वचो वाग्मी प्रसाद्य शिरसा मुनीन् ॥ १६॥

अगस्त्यः—

यदि द्वादश वर्षाणि न वर्षिष्यति वासवः ।
चिन्तायज्ञं करिष्यामि विधिरेष सनातनः ॥ १७॥

यदि द्वादश वर्षाणि न च वर्षति वासवः ।
स्पर्शयज्ञं करिष्यामि विधिरेष सनातनः ॥ १८॥

यदि द्वादश वर्षाणि न च वर्षति वासवः ।
ध्यानात्मना हरिष्यामि यज्ञानेतान् यतव्रतः ॥ १९॥

बीजयज्ञो मयाऽयं भो बहुवर्षसमाचितः ।
बीजैः कृतैः करिष्ये च नात्र विघ्नो भविष्यति ॥ २०॥

नेदं शक्यं वृथा कर्तुं मम सत्रं कथञ्चन ।
न वर्षिष्यति वा देवो न वा देवो भविष्यति ॥　　२१॥
अथवाऽभ्यर्थनामिन्द्रः कुर्यान्न त्विह कामतः ।
स्वयमिन्द्रो भविष्यामि जीवयिष्यामि च प्रजाः ॥　　२२॥
यो यदाहारदानश्च स तथैव भविष्यति ।
विशेषं चैव कर्तास्मि पुनः पुनरतीव हि ॥　　२३॥
अद्येह स्वर्णमभ्येतु यच्चान्यद्वसु दुर्लभम् ।
त्रिषु लोकेषु यच्चास्ति तदिहागच्छतु स्वयम् ॥　　२४॥
दिवि चाप्सरसां सङ्घास् सगन्धर्वास्सकिन्नराः ।
विश्वावसुश्च ये चान्ये ते च युष्मानुपासताम् ॥　　२५॥
उत्तरेभ्यः कुरुभ्यश्च यत् किञ्चिद्वसु विद्यते ।
सर्वं तदिह यज्ञे मे स्वयमेवोपतिष्ठताम् ॥　　२६॥
स्वर्गस्स्वर्गसदश्चैव धर्मश्च स्वयमेव मे ॥　　२७

**वैशम्पायनः—**

इत्युक्ते सर्वमेवैतद् अभवत् तस्य धीमतः ।
[1]तस्य दीप्ताग्निमहसस् त्वगस्त्यस्यातितेजसा ॥　　२८
ततस्ते मुनयो दृष्ट्वा मुनेस्तस्य तपो बलम् ।
विस्मिता वचनं प्राहुर् इदं सर्वे महार्थवत् ॥　　२९

**ऋषयः—**

प्रीतास्स्म तव वाक्येन न त्विच्छामस्तपोधन ।

---

1. ग-कोश एकस्मिन्नेवेदमर्धं दृश्यते ।

स्वैरेव यज्ञैस्तुष्टास्स्म न्यायेनेच्छामहे वयम् ॥ ३०

यज्ञदीक्षास्तथा होमान् यच्चान्यन्मृगयामहे ।
[1]तन्नोऽस्तु स्वर्गदैर्यज्ञैर् नान्यतो मृगयामहे ॥ ३१

न्यायेनोपार्जिताहारास् स्वकर्मनिरता वयम् ।
देवांश्च ब्रह्मचर्येण न्यायेन प्रार्थयामहे ॥ ३२

न्यायेन रक्षिताः काले गृहेभ्यो निस्सृता वयम् ।
[2]दृष्टैश्च विधिवद् द्वारैस् तपस्तप्स्यामहे वयम् ॥ ३३

भवतस्सम्यगेषा हि बुद्धिर्हिंसाविवर्जिता ।
एतामहिंसां यज्ञेषु ब्रूयास्त्वं सततं विभो ॥ ३४

प्रीतास्ततो भविष्यामो वयं द्विजवरोत्तम ।
विसर्जितास्समाप्तौ च सत्रादस्माद्व्रजेमहि ॥ ३५

वैशम्पायनः—

तथा कथयतामेवं देवराजः पुरन्दरः ।
ववर्ष सुमहातेजा दृष्ट्वा तस्य तपोबलम् ॥ ३६

असमाप्तौ च यज्ञस्य तस्यामितपराक्रमः ।
निकामवर्षी देवेन्द्रो बभूव जनमेजय ॥ ३७

प्रसादयामास च तम् अगस्त्यं त्रिदशेश्वरः ।
स्वयमभ्येत्य राजर्षे पुरस्कृत्य बृहस्पतिम् ॥ ३८

---

1. अ—तन्नोसुखोषितैर्यज्ञै । ख—तन्नोऽस्तु सुषुवैर्यं । ग-इदमर्धं नास्ति
2. अ-ग—इदमर्धं नास्ति

ततो यज्ञसमाप्तौ तान् विससर्ज महामुनीन् ।
अगस्त्यः परमप्रीतः पूजयित्वा यथाविधि ॥ ३९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आश्वमेधिकपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥
॥ ९२ ॥ अनुगीतापर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥
[ अस्मिन्नध्याये ३९ श्लोकाः ]

---

## ॥ शततमोऽध्यायः ॥

वैशम्पायनेन जनमेजयं प्रति नकुलस्य निजस्वरूपकथनपूर्वकं तस्य नकुलत्वप्राप्तिविमोक्षकारणाभिधानम् ॥ १ ॥

---

जनमेजयः—

कोऽसौ नकुलरूपेण शिरसा काञ्चनेन ह ।
प्राह मानुषया वाचा ह्येतत् पृष्टो वदस्व मे ॥ १

वैशम्पायनः—

एतत् पूर्वं न पृष्टोऽहं न चास्माभिः प्रभाषितम् ।
श्रूयतां नकुलो योऽसौ यथा वाक् चास्य मानुषी ॥ २
श्राद्धं सङ्कल्पयामास जमदग्निः पुरा किल ।
होमधेनुस्तमागच्छत् स्वयं चापि दुदोह ताम् ॥ ३
तत् क्षीरं स्थापयामास [1]हेमभाण्डे शुभे शुचौ ।

---

1. क-ख—नवभाण्डे तथा ।

[1]क्रोधो नकुलरूपेण पिठरं पर्यधर्षयत् ॥ ४

जिज्ञासुस्तमृषिश्रेष्ठं किं कुर्याद्विप्रिये कृते ।
इति सञ्चिन्त्य दुर्मेधा धर्षयामास तत् पयः ॥ ५

तमाज्ञाय मुनिः क्रोधं नैवास्मै चुकुपे ततः ।
स तु क्रोधस्तमासाद्य प्राञ्जलिर्मूर्तिमान् स्थितः ॥ ६

जितोऽस्मीति भृगुश्रेष्ठं भृगवो ह्यतिरोषणाः ।
लोके मिथ्याप्रवादोऽयं यत् त्वयाऽस्मि पराजितः ॥ ७

सोऽहं त्वयि स्थितो ह्यद्य क्षमावति महात्मनि ।
बिभेमि तपसस्साधो प्रसादं कुरु मे प्रभो ॥ ८

जमदग्निः—

सम्यग् दृष्टोऽसि मे क्रोध गच्छ त्वं विगतज्वरः ।
न ममापकृतं तेऽद्य न मन्युर्विद्यते त्वयि ॥ ९

यानुद्दिश्य तु सङ्कल्पः पयसोऽद्य कृतो मया ।
पितरस्ते महाभागास् तेभ्यो बुद्ध्यस्व गम्यताम् ॥ १०

वैशम्पायनः—

इत्युक्तो जातसन्त्रासस् तत्रैवान्तरधीयत ।
पितृणामभिषङ्गात् तु नकुलत्वमुपागतः ॥ ११

स तान् प्रसादयामास शापस्यान्तो भवेदिति ।

---

1. ग—तस्य क्रोधस्वरूपेण पिठरं धर्म आविशत् ।
अ-क-ख-च—तस्य क्रोधस्वरूपेण पिठरं पर्यवेषयत् ।

तैश्चाप्युक्तो यदा धर्मं क्षेप्स्यसे मोक्ष्यसे तदा ॥ १२

इत्युक्तो यज्ञियान् देशान् धर्मारण्यानि चैव ह ।

जुगुप्सन् परिधावन् स तं यज्ञं समुपासदत् ॥ १३

धर्मपुत्रमथाक्षिप्य सक्तुप्रस्थेन तेन सः ।

मुक्तशापस्ततः क्रोधो धर्मो ह्यासीद्युधिष्ठिरः ॥ १४

एवमेतद्यथा वृत्तं तस्य यज्ञे महात्मनः ।

[1]पश्यतां चापि नस्तत्र नकुलोऽन्तर्हितस्तदा ॥ १५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि शततमोऽध्यायः ॥ १०० ॥
॥ ९२ ॥ अनुगीतापर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥
[ अस्मिन्नध्याये १५ श्लोकाः ]

## ॥ एकाधिकशततमोऽध्यायः ॥*

युधिष्ठिरेण कृष्णं प्रति वैष्णवधर्मप्रशंसनपूर्वकं तत्कथनप्रार्थना ॥ १ ॥ वसिष्ठादिभिस्तच्छुश्रूषया तत्समीपोपसर्पणम् ॥ २ ॥ कृष्णेन युधिष्ठिरादीन् प्रति वैष्णवधर्मप्रशंसनपूर्वकं स्वमहिमानुबोधनम् ॥ ३ ॥

जनमेजयः—

अश्वमेधे पुरा वृत्ते केशवं केशिसूदनम् ।

धर्मसंशयमुद्दिश्य किमपृच्छत् पितामहः ॥ १

1. क-ख—इदमर्धं नास्ति

* इत आरभ्य आपर्वसमाप्ति प्रत्यध्यायं दाक्षिणात्यमातृकासु सर्वत्र "इत्याश्वमेधिके वैष्णवधर्मशास्त्रे" इति दृश्यते ।

वैशम्पायनः—

पश्चिमेनाश्वमेधेन यदा स्नातो युधिष्ठिरः ।
तदा राजन् नमस्कृत्य केशवं वाक्यमब्रवीत् ॥ २

युधिष्ठिरः—

भगवन् वैष्णवा धर्माः किंफलाः किंपरायणाः ।
किं धर्ममधिकृत्याथ भवतोत्पादिताः पुरा ॥ ३

यदि तेऽहमनुग्राह्यः प्रियो वा मधुसूदन ।
श्रोतव्या यदि वा कृष्ण तान् मे कथय सुव्रत ॥ ४

पवित्राः किल ते धर्मास् सर्वे पापप्रणाशनाः ।
सर्वधर्मोत्तमाः पुण्या भगवंस्त्वन्मुखोद्गताः ॥ ५

यच्छ्रुत्वा ब्रह्महा गोघ्नो मातृहा गुरुतल्पगः ।
पाकभेदी कृतघ्नश्च सुरापो ब्रह्मविक्रयी ॥ ६

मित्रविश्वासघाती च भ्रूणहा वीरहा तथा ।
[1]तपोविक्रायिणश्चैव दानविक्रयिणस्तथा ॥ ७

आत्मविक्रायिणो मूढा जीवेद्यश्च विकर्मभिः ।
पापाचारा नैकृतिका डाम्भिका दूषकास्तथा ॥ ८

रसभेदकरा ये च ये च स्युर्ब्रह्मदूषकाः ।
शूद्रप्रेष्यकराश्चोरा विप्रा ये च पुरोहिताः ॥ ९

निक्षेपहारिणस्त्रीघ्नास् तथा ये पारदारिकाः ।

1. ख—अर्धद्वयं नास्ति

एते चान्ये च बहवो मुच्यन्ते तेऽपि किल्बिषात् ॥　　१०

तानाचक्ष्व सुरश्रेष्ठ त्वद्भक्तस्य ममाच्युत ।　　१०॥

वैशम्पायनः—

इत्येवं कथिते देवे धर्मपुत्रेण संसदि ।

वसिष्ठाद्यास्तपोयुक्ता मुनयस्तत्त्वदर्शिनः ॥　　११॥

श्रोतुकामाः परं गुह्यं भक्तिमन्तो निरत्ययाः ।

तथा भागवताश्चैव ततस्तं पर्यवारयन् ॥　　१२॥

युधिष्ठिरः—

[1]तत्त्वतस्तव भावेन पादमूलमुपागतम् ।

यदि जानासि मां भक्तं स्निग्धं वा भक्तवत्सल ॥　　१३॥

धर्म[2]गुह्यानि सर्वाणि वेत्तुमिच्छामि तत्त्वतः ।

धर्मान् कथय देवेश यद्यनुग्रहभागहम् ॥　　१४॥

श्रुता मे मानवा धर्मा वासिष्ठाः काश्यपास्तथा ।

गार्गीया गौतमीयाश्च तथा [3]गोपालकस्य च ॥　　१५॥

पराशरकृताः पूर्वं आत्रेयस्य च धीमतः ।

औमा माहेश्वराश्चैव नन्दिधर्माश्च पावनाः ॥　　१६॥

ब्रह्मणा कथिता ये च कौमाराश्च श्रुता मया ।

---

1. अ—इदमर्धं नास्ति　　2. क-ख-ग—युक्तानि ।

3. अ—कापालिकस्य च । घ—गोपालितस्य च ।

[1]धूमायनकृता धर्माः काण्डवैश्वानरा अपि ॥ १७॥
भार्गवा याज्ञवल्क्याश्च [2]मार्कण्डेयकृतास्तथा ।
भारद्वाजकृता ये च बृहस्पतिकृताश्च ये ॥ १८॥

कुणेश्च कुणिबाहोश्च विश्वामित्रकृताश्च ये ।
सुमन्तुजैमिनिकृताश् शाकुनेयास्तथैव च ॥ १९॥

पुलस्त्यपुलहोद्गीताः पावकीयास्तथैव च ।
अगस्त्यगीता मौद्गल्याश् शाण्डिल्या[3]श्शलभायनाः ॥ २०॥

वालखिल्यकृता ये च ये च सप्तर्षिभिः कृताः ।
आपस्तम्बकृता धर्माश् शङ्खस्य लिखितस्य च ॥ २१॥

प्राजापत्यास्तथा याम्या माहेन्द्राश्च श्रुता मया ।
वैयाघ्रव्यासगीताश्च विभण्डककृताश्च ये ॥ २२॥

नारदीयाश्श्रुता धर्माः कापोताश्च श्रुता मया ।
तथा विदुरवाक्यानि भृगोरङ्गिरसस्तथा ॥ २३॥

क्रौञ्चा मृदङ्गगीताश्च सौर्या हारीतकास्तथा ।
पिङ्गवर्मकृताश्चापि [4]कौन्तपाः पांसुबालिकाः ॥ २४॥

---

1. क-ख-ग—धूम्रायण + काण्वा वैश्वा नरा ।
2. क-ख-घ—माण्डेयाः काश्यपास्तथा ।
   ग—माण्डव्याः काश्यपास्तथा ।
3. क-ख—स्सौलभायनाः ।
4. क—क्रादपापत् स । ख—क्रान्तापापाः । अ—गातपाहं सुबालिकाः ।

उद्दालककृता धर्मा औशनस्यास्तथैव च ।
वैशम्पायनगीताश्च ये चान्येऽप्येवमादयः ॥ २५॥

एतेभ्यस्सर्वधर्मेभ्यो देव त्वन्मुखनिस्सृताः ।
[1]पावनत्वात् पवित्रत्वाद् विशिष्टा इति मे मतिः ॥ २६॥

तस्माद्धि त्वां प्रपन्नस्य त्वद्भक्तस्य च भावतः ।
युष्मदीयान् परान् धर्मान् पुण्यान् कथय मेऽच्युत ॥ २७॥

वैशम्पायनः—

एवमुक्तस्तु धर्मज्ञो धर्मपुत्रेण माधवः ।
उवाच धर्मान् सूक्ष्मार्थान् धर्मपुत्रस्य धीमतः ॥ २८॥

श्रीभगवान्—

एवं ते यस्य कौन्तेय यत्नो धर्मेषु सुव्रत ।
त्वत्समो दुर्लभो लोके न कश्चिदिह विद्यते ॥ २९॥

धर्मश्श्रुतो वा दृष्टो वा कथितो वा कृतोऽपि वा ।
अनुमोदितो वा राजेन्द्र पुनातीह सदा नरम् ॥ ३०॥

धर्मः पिता च माता च धर्मोऽथ सुहृदस्तथा ।
धर्मो भ्राता सखा चैव धर्मस्स्वामी परन्तप ॥ ३१॥

धर्मादर्थश्च कामश्च धर्माद्भोगास् सुखानि च ।
धर्मादैश्वर्यमेवाग्र्यं धर्मात् स्वर्गगतिः परा ॥ ३२॥

धर्मोऽयं सेवितश्शुद्धस् त्रायते महतो भयात् ।

---

1. ख—अर्धद्वयं नास्ति

द्विजत्वं देवतात्वं च धर्मः प्रापयते नरम् ॥ ३३॥

यदा च क्षीयते पापं कालेन पुरुषस्य तु ।
तदा सञ्जायते बुद्धिर् धर्मं कर्तुं युधिष्ठिर ॥ ३४॥

जन्मान्तरसहस्रैस्तु मानुषत्वं हि दुर्लभम् ।
तल्लब्ध्वाऽपीह यो धर्मं न करोति स वञ्चितः ॥ ३५॥

[1]कुत्सिताश्च दरिद्राश्च विरूपा व्याधितास्तथा ।
[2]परद्वेष्याश्च मूर्खाश्च न तैर्धर्मः कृतः पुरा ॥ ३६॥

ये तु दीर्घायुषश्शूराः पण्डिता भोगिनस्तथा ।
नीरोगा रूपसम्पन्नास् तैर्धर्मास्सुकृताः पुरा ॥ ३७॥

एवं धर्मः कृतस्सद्यो नयते गतिमुत्तमाम् ।
अधर्मस्सेव्यमानस्तु तिर्यग्योनिं नयत्यमुम् ॥ ३८॥

इदं रहस्यं कौन्तेय श्रूयतामिदमुत्तमम् ।
कथयिष्ये परं गुह्यं मम भक्तस्य पाण्डव ॥ ३९॥

इष्टस्त्वमसि मेऽत्यर्थं प्रपन्नश्चासि मां सदा ।
परमार्थमपि ब्रूयां किं पुनर्धर्मसंहिताम् ॥ ४०॥

इदं मे मानुषं जन्म कृतमात्मनि मायया ।
धर्मसंस्थापनायैव दुष्टानां [3]शासनाय च ॥ ४१॥

---

1. क-ख—कुपिताश्च । ग—कुत्सिता ये ।
2. क-ग—परप्रेष्याश्च । ख—परप्रेक्ष्याश्च ।
3. अ-ब—नाशनाय च ।

मानुष्यं भावमापन्नं ये मां गृह्णन्त्यवज्ञया ।
संसरन्तीह ते मूढास् तिर्यग्योनिष्वनेकशः ॥ ४२॥

ये च मां सर्वभूतस्थं पश्यन्ति ज्ञानचक्षुषः ।
मद्भक्तांस्तान् सदा युक्तान् मत्समीपं नयाम्यहम् ॥ ४३॥

मद्भक्ता न विनश्यन्ति मद्भक्ता वीतकल्मषाः ।
मद्भाक्तानां तु मानुष्ये सफलं जन्म पाण्डव ॥ ४४॥

अपि पापेष्वभिरता मद्भक्ताः पाण्डुनन्दन ।
मुच्यन्ते [1]पातकैस्सर्वैः पद्मपत्रमिवाम्भसा ॥ ४५॥

जन्मान्तरसहस्रेषु तपसा भावितात्मनाम् ।
मद्भक्तिर्विद्यते तात मनुष्याणां न संशयः ॥ ४६॥

यच्च रूपं परं गुह्यं कूटस्थमचलं ध्रुवम् ।
न दृश्यते तथा देवैर् मद्भक्तैर्दृश्यते यथा ॥ ४७॥

अपरं यच्च मे रूपं प्रादुर्भावेषु दृश्यते ।
तदर्चयन्ति सर्वार्थैस् सर्वभूतानि पाण्डव ॥ ४८॥

कल्पकोटिसहस्रेषु व्यतीतेष्वागतेषु च ।
दर्शयामि तु यद्रूपं तत् प्रपश्यन्ति मे सुराः ॥ ४९॥

स्थित्युत्पत्तिप्लवकरं यो मां ज्ञात्वा प्रपद्यते ।
अनुगृह्णाम्यहं तं वै संसारान्मोचयामि च ॥ ५०॥

---

1. क-ख—सर्वपापेभ्यः ।

अहमादिर्हि देवानां सृष्टा ब्रह्मादयो मया ।
प्रकृतिं स्वामवष्टभ्य जगत् सर्वं सृजाम्यहम् ॥ ५१॥

तमोमूलोऽहमव्यक्तो रजोमध्यः प्रतिष्ठितः ।
ऊर्ध्वं सत्त्वविशालोऽहं ब्रह्मादिस्तम्बसंज्ञितः ॥ ५२॥

मूर्धानं मे दिवं विद्धि चन्द्रादित्यौ च लोचने ।
[1]गावोऽग्निर्ब्राह्मणो वक्त्रं मारुतश्श्वसनं च मे ॥ ५३॥

दिशो मे बाहवश्चाष्टौ नक्षत्राणि विभूषणम् ।
अन्तरिक्षमुरो विद्धि सर्वभूतप्रकाशकम् ॥ ५४॥

मार्गो मेघानिलाभ्यां तु यन्ममोदरमव्ययम् ॥ ५५

पृथिवीमण्डलं यद्वै द्वीपार्णवनगैर्युतम् ।
सर्वसन्धारणोपेतं पादौ मम युधिष्ठिर ॥ ५६

स्थितो ह्येकगुणः खेऽहं द्विगुणश्चास्मि मारुते ।
त्रिगुणोऽग्नौ स्थितोऽहं वै सलिले तु चतुर्गुणः ॥ ५७

शब्दाद्या ये गुणाः पञ्च महाभूतेषु पञ्चसु ।
तन्मात्रासंस्थितस्सोऽहं पृथिव्यां पञ्चधा स्थितः ॥ ५८

अहं सहस्रशीर्षस्तु सहस्र[2]वदनेक्षणः ।
सहस्रबाहूदरभृत् सहस्राक्षस्सहस्रपात् ॥ ५९

1. क-ख-ग—देवाग्निर्ब्राह्मणा वक्त्रं + नश्च मे ।
2. क-ख-ग-घ-च—चरणे ।

धृत्वोर्वी सर्वतस्सम्यग् अत्यतिष्ठद् दशाङ्गुलम् ।
सर्वभूतात्मभूतस्थस् सर्वव्यापी नरो ह्यहम् ॥ ६०

[1]अचिन्त्योऽहमनन्तोऽहम् अजरोऽहमजो ह्यहम् ।
अनाद्योऽहमवध्योऽहम् अप्रमेयोऽहमव्ययः ॥ ६१

निर्गुणोऽहं निगूढात्मा नित्योऽहं निर्ममोऽपि च ।
निर्द्वन्द्वो निर्विकारोऽहं निदानं चामृतस्य ह ॥ ६२

स्वधा चाहं सुधा चाहं स्वाहाकारो नराधिप ॥ ६२॥
तेजसा तपसा चाहं भूतग्रामं चतुर्विधम् ।
स्नेहपाशगुणैर्बद्ध्वा धारयाम्यात्ममायया ॥ ६३॥
चातुराश्रमधर्मोऽहं चातुर्होत्रफलाशनः ।
चतुर्मूर्तिश्चतुर्व्यूहश् चतुराश्रमभाजनम् ॥ ६४॥
संहृत्याहं जगत् सर्वं कृत्वा वै गर्भमात्मनः ।
शयामि दिव्ययोगेन प्रलयेषु युधिष्ठिर ॥ ६५॥
सहस्रयुगपर्यन्तां ब्राह्मीं रात्रिं महार्णवे ।
स्थित्वा सृजामि भूतानि जङ्गमानि स्थिराणि च ॥ ६६॥
कल्पे कल्पे च भूतानि संहरामि सृजामि च ।
न च मां तानि जानन्ति मायया मोहितानि ह ॥ ६७॥

---

1. ख-घ—नास्तीदमर्धम्
ग—अमलोऽहमनाथोऽहम् अचलोऽहमजो ह्यहम् । [पाठान्तरम्]

मम चैवान्धकारस्य मार्गितव्यस्य नित्यशः ।
प्रशान्तस्येव दीपस्य गतिर्नैवोपलभ्यते ॥ ६८॥

न तदस्ति क्वचिद्राजन् यत्राहं न प्रतिष्ठितः ।
न च तद्विद्यते भूतं मयि यन्न प्रतिष्ठितम् ॥ ६९॥

यावन्मात्रं भवेद्भूतं स्थूलसूक्ष्ममिदं जगत् ।
जीवभूतो ह्यहं तस्मिस् तावन्मात्रप्रतिष्ठितः ॥ ७०॥

किञ्चात्र बहुनोक्तेन सत्यमेतद्ब्रवीमि ते ।
यद्भूतं यद्भविष्यद्वा तत् सर्वमहमेव तु ॥ ७१॥

मया सृष्टानि भूतानि मन्मयानि च पाण्डव ।
मामेव न विजानन्ति मायया मोहितानि मे ॥ ७२॥

एवं सर्वं जगदिदं सदेवासुरमानुषम् ।
मत्तः प्रभवते राजन् मय्येव [1]प्रविलीयते ॥ ७३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥*

॥ ९२ ॥ अनुगीतापर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

[ अस्मिन्नध्याये ७३॥ श्लोकाः ]

## ॥ द्व्यधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति चातुर्वर्ण्यधर्मनिरूपणम् ॥ १ ॥

वैशम्पायनः—

[1]एवमात्मोद्भवं सर्वं जगदुद्दिश्य केशवः ।
धर्मान् धर्मात्मजस्यैव [2]पुण्यानकथयत् प्रभुः ॥ १

श्रीभगवान्—

[3]शृणु पाण्डव तत्त्वेन पवित्रं पापनाशनम् ।
कथ्यमानं मया पुण्यं धर्मशास्त्रफलं महत् ॥ २

यश्शृणोति शुचिर्भूत्वा एकचित्तस्तपोयुतः ।
स्वर्ग्यं यशस्यमायुष्यं धर्म्यं ज्ञेयं युधिष्ठिर ॥ ३

[4]श्रद्दधानस्य तस्येह यत् पापं पूर्वसञ्चितम् ।
विनश्यत्याशु तत् सर्वं मद्भक्तस्य विशेषतः ॥ ४

वैशम्पायनः—

एवं श्रुत्वा वचः पुण्यं [5]सत्यं केशवभाषितम् ।
प्रहृष्टमनसो भूत्वा चिन्तयन्तोऽद्भुतं परम् ॥ ५

---

1. अ—एवं श्रुत्वा वचः पुण्यं सत्यं केशवभाषितम् ।
प्रहृष्टमनसो भूत्वा चिन्तयन्तोऽद्भुतं परम् ॥ [अधिकः पाठः]
2. ख-घ—यत् पापं पूर्वसञ्चितम् ।
3. अ-ख-घ—अर्धचतुष्टयं नास्ति
4. ख-घ—इदमर्धमपि नास्ति
5. इतः पादषट्कं न दृश्यते ।

देवब्रह्मर्षयस्सर्वे गन्धर्वाप्सरसस्तथा ।
भूतयक्षग्रहगणा गुह्यका भुजगास्तथा ॥ ६

वालखिल्या महात्मानो योगिनस्तत्त्वदर्शिनः ।
तथा भागवताश्चापि पञ्चकालमुपासकाः ॥ ७

कौतूहलसमाविष्टाः प्रहृष्टाः परमर्षयः ।
श्रोतुकामाः परं गुह्यं वैष्णवं धर्मशासनम् ॥ ८

हृदि कर्तुं च तद्वाक्यं प्रणेमुश्शिरसा तदा ॥ ८॥

ततस्तान् वासुदेवेन दृष्टान् सौम्येन चक्षुषा ।
विमुक्तपापानालोक्य प्रणम्य शिरसा हरिम् ॥ ९॥

पप्रच्छ केशवं धर्मान् धर्मपुत्रः प्रतापवान् ॥ १०

युधिष्ठिरः—

कीदृशी ब्राह्मणस्याथ कीदृशी क्षत्रियस्य वै ।
वैश्यस्य कीदृशी देव गतिश्शूद्रस्य कीदृशी ॥ ११

कथं बध्येत पापेन ब्राह्मणस्तु यमालये ।
क्षत्रियो वाऽथ वैश्यो वा शूद्रो वा बध्यते कथम् ॥ १२

एतत् कथय देवेश लोकनाथ नमोऽस्तु ते ॥ १२॥

वैशम्पायनः—

स पृष्टः केशवोऽप्येवं धर्मपुत्रेण धीमता ।
उवाच संसारगतिं चातुर्वर्ण्यस्य कर्मजाम् ॥ १३॥

श्रीभगवान्—

शृणु वर्णक्रमेणैव धर्मं धर्मभृतां वर ।
नास्ति किञ्चिन्नरश्रेष्ठ ब्राह्मणस्य तु दुष्कृतम् ॥ १४॥

[1]शिखायज्ञोपवीती स्यात् सन्ध्यां ये चाप्युपासते ।
यैश्च पूर्णाहुतिः प्राप्ता विधिवज्जुह्वते च ये ॥ १५॥

वैश्वदेवं च ये कुर्युः पूजयन्त्यातिथींश्च ये ।
नित्यं स्वाध्यायशीलाश्च [2]जपयज्ञपरास्तथा ॥ १६॥

सायंप्रातर्हुताशाश्च शूद्रभोजनवर्जिताः ।
डम्भानृतविनिर्मुक्तास् स्वदारनिरतास्सदा ॥ १७॥

पञ्चयज्ञपराश्चैव येऽग्निहोत्रमुपासते ॥ १८

[3]दहन्ति दुष्कृतं येषां हूयमानास्त्रयोऽग्नयः ।
नष्टदुष्कृतकर्माणो ब्रह्मलोकं व्रजन्ति ते ॥ १९

ब्रह्मलोके ततः कामं गन्धर्वैर्ब्रह्मगायनैः ।
उपगीयमानाः प्रयतैः पूज्यमानास्स्वयम्भुवा ॥ २०

ब्रह्मलोके प्रमोदन्ते यावदाभूतसम्प्लवम् ॥ २०॥

क्षत्रियोऽपि स्थितो राज्ये स्वधर्मं परिपालयन् ।

---

1. क-ख-घ—ये स्थितास्स्युस्सदाध्यात्मे ।
   ग-च—नित्यं यज्ञोपवीती स्यात् ।
2. क-ख-ग—पञ्चयज्ञपरायणाः ।
3. अ-ख-ग-घ—इदमर्धं नास्ति

सम्यक् प्रजाः पालयित्वा स्वधर्मनिरतस्सदा ॥ २१

यज्ञदानरतो धीरस् स्वदारनिरतश्शुचिः ।
शास्त्रानुकारी तत्त्वज्ञः प्रजाकार्यपरायणः॥ २२

विप्रेभ्यः कामदो नित्यं भृत्यानां भरणे रतः ।
सत्यसन्धश्शुचिर्नित्यं लोभडम्भविवर्जितः ॥ २३।

क्षत्रियोऽप्युत्तमां याति गतिं देवनिषेविताम् ॥ २४

तत्र दिव्याप्सरोभिस्तु गन्धर्वैश्च प्रयत्नतः ।
सेव्यमानो महातेजाः क्रीडते शक्रपूजितः ॥ २५

चतुर्युगानि वै त्रिंशत् क्रीडित्वा दिवि देववत् ।
इह मानुष्यलोके तु चतुर्वेदी द्विजो भवेत् ॥ २६

कृषिगोपालनिरतस् स्वधर्मान्वेषणे रतः ।
दानधर्मेऽपि निरतो विप्रशुश्रूषकस्तथा ॥ २७

सत्यसन्धश्शुचिर्नित्यं लोभडम्भविवर्जितः ।
[1]ऋजुस्स्वदारनिरतो हिंसाद्रोहविवर्जितः ॥ २८

वणिग्धर्मानमुञ्चन् वै देवब्राह्मणपूजकः ।
वणिक् च स्वर्गमाप्नोति पूज्यमानोऽप्सरोगणैः ॥ २९

चतुर्युगानि वै त्रिंशत् क्रीडित्वा दश पञ्च च ।
इह मानुष्यके लोके राजा भवति वीर्यवान् ॥ ३०

1. ख-घ—श्लोकोऽयं नास्ति ग—इदमर्धं परं नास्ति

[1]त्रयाणामपि वर्णानां शुश्रूषानिरतस्सदा ।
विशेषेणैव विप्राणां दासवद्यस्तु तिष्ठति ॥ ३१

अयाचितप्रदाता च सत्यशौचसमन्वितः ।
गुरुदेवार्चनरतः परदारविवर्जितः ॥ ३२

परपीडामकृत्वैव भृत्यवर्गं बिभर्ति यः ।
शूद्रोऽपि स्वर्गमाप्नोति जीवानामभयप्रदः ॥ ३३

स स्वर्गलोके क्रीडित्वा वर्षकोटिं महातपाः ।
इह मानुष्यके लोके वैश्यो धनपतिर्भवेत् ॥ ३४

एवं धर्मात् परं नास्ति महत् संसारमोक्षणम् ।
न च धर्मात् परं किञ्चित् पापकर्मव्यपोहनम् ॥ ३५

तस्माद्धर्मस्सदा कार्यो मानुष्यं प्राप्य दुर्लभम् ।
[2]न हि धर्मानुरक्तानां लोके किञ्चन दुर्लभम् ॥ ३६

स्वयम्भुविहितो धर्मो यो यस्येह नरेश्वर ।
[3]स तेन क्षपयेत् पापं सम्यगाचरितेन च ॥ ३७

सहजं यद्भवेत् कर्म न तत् त्याज्यं हि केन चित् ।
स एव तस्य धर्मो हि तेन सिद्धिं स गच्छति ॥ ३८

---

1. च—सुवर्णकोट्यः पञ्चाशद् रत्नानां च शतं तथा ।
हस्त्यश्वरथसंयुक्तान् महाभोगांश्च सेवते । [ अधिकः पाठः ]
2. ख-घ—इतः सार्धं श्लोकत्रयं नास्ति  ग—इदमर्धं नास्ति
3. अ—इदमर्धं नास्ति

निर्गुणोऽपि स्वधर्मस्तु पापकर्म व्यपोहति ।
[1]एवमेव तु धर्मोऽपि क्षीयते पापवर्धनात् ॥ ३९

युधिष्ठिरः—

भगवन् देवदेवेश श्रोतुं कौतूहलं हि मे ।
शुभस्याप्यशुभस्यापि क्षयवृद्धी यथाक्रमम् ॥ ४०

श्रीभगवान्—

शृणु पाण्डव तत् सर्वं धर्मसूक्ष्मं सनातनम् ।
दुर्विज्ञेयतमं नित्यं [2]मम भक्तैर्महात्मभिः ॥ ४१

यथैव शीतमुदकम् उष्णेन बहुना वृतम् ।
भवेत्तु तत्क्षणादुष्णं शीतत्वं च विनश्यति ॥ ४२

यथोष्णं वा भवेदल्पं शीतेन बहुना वृतम् ।
शीतलं तद् भवेत् सर्वम् उष्णत्वं च विनश्यति ॥ ४३

एवं तु यद्भवेद्भूरि सुकृतं वाऽथ दुष्कृतम् ।
तदल्पं क्षपयेच्छीघ्रं नात्र कार्या विचारणा ॥ ४४

समत्वे सति राजेन्द्र तयोस्सुकृतपापयोः ।
गूहितस्य भवेद्वृद्धिः कीर्तितस्य भवेत् क्षयः ॥ ४५

ख्यापनेनानुतापेन प्रायः पापं प्रणश्यति ।
तथा कृतस्तु राजेन्द्र धर्मो नश्यति भारत ॥ ४६

---

1. अ-ग—इदमर्धं नास्ति
2. क-ख-ग—अतिभग्ना महाजनाः । घ—अभिमग्ना महाजनाः ।

तावुभौ गूहितौ सम्यग् वृद्धिं यातौ न संशयः ।
तस्मात् सर्वप्रयत्नेन न पापं गूहयेद्बुधः ॥ ४७

तस्मादेतत् प्रयत्नेन कीर्तनं क्षयकारणम् ।
तस्मात् सङ्कीर्तयेत् पापं नित्यं धर्मं च गूहयेत् ॥ ४८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आश्वमेधिकपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥
॥ ९२ ॥ अनुगीतापर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥
[ अस्मिन्नध्याये ४८ श्लोकाः ]

---

## ॥ त्र्यधिकशततमोऽध्यायः ॥

---

कृष्णेन युधिष्ठिरं प्रति जन्मदानजीवितानां वैयर्थ्यापादकाधर्मकथनम् ॥ १ ॥ तथा दानानां सात्त्विकत्वादिकथनपूर्वकं तत्तत्फलानां त्रैविध्यादिप्रतिपादनम् ॥ २ ॥ तथा दानपात्रलक्षणनिरूपणम् ब्राह्मणमहिमानुवर्णनं च ॥ ३ ॥

---

वैशम्पायनः—

एवं श्रुत्वा वचस्तथ्यं धर्मपुत्रोऽच्युतस्य तु ।
पप्रच्छ पुनरप्यन्यान् धर्मान् धर्मात्मजो नृप ॥ १

युधिष्ठिरः—

वृथा च कति जन्मानि वृथा दानानि वा कति ।
वृथा च जीवनं येषां नराणां पुरुषोत्तम ॥ २

कीदृशासु ह्यवस्थासु दानं दत्तं जनार्दन ।
इह लोके च भजति [1]पुरुषः पुरुषोत्तम ॥ ३

[2]गर्भस्थे कर्म चायाति किं बाल्ये वाऽपि शैशवे ।
यौवने चापि किं कृष्ण वृद्धत्वे चाऽपि किं भवेत् ॥ ४

सात्विकं कीदृशं दानं राजसं कीदृशं भवेत् ।
तामसं कीदृशं देव तर्पयिष्यति किं प्रभो ॥ ५

उत्तमं कीदृशं दानं [3]मध्यमं कीदृशं भवेत् ।
अधमं कीदृशं दानं तेषां यादव किं फलम् ॥ ६

किं दानं नयति ह्यूर्ध्वं किं गतिं मध्यमां नयेत् ।
गतिं जघन्यामथवा देवदेव ब्रवीहि मे ॥ ७

एतदिच्छामि विज्ञातुं परं कौतूहलं हि मे ।
त्वदीयं वचनं सत्यं पुण्यं च मधुसूदन ॥ ८

**वैशम्पायनः—**

एवं धर्मे प्रयत्नेन पृष्टः पाण्डुसुतेन वै ।
उवाच वासुदेवोऽथ धर्मान् धर्मात्मजस्य सः ॥ ९

**श्रीभगवान्—**

शृणु राजन् यथान्यायं वचनं तथ्यमुत्तमम् ।
कथ्यमानं मया पुण्यं सर्वपापव्यपोहनम् ॥ १०

---

1. अ—गतिं किं मध्यमां नयेत् । 2. अ—अर्धषट्कं नास्ति
3. ग—कोश एकस्मिन्नेवेतः पादद्वयं दृश्यते ।

वृथा च दश जन्मानि चत्वारि च नराधिप ।
वृथा दानानि पञ्चाशत् पञ्च चैव यथाक्रमम् ॥ ११

वृथा च जीवितं येषां ते च षट् परिकीर्तिताः ।
अनुक्रमेण सर्वाणि तानि वक्ष्यामि पाण्डव ॥ १२

धर्मघ्नानां तथा जन्म लुब्धानां पापिनां तथा ।
वृथा पाकं च येऽश्नन्ति परदाररताश्च ये ॥ १३

पाकभेदकरा ये च ये च स्युस्सत्यवर्जिताः ॥ १३॥

मृष्टमश्नाति यश्चैको दृश्यमानस्तु बान्धवैः ।
पितरं मातरं चैव उपाध्यायं गुरुं तथा ॥ १४॥

मातुलं मातुलानीं च यो विहन्याच्छपेत वा ॥ १५

ब्राह्मणाश्चैव ये भूतास् सन्ध्योपासनवार्जिताः ।
निस्स्वाहा निस्स्वधाश्चैव यश्च शूद्रान्नभुग् द्विजः ॥ १६

मम वा शङ्करस्यापि ब्रह्मणो वा युधिष्ठिर ।
अथवा ब्राह्मणानां तु ये न भक्ता नराधिप ॥ १७

वृथाजन्मान्यथैतेषां पापिनां विद्धि पाण्डव ॥ १७॥

अश्रद्धया च यद्दत्तम् [1]अवमानेन वाऽपि यत् ।
[2]दम्भार्थमपि यद्दत्तं यत् पाषण्डिहृतं नृप ॥ १८॥

---

1. क-ख-ग-घ—चौर्येणाप्यार्जितं च यत् ।
2. क-ख-ग-घ—नास्तीदमर्धम् ।

[1]शूद्राचाराय यद्दत्तं यद्दत्त्वा चानुकीर्तितम् ।
रोषयुक्तं तु यद्दत्तं यद्दत्तमनुशोचितम् ॥ १९॥

डम्भार्जितं च यद्दत्तं यच्च वाऽप्यनृतार्जितम् ।
ब्राह्मणस्वं च यद्दत्तं चौर्येणाप्यार्जितं च यत् ॥ २०॥

अभिशापहृतं यत्तु यद्दत्तं पतिते द्विजे ।
यद्दत्तं स्वैरिणीभर्तुर् बहुकार्यानुवर्तिने ॥ २१॥

[2]निर्ब्रह्माभिहृतं यत्तु यद्दत्तं सर्वयाजके ।
[3]व्रात्ये तु यत् कृतं दत्तं आरूढपतिते च यत् ॥ २२॥

यद्ग्रामयाजकहृतं यत् कृतघ्नहृतं तथा ।
उपपातकिने दत्तं वेदविक्रयिणे च यत् ॥ २३॥

स्त्रीजिताय च यद्दत्तं यद्दत्तं राजसेविने ।
गणकाय च यद्दत्तं यच्चाकारुणिकाय च ॥ २४॥

वृषलीपतये दत्तं यद्दत्तं शस्त्रजीविने ।
भृतकाय च यद्दत्तं यच्च देवलकाय च ॥ २५॥

देवद्रव्याशिने दत्तं यद्दत्तं चित्रकर्मिणे ॥ २६

[4]रङ्गोपजीविने दत्तं यच्च मांसोपजीविने ।

---

1. ग—अर्धचतुष्टयं न दृश्यते ।
2. अ-च—व्रात्यैस्तु यद्धृतं दानम् आरूढपतितैश्च यत् । [ पाठान्तरम् ]
3. अ-च—यद्दत्तं स्वैरिणीभर्तुश् श्वशुरानुवर्तिनि । [ अधिकः पाठः ]
4. अ—इदमर्धं नास्ति

सेवकाय च यद्दत्तं यद्दत्तं ब्राह्मणब्रुवे ॥ २७

अदेशिने च यद्दत्तं दत्तं वार्धुषिकाय यत् ।
यदनाचारिणे दत्तं यत्तु दत्तमनग्नये ॥ २८

असन्ध्योपासिने दत्तं यच्छूद्रग्रामवासिने ।
यन्मिथ्यालिङ्गिने दत्तं दत्तं सर्वाशिने च यत् ॥ २९

नास्तिकाय च यद्दत्तं धर्मविक्रयिणे च यत् ।
चोरकाय च यद्दत्तं यद्दत्तं कूटसाक्षिणे ॥ ३०

ग्रामकूटाय यद्दत्तं दानं पार्थिवपुङ्गव ।
वृथा भवति तत् सर्वं नात्र कार्या विचारणा ॥ ३१

विप्रनामधरा ह्येते लोलुपा ब्राह्मणाधमाः ।
नात्मानं तारयन्त्येते न दातारं युधिष्ठिर ॥ ३२

एतेभ्यो दत्तमात्राणि दानानि सुबहून्यपि ।
वृथा भवन्ति राजेन्द्र भस्मन्याज्याहुतिर्यथा ॥ ३३

एतेषु यत् फलं किञ्चिद् भविष्यति कथञ्चन ।
राक्षसाश्च पिशाचाश्च तद्विलुम्पन्ति हर्षिताः ॥ ३४

वृथा ह्येतानि दानानि कथितानि समासतः ॥ ३४॥

जीवितं च वृथा येषां तच्छृणुष्व युधिष्ठिर ॥ ३५

ये च मां न प्रपद्यन्ते शङ्करं वा नराधमाः ।
ब्राह्मणान् वा महादेवान् वृथा जीवन्ति ते नराः ॥ ३६

[1]ये च निन्दन्ति मां मूढाः शङ्करं वा नराधमाः ।
ब्राह्मणान् वा द्विजान् वेदान् वृथा जीवन्ति ते नराः ॥ ३७

हेतुशास्त्रेषु ये हृष्टाः कुदृष्टिपथमाश्रिताः ।
वेदान् निन्दन्त्यनाचारा वृथा जीवन्ति ते नराः ॥ ३८

कुशलैः कृतशास्त्राणि पठित्वा ये नराधमाः ।
विप्रान् निन्दन्ति यज्ञांश्च वृथा जीवन्ति ते नराः ॥ ३९

ये च दुर्गां कुमारं वा वायुमग्निं जलं रविम् ।
पितरं मातरं चैव गुरुं नित्यं निशाकरम् ॥ ४०

मूढा निन्दन्त्यनाचारा वृथा जीवन्ति ते नराः ॥ ४०॥

विद्यमाने धने यस्तु दानधर्मविवर्जितः ।
मृष्टमश्नाति यश्चैको वृथा जीवति सोऽच्युत ॥ ४१॥

वृथा जीवितमाख्यातं दानकालं ब्रवीमि ते ॥ ४२

तमोनिविष्टचित्तेन दत्तं दानं तु यद्भवेत् ।
स तस्य फलमश्नाति नरो गर्भगतो नृप ॥ ४३

ईर्ष्यामात्सर्यसंयुक्तो डम्भार्थं चार्थकारणात् ।
ददाति दानं यो मर्त्यो बालभावे तदश्नुते ॥ ४४

[2]भोक्तुं भोगमशक्तस्तु व्याधिभिः पीडितो भृशम् ।

---

1. अ-ब—अर्धषट्कं नास्ति च—अर्धद्वयं नास्ति
2. क-ख-ग—अर्धद्वयं नास्ति च—अर्धचतुष्टयं नास्ति

दृदाति दानं यो मर्त्यो वृद्धभावे तदश्नुते ॥　　४५

श्रद्धायुक्तश्शुचिस्स्नातः प्रसन्नेन्द्रियमानसः ।
दानं ददाति यो मर्त्यो यौवने स तदश्नुते ॥　　४६

स्वयं नीत्वा तु यद्दानं भक्त्या पात्रे प्रदीयते ।
तत् सार्वकालिकं विद्धि दानमामरणान्तिकम् ॥　　४७

सात्विकं राजसं चैव तामसं च युधिष्ठिर ।
दानं दानफलं चैव गतिं च विविधां शृणु ॥　　४८

दानं दातव्यमित्येव मतिं कृत्वा द्विजाय वै ।
उपकारवियुक्ताय यद्दत्तं तद्धि सात्विकम् ॥　　४९

श्रोत्रियाय दरिद्राय बहुपुत्राय पाण्डव ।
दीयते यत् प्रहृष्टेन तत् सात्विकमुदाहृतम् ॥　　५०

वेदाक्षरविहीनाय यत्तु पूर्वोपकारिणे ।
समृद्धाय च यद्दत्तं तद्दानं राजसं स्मृतम् ॥　　५१

[1]सम्बन्धिने च यद्दत्तम् अव्रताय च पाण्डव ।
लोभादिभिरपात्राय तद्दानं राजसं स्मृतम् ॥　　५२

वैश्वदेवविहीनाय दानमश्रोत्रियाय यत् ।
दीयते तस्करायापि तद्दानं तामसं स्मृतम् ॥　　५३

सरोषमवधूतं च कोपयुक्तमवज्ञया ।

---

1. च—श्लोकोऽयं नास्ति

सेवकाय च यद्दत्तं तद्दानं तामसं स्मृतम् ॥ ५४

देवाः पितृगणाश्चैव पितरश्चाग्नयस्तथा ।
सात्विकं दानमश्नन्ति तुष्यन्ति च नरेश्वर ॥ ५५

दानवा दैत्यसङ्घाश्च ग्रहा यक्षाश्च राक्षसाः ।
राजसं दानमश्नन्ति वर्जितं पितृदैवतैः ॥ ५६

[1]पिशाचाः प्रेतसङ्घाश्च कश्मला ये मलीमसाः ।
तामसं दानमश्नन्ति गतिं च त्रिविधां शृणु ॥ ५७

सात्विकानां तु दानानाम् उत्तमं फलमिष्यते ।
मध्यमं राजसानां तु तामसानां तु पश्चिमम् ॥ ५८

अभिगम्योपनीतानां दानानामुत्तमं फलम् ।
मध्यमं तु समानीय जघन्यं याचते फलम् ॥ ५९

अयाचितप्रदाता वै स याति गतिमुत्तमाम् ।
समाहूय तु वै दद्यान्मध्यमां स गतिं व्रजेत् ॥ ६०
याचितो यस्तु वै दद्याज् जघन्यां स गतिं व्रजेत् ॥ ६०॥

उत्तमा दैविकी ज्ञेया मध्यमा मानुषी गतिः ।
जघन्या चैव तिर्यक्षु गतिरेषा त्रिधा मता ॥ ६१॥

पात्रभूतेषु विप्रेषु सुस्थितेष्वाहिताग्निषु ।
यत्तु प्रक्षिप्यते दानम् अक्षय्यं तत् प्रकीर्त्यते ॥ ६२॥

1. अ—अर्धद्वयं नास्ति

श्रोत्रियाणां दरिद्राणां भरणं कुरु पाण्डव ।
समृद्धानां द्विजातीनां कार्यं ते परिरक्षणम् ॥　　६३॥

दरिद्रान् वृत्तिहीनांश्च प्रदानैस्तु सुपूजयेत् ।
आतुरस्यौषधैः कार्यं नीरुजस्य किमौषधैः ॥　　६४॥

पापं प्रतिग्रहीतारं प्रदातुरुपगच्छति ।
प्रतिग्रहीतुर्यत् पुण्यं प्रदातारमुपैति तत् ॥　　६५॥
[1]तस्माद्दानं सदा कार्यं परत्र हितमिच्छता ॥　　६६

वेदविद्यावदातेषु सदा शूद्रान्नवर्जिषु ।
प्रयत्नेन निधातव्यो महादानमयो निधिः ॥　　६७

येषां दाता प्रतीक्षेत सहस्रस्येव लम्भनम् ।
भुक्तशेषस्य भक्तस्य तान् निमन्त्रय भारत ॥　　६८

आमन्त्र्य तु निराशानि न कर्तव्यानि पाण्डव ।
कुलानि सुदरिद्राणि तेषामाशा हता भवेत् ॥　　६९

मद्भक्ता ये नरश्रेष्ठ मद्गता मत्परायणाः ।
मद्याजिनो मन्नियमास् तान् प्रयत्नेन पूजयेत् ॥　　७०

तेषां तु पावनायाहं नित्यमेव युधिष्ठिर ।
उभे सन्ध्येऽपि तिष्ठामि ह्यस्कन्नं तद्व्रतं मम ॥　　७१

तस्मादष्टाक्षरं मन्त्रं मद्भक्तैर्वीतकल्मषैः ।

---

1. घ—इतः क्रमेण द्विचत्वारिंशच्छ्लोका नास्मिन् कोशे दृश्यन्ते ॥

सन्ध्याकालेषु जप्तव्यं सततं चात्मशुद्धये ॥ ७२
अन्येषामपि विप्राणां किल्बिषं हि प्रणश्यति ।
उभे सन्ध्येऽप्युपासीत तस्माद्विप्रो विशुद्धये ॥ ७३
दैवे श्राद्धे च विप्रस्स नियोक्तव्योऽजुगुप्सितः ।
जुगुप्सितस्तु तच्छ्राद्धं दहत्यग्निरिवेन्धनम् ॥ ७४
[1]पुराणं मानवो धर्मो वेदास्साङ्गाश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥ ७५
न ब्राह्मणान् परीक्षेत दैवे कर्मणि धर्मवित् ।
महान् भवेत् परीवादो ब्राह्मणानां परीक्षणे ॥ ७६
ब्राह्मणानां परीवादं यः कुर्यात् स नराधमः ।
[2]सहसैव शुनां योनिं स गच्छेद्ब्रह्मदूषकः ॥ ७७
श्वत्वं प्राप्नोति निन्दित्वा परीवादात् खरो भवेत् ।
[3]परिभूय कृमिर्भवति कीटो भवति मत्सरी ॥ ७८
दुर्वृत्ता वा सुवृत्ता वा प्राकृता वा सुसंस्कृताः ।
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः ॥ ७९
क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम् ।
नावमन्येत मेधावी कृशानपि कदाचन ॥ ८०

1. अ-क-ख-ग-च—भारतं ।
2. च—रासभानां शुनां+गच्छेत् पुरुषदूषकः ।
3. च—कृमिर्भवत्यभिभवात् कीटो भवति मत्सरी ।

एतत् त्रयं हि पुरुषं निर्दहेदवमानिनम् ।
तस्मादेतत् प्रयत्नेन नावमन्येत बुद्धिमान् ॥ ८१

यथा सर्वास्ववस्थासु पावको दैवतं महत् ।
तथा सर्वास्ववस्थासु ब्राह्मणो दैवतं महत् ॥ ८२

व्यङ्गाः कुब्जाश्च काणाश्च वामनाङ्गास्तथैव च ।
सर्वे दैवे नियोक्तव्या व्यामिश्रा वेदपारगैः ॥ ८३

मन्युं नोत्पादयेत् तेषां न चानिष्टं समाचरेत् ।
मन्युप्रहरणा विप्रा न विप्राश्शस्त्रपाणयः ॥ ८४

मन्युना घ्नन्ति ते शत्रून् वज्रेणेन्द्र इवासुरान् ॥ ८४॥

ब्राह्मणो हि महद्दैवं जातमात्रेण जायते ।
ईश्वरस्सर्वभूतानां [1]धर्मकोशस्य गुप्तये ॥ ८५॥

किं पुनर्ये च कौन्तेय सन्ध्ये नित्यमुपासते ॥ ८६

यस्यास्येन समश्नन्ति हव्यानि त्रिदिवौकसः ।
कव्यानि चैव पितरः किं भूतमधिकं ततः ॥ ८७

उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती ।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥ ८८

स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ।
आनृशंस्याद्ब्राह्मणस्य भुञ्जते हीतरे जनाः ॥ ८९

---

1. क—धर्मकामस्य । ख—धर्मं कामस्य ।

तस्मात् ते नावमन्तव्या मद्भक्ता हि द्विजास्सदा ॥ ८९॥

आरण्यकोपनिषदि ये तु पश्यन्ति मां द्विजाः ।
निगूढं निष्कलावस्थं तान् प्रयत्नेन पूजयेत् ॥ ९०॥

स्वगृहे वा प्रवासे वा दिवा रात्रौ तथैव च ।
श्रद्धया ब्राह्मणाः पूज्या मद्भक्ता ये च पाण्डव ॥ ९१॥

नास्ति विप्रसमं दैवं नास्ति विप्रसमो गुरुः ।
नास्ति विप्रसमो बन्धुर् नास्ति विप्रसमो निधिः ॥ ९२॥

नास्ति विप्रसमं तीर्थं न पुण्यं ब्राह्मणात् परम् ।
[1]न पवित्रं परं विप्रान्न विप्रात् पावनं परम् ॥ ९३॥

नास्ति विप्रात् परो धर्मो नास्ति विप्रात् परा गतिः ॥ ९४

पापकर्मसमाक्षिप्तं पतन्तं नरके नरम् ।
त्रायते दानमप्येकं पात्रभूते द्विजे कृतम् ॥ ९५

बालाहिताग्नयो ये च शान्ताश्शूद्रान्नवर्जिताः ।
मामर्चयन्ति मद्भक्तास् तेभ्यो दत्तं तदक्षयम् ॥ ९६

प्रदानैः पूजितो विप्रो वन्दितो वाऽपि कृत्स्नशः ।
सम्भावितो वा विप्रो वै मद्भक्तो दिवमुन्नयेत् ॥ ९७

ये पठन्ति नमस्यन्ति ध्यायन्ति पुरुषास्तु माम् ।
तांश्च स्पृष्ट्वाऽथवा दृष्ट्वा नरः पापैः प्रमुच्यते ॥ ९८

---

1. अ—इदमर्धं नास्ति

मद्भक्ता मद्गतप्राणा मद्गता मत्परायणाः ।
बीजयोनिविशुद्धा ये श्रोत्रियास्संयतेन्द्रियाः ॥ ९९
शूद्रान्नविरता नित्यं ते पुनन्तीह दर्शनात् ॥ ९९॥
स्वयं नीत्वा विशेषेण दानं तेषां गृहेष्वथ ।
निधापयेत्तु यद्भक्त्या तद्दानं कोटिसम्मितम् ॥ १००॥
जाग्रतस्स्वपतो वाऽपि प्रवासे स्वगृहेऽथवा ।
हृदये न प्रणश्यामि यस्य विप्रस्य भारत ॥ १०१॥
स पूजितो वा दृष्टो वा स्पृष्टो वाऽपि द्विजोत्तमः ।
सम्भाषितो वा राजेन्द्र पुनातीह नरं सदा ॥ १०२॥
एवं सर्वास्ववस्थासु सर्वदानानि पाण्डव ।
मद्भक्तेभ्यः प्रदत्तानि स्वर्गमार्गप्रदानि वै ॥ १०३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥
॥ ९२ ॥ अनुगीतापर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥
[ अस्मिन्नध्याये १०३॥ श्लोकाः ]

---

## ॥ चतुरधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति बीजयोन्योः शुद्ध्यशुद्धिनिरूपणम् ॥ १॥ तथा गायत्रीमहिमानुवर्णनम् ॥ २ ॥ ब्राह्मणमहिमप्रशंसनम् । ब्राह्मणावमन्तणां नारकयातनानुवर्णनं च ॥ ३ ॥

---

वैशम्पायनः—
श्रुत्वैवं सात्त्विकं दानं राजसं तामसं तथा ।
पृथक् पृथक् फलं चैव गतिं चापि पृथक् पृथक् ॥ १

अवितृप्तः प्रहृष्टात्मा पुण्यं धर्मामृतं पुनः ।
युधिष्ठिरो धर्मनित्यः केशवं पुनरब्रवीत् ॥ २

युधिष्ठिरः—

बीजयोनिविशुद्धानां लक्षणानि वदस्व मे ।
बीजदोषेण लोके च जायन्ते च कथं नराः ॥ ३

आचारदोषान् देवेश वक्तुमर्हस्यशेषतः ।
ब्राह्मणानां विशेषं च गुणदोषौ च केशव ॥ ४

चातुर्वर्ण्यस्य [1]कृत्स्नस्य वर्तमानाः प्रतिग्रहे ।
केन विप्रा विशेषेण तरन्ते तारयन्ति च ॥ ५

एतत् कथय देवेश त्वद्भक्तस्य नमोऽस्तु ते ॥ ५॥

श्रीभगवान्—

शृणु राजन् यथातत्त्वं बीजयोनिशुभाशुभम् ।
येन तिष्ठति लोकोऽयं विनश्यति च पाण्डव ॥ ६॥

अविप्लुतब्रह्मचर्यो यस्तु विप्रो यथाविधि ।
स बीजी नाम विज्ञेयस् तस्य बीजं शुभं भवेत् ॥ ७॥

कन्या चाक्षतयोनिर्या कुलीना पितृमातृतः ।
ब्राह्मादिषु विवाहेषु परिणीता यथाविधि ॥ ८॥

सा प्रशस्ता वरारोहा शुद्धयोनिः प्रशस्यते ॥ ९

---

1. क-ख—लोकस्य । च—कृत्स्नस्य वर्तमानान् प्रतिग्रहे ।

[1]मनसा कर्मणा वाचा या गच्छेत् परपूरुषम् ।
योनिस्तस्या नरश्रेष्ठ गर्भाधानं न चार्हति ॥　१०

स्वैरिण्या यस्तु पापात्मा सन्तानार्थमिहेच्छति ।
स कुलान् पातयत्याशु दश पूर्वान् दशापरान् ॥　११

दुष्टयोनौ तु यो मोहाद् रेतस्सिञ्चति मूढधीः ।
तद्रेतसा समुत्पन्नष् षडङ्गविदपि द्विजः ॥　१२
साधुभिस्स बहिष्कार्यश् श्वपाक इव पार्थिव ॥　१२॥
कर्मणा मनसा वाचा या भवेत् स्वैरचारिणी ।
सा कुलघ्नीति विज्ञेया तस्यां जातश्श्वपाचकः ॥　१३॥
दैवे पित्र्ये तथा दाने भोजने सह भाषणे ।
शयने सह सम्बन्धे न योग्या दुष्टयोनिजाः ॥　१४॥
न तस्माद्दुष्टयोन्यां तु गर्भमुत्पादयेद्बुधः ।
मोहेन कुरुते यस्तु कुलं हन्ति त्रिपूरुषम् ॥　१५॥
कानीनश्च सहोढश्च तावुभौ कुण्डगोलकौ ।
आरूढ[2]पतिताज्जातः पतितस्यापि यस्सुतः ॥　१६॥
षडेते विप्रचण्डाला निषिद्धाश्श्वपचादपि ॥　१७
यो यत्र तत्र वा रेतस् सिक्त्वा शूद्रासु वा चरेत् ।

---

1. अ-क-ख-ग-घ—त्रयोदशार्धानि न सन्ति ।
2. क-ख—पतितो ज्ञातः ।

कामचारी स पापात्मा बीजं तस्याशुभं भवेत् ॥ १८

अशुभं तद्भवेद्बीजं शुद्धां योनिं न चार्हति ।
शुद्धां हविर्भुजो ज्वालां शुना लीढं हविर्यथा ॥ १९

शूद्रयोनौ पतद्बीजं हाहाशब्दं द्विजन्मनः ।
कुर्यात् पुरीषगर्तेषु पतितोऽस्मीति दुःखितः ॥ २०

मामधः पातयत्येष पापात्मा काममोहितः ।
अधोगतिं व्रजेत् क्षिप्रम् इति शप्त्वा पतेत्तु तत् ॥ २१

आत्मा हि शुक्रमुद्दिष्टं दैवतं परमं महत् ।
तस्मात् सर्वप्रयत्नेन निरुन्ध्याच्छुक्रमात्मनः ॥ २२

आयुस्तेजो बलं वीर्यं प्रज्ञा श्रीश्च महायशः ।
पुण्यं च मत्प्रियत्वं च लभते ब्रह्मचर्यया ॥ २३

अविप्लुतब्रह्मचर्यैर् गृहस्थाश्रममाश्रितैः ।
पञ्चयज्ञपरैर्धर्मस् स्थाप्यते पृथिवीतले ॥ २४

सायं प्रातस्तु ये सन्ध्यां सम्यङ् नित्यमुपासते ।
नावं वेदमयीं कृत्वा तरन्ते तारयन्ति च ॥ २५

यो जपेत् पावनीं देवीं गायत्रीं वेदमातरम् ।
न सीदेत् प्रतिगृह्णानः पृथिवीं च ससागराम् ॥ २६

ये च स्युर्दुस्स्थिताः केचिद् ग्रहास्सूर्यादयो दिवि ।
ते चास्य सौम्या जायन्ते शिवाश्शुभकरास्तथा ॥ २७

यत्र तत्र स्थिताश्चैव दारुणाः पिशिताशनाः ।
घोररूपा महाकाया धर्षयन्ति न तं द्विजम् ॥ २८

पुनन्तीह पृथिव्यां हि चीर्णवेदव्रता नराः ॥ २८॥

[1]अचीर्णव्रतवेदा ये विकर्मपथमाश्रिताः ।
ब्राह्मणा नाममात्रेण तेऽपि पूज्या नराधिप ॥ २९॥

किं पुनर्यस्तु सन्ध्ये द्वे नित्यमेवोपतिष्ठते ॥ ३०

शीलमध्ययनं दानं शौचं मार्दवमार्जवम् ।
तस्माद्वेदाद् विशिष्टान् वै मनुराह प्रजापतिः ॥ ३१

भूर्भुव[2]स्स्वरिति ब्रह्म यो वेदनिरतो द्विजः ।
स्वदारनिरतो दान्तस् स विद्वान् स च भूसुरः ॥ ३२

सन्ध्यामुपासते विप्रा नियमेन द्विजोत्तमाः ।
ते यान्ति नरशार्दूल ब्रह्मलोकं न संशयः ॥ ३३

सावित्रीमात्रसारोऽपि वरो विप्रस्सुयन्त्रितः ।
नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ॥ ३४

सावित्रीं चैव वेदांश्च तुलयाऽतुलयन् पुरा ।
देवा ऋषिगणाश्चैव सर्वे ब्रह्मपुरस्सराः ॥ ३५

---

1. च—चतुर्णामपि वेदानां सा हि राजन् गरीयसी । [अधिकः पाठः]
2. क-ख-ग—स्सुवरिति ब्रह्म यो वेद परमं द्विजः ।

चतुर्णामपि वेदानां सा हि राजन् गरीयसी ॥ ३५॥

यथा विकसिते पुष्पे मधु गृह्णन्ति षट्पदाः ।
समुत्सृज्य रसं सर्वं निरर्थकमसारवत् ॥ ३६॥

[1]एवं गृहीता सावित्री सर्ववेदे च पाण्डव ॥ ३७

[2]एवं हि सर्ववेदानां सावित्री प्राण उच्यते ।
निर्जीवा हीतरे वेदा विना सावित्रिया नृप ॥ ३८

एवं हि यश्चतुर्वेदी शीलभ्रष्टस्स कुत्सितः ।
शीलवृत्तसमायुक्तस् सावित्रीपाठको वरः ॥ ३९

सहस्रपरमां देवीं शतमध्यां दशावराम् ।
सावित्रीं जप कौन्तेय सर्वपापप्रणाशिनीम् ॥ ४०

युधिष्ठिरः—

[3]त्रैलोक्यनाथ भो कृष्ण सर्वभूतात्मको ह्यसि ।
नानायोगधर श्रेष्ठ तुष्यसे केन कर्मणा ॥ ४१

श्रीभगवान्—

यदि भारसहस्रं तु गुग्गुल्वादि प्रधूपयेत् ।
करोति [4]चेन्नमस्कारम् उपहारं च कारयेत् ॥ ३२

पूजयेत् स्तुतिभिर्मां च ऋग्यजुस्सामभिस्सदा ।
न तोषयति चेद्विप्रान् नाहं तुष्यामि भारत ॥ ४३

---

1. अ-च—कोशयोरेवेदमर्धं दृश्यते ।
2. अ-च—कोशयोर्नास्तीदमर्धम् । 3. च—नास्त्ययं श्लोकः ।
4. क-ख-ग—च नमस्कारमुपकारांश्च ।

ब्राह्मणे पूजिते नित्यं पूजितोऽस्मि न संशयः ।
आक्रुष्टे चाहमाक्रुष्टो भवामि भरतर्षभ ॥ ४४

परा मयि गतिस्तेषां पूजयन्तीह मां हि ते ।
यदहं द्विजरूपेण वसामि वसुधातले ॥ ४५

यस्तान् पूजयति प्राज्ञो मद्गतेनान्तरात्मना ।
तमहं स्वेन रूपेण पश्यामि नरपुङ्गव ॥ ४६

काणाः कुब्जा वामनाश्च दरिद्रा व्याधितास्तथा ।
नावमान्या द्विजाः प्राज्ञैर् मम रूपा हि ते द्विजाः ॥ ४७

ये केचित् सागरान्तायां पृथिव्यां द्विजसत्तमाः ।
मम रूपेषु तेष्वेवम् अर्चितेष्वर्चितोऽस्म्यहम् ॥ ४८

बहवस्तु [1]न जानन्ति नरा ज्ञानबहिष्कृताः ।
यथा हि द्विजरूपेण वसामि वसुधातले ॥ ४९

अवमन्यन्ति ये विप्रान् [2]स्वधर्मात् पातयन्ति च ।
प्रेषयन्ते च सततं शुश्रूषां कारयन्ति च ॥ ५०

मृतांस्तान् करपत्रेण यमदूता महाबलाः ।
निकृन्तन्ति यथाकामं सूत्रमार्गेण शिल्पिनः ॥ ५१

आक्रोशपरिवादाभ्यां ये रमन्ते द्विजातिषु ।

---

1. क-ख—नरा ज्ञानतिमिरेण । घ—नारा ज्ञानम् इतरेण बहिष्कृताः ।
2. क-ख-ग—विकर्मापादयन्ति च ।

तान् मृतान् यमलोकस्थान् निपात्य धरणीतले ॥ ५२
आक्रम्योरसि पादेन क्रुद्धास्संरक्तलोचनाः ।
[1]अग्निवर्णैस्तु सन्दंशैर् यमो जिह्वां समुद्धरेत् ॥ ५३
ये च विप्रान् निरीक्षन्ते पापाः पापेन चक्षुषा ।
अब्रह्मण्याश्श्रुतेर्बाह्या नित्यं ब्रह्मद्विषो नराः ॥ ५४
तेषां घोरा महाकाया वक्रतुण्डा महाबलाः ।
उद्धरन्ति मुहूर्तेन खगाश्चक्षुर्यमाज्ञया ॥ ५५
यः प्रहारं द्विजेन्द्राय दद्यात् कुर्याच्च शोणितम् ।
अस्थिभङ्गं च यः कुर्यात् प्राणैर्वा विप्रयोजयेत् ॥ ५६
सोऽनुपूर्व्येण यातीमान् नरकानेकविंशतिम् ॥ ५६॥
शूलमारोपितो गत्वा ज्वलनेनापि दह्यते ॥ ५७
बहुवर्षसहस्राणि पच्यमानस्त्ववाक्छिराः ।
नावमुञ्चति दुर्मेधा न तस्य क्षीयते गतिः ॥ ५८
[2]ब्राह्मणायावगूर्यैव व्रजन्ति वधकाङ्क्षया ।
शतवर्षसहस्राणि तामिस्रे परिपच्यते ॥ ५९
उत्पाद्य शोणितं गात्रात् संरम्भान्मतिपूर्वकम् ।
स पर्यायेण यातीमान् नरकानेकविंशतिम् ॥ ६०

1. क-ख-च—इतः श्लोकद्वयं नास्ति
2. अ-च—ब्राह्मणान् वा विचार्यैव व्रजन् वै ।
ग—ब्राह्मणायावमानं च कुर्याच्च वध ।

तस्मान्नाकुशलं ब्रूयान्न शुष्कां गिरमीरयेत् ।
न ब्रूयात् परुषां वाणीं न चैवैतानतिक्रमेत् ॥ ६१

ये विप्राञ्छ्रद्धया वाचा पूजयन्ति नरोत्तमाः ।
अर्चितश्च स्तुतश्चैव तैर्भवामि युधिष्ठिर ॥ ६२

तर्जयन्ति च ये विप्रान् क्रोशयन्ति च भारत ।
आक्रुष्टस्तर्जितश्चाहं तैर्भवामि न संशयः ॥ ६३

यश्चन्दनैश्चागरुधूपदीपैर्
अभ्यर्चयेत् काष्ठमयीं ममार्चाम् ।
तेनार्चितो नैव भवामि सम्यग्
विप्रार्चनादर्चितोऽहं भवामि ॥ ६४

[1]विप्रप्रसादाद्धरणीधरोऽहं
विप्रप्रसादादसुराञ्जयामि ।
विप्रप्रसादाच्च सदक्षिणोऽहं
विप्रप्रसादादजितोऽहमस्मि ॥ ६५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥
॥ ९२ ॥ अनुगीतापर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥
[ अस्मिन्नध्याये ६५ श्लोकाः ]

---

1. अ—श्लोकोऽयं नास्ति

## ॥ पञ्चाधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति सुकृतिदुष्कृतिजनप्राप्यवैवस्वतपुरमार्गादि-प्रतिपादनपूर्वकं तेषां तद्गमनप्रकारानुवर्णनम् ॥ १ ॥

युधिष्ठिरः—

देवदेवेश दैत्यघ्न परं कौतूहलं हि मे ।
एतत् कथय सर्वज्ञ त्वद्भक्तस्य जनार्दन ॥ १

[1]मानुषस्य च लोकस्य यमलोकस्य चान्तरम् ॥ १॥

कीदृशं किम्प्रमाणं वा किमधिष्ठानमेव वा ।
तरन्ति मानवा देव केनोपायेन माधव ॥ २॥

त्वगस्थिमांसनिर्मुक्ते पञ्चभूतविवर्जिते ।
कथयस्व महादेव सुखदुःखमशेषतः ॥ ३॥

जीवस्य यमलोके तु कर्मभिस्तु शुभाशुभैः ।
अनुबद्धस्य तैः पाशैर् नीयमानस्य दारुणैः ॥ ४॥

मृत्युदूतैर्दुराधर्षैर् घोरैर्घोरपराक्रमैः ।
बद्धस्याक्षिप्यमाणस्य विद्रुतस्य यमाज्ञया ॥ ५॥

पुण्यपापकृतस्तिष्ठेत् सुखदुःखमशेषतः ॥ ६

यमदूतैर्दुराधर्षैर् नीयते वा कथं पुनः ।

1. क—मानुष्ये च विनिर्मुक्ते पञ्चभूतविवर्जिते, इति वर्तते, मध्ये अर्धद्वयं नास्ति ख-च—मानुष्यस्य च ।

किं वा तत्र महादेव कर्म कुर्वन्ति मानवाः ॥ ७

कथं धर्मरता यान्ति देवताद्विजपूजकाः ।
कथं वा पापकर्माणो यान्ति प्रेतपुरं नराः ॥ ८

किं रूपं किं प्रमाणं वा वर्णः को वाऽस्य केशव ।
जीवस्य गच्छतो नित्यं यमलोकं ब्रवीहि मे ॥ ९

श्रीभगवान्—

शृणु राजन् यथातत्त्वं यन्मां त्वं परिपृच्छसि ।
तत् तेऽहं कथयिष्यामि मद्भक्तस्य नरेश्वर ॥ १०

षडशीतिसहस्राणि योजनानां शतानि च ।
मानुष्यस्य च लोकस्य यमलोकस्य चान्तरम् ॥ ११

न तत्र वृक्षच्छाया वा न तटाकं सरोऽपि वा ।
[1]न वाप्यो दीर्घिका वाऽपि न कूपं वा युधिष्ठिर ॥ १२

न मण्टपं सभा वाऽपि न प्रपा न निवेशनम् ।
न पर्वतो नदी वाऽपि न भूमेर्विवरं क्वचित् ॥ १३

न ग्रामो नाश्रमो वाऽपि नोद्यानं काननानि वा ।
न किञ्चिद्विश्रमस्थानं पथि तस्मिन् युधिष्ठिर ॥ १४

जन्तोस्सम्प्राप्तकालस्य वेदनार्तस्य वै भृशम् ।
करणैस्त्यक्तदेहस्य प्राणैः कण्ठगतैः पुनः ॥ १५

1. ग—अर्धचतुष्टयं नास्ति

[1]शरीराच्चोद्यते जीवो ह्यवशो मातरिश्वना ॥ १५॥

निर्गतो वायुभूतस्तु षट्कोशात्तु कलेबरात् ।
[2]शरीरमन्यत् तद्रूपं तद्वर्णं तत्प्रमाणकम् ॥ १६॥
अदृश्यं सम्प्रविष्टस्तु सोऽप्यदृष्टेन केन चित् ॥ १७

सोऽन्तरात्मा देहवताम् अष्टाङ्गो यस्तु सञ्चरेत् ।
छेदनाद्दाहनाद्भेदात् ताडनाद्वा न नश्यति ॥ १८

नानारूपधरैर्घोरैः प्रचण्डैश्चण्डविक्रमैः ।
ह्रियमाणो दुराधर्षैर् यमदूतैर्यमाज्ञया ॥ १९

पुत्रदारमयैः पाशैस् सन्निरुद्धोऽवशाद् बलात् ।
स्वकर्मभिश्चानुगतैः कृतैस्सुकृतदुष्कृतैः ॥ २०

आक्रन्दमानः करुणं बन्धुभिर्दुःखपीडितैः ।
त्यक्त्वा बन्धुजनं सर्वं निरपेक्षस्तु गच्छति ॥ २१

मातृभिः पितृभिश्चैव भ्रातृभिर्मातुलैस्तथा ।
दारैः पुत्रैर्वयस्यैश्च रुदद्भिस्त्यज्यते नरः ॥ २२

अदृश्यमानस्तैर्दीनैर् अश्रुपूर्णमुखेक्षणैः ।
स्वशरीरं परित्यज्य वायुभूतस्तु गच्छति ॥ २३

अन्धकारमपारं तं महाघोरं तमोवृतम् ।

---

1. क-ख—शरीराच्च्यावते । ग—शरीराच्चाल्यते । घ—शरीराच्छायते ।
2. ग—न त्वस्थिस्नायुमज्जानि स्वमांसरुधिराणि च । [अधिकः पाठः]

दुःखान्तं दुष्प्रतारं च दुष्प्रकारं च दुर्गमम् ॥ २४

दुस्सहं यद् दुरन्तं च दुर्निरीक्षं दुरासदम् ।
दुरापमतिदुर्गं च पापिष्ठानां नरोत्तम ॥ २५

ऋषिभिः कथ्यमानं तत् पारम्पर्येण पार्थिव ।
त्रासं जनयति प्रायश् श्रूयमाणः कथास्वपि ॥ २६

अवश्यं चैव [1]गन्तव्यस् तदध्वा तु युधिष्ठिर ।
प्राप्तकालेन सन्त्यज्य बन्धून् भोगान् धनानि च ॥ २७

जरायुजैरण्डजैश्च स्वेदजैरुद्भिजैस्तथा ।
जङ्गमैस्स्थिरसंज्ञैश्च गन्तव्यं हि यमालयम् ॥ २८

देवासुरैर्मनुष्याद्यैर् वैवस्वतवशानुगैः ।
स्त्रीपुंनपुंसकैश्चापि पृथिव्यां जीवसंज्ञितैः ॥ २९

मध्यमैर्युवभिश्चापि बालैर्वृद्धैस्तथैव च ।
जातमात्रैश्च गर्भस्थैर् गन्तव्यस्स महापथः ॥ ३०

पूर्वाह्णे वाऽपराह्णे वा सन्ध्याकालेऽथवा पुनः ।
प्रदोषे वाऽर्धरात्रे वा प्रत्यूषे वाऽप्युपस्थिते ॥ ३१

प्रवासस्थैर्वनस्थैर्वा पर्वतस्थैर्जलस्थितैः ।
क्षेत्रस्थैर्वा नभस्स्थैर्वा गृहमध्यगतैरपि ॥ ३२

भुञ्जद्भिर्वा पिबद्भिर्वा खादद्भिर्वा नरोत्तम ।

---

1. अ-घ-च—गन्तव्यं तदध्वानं ।

आसीनैर्वा स्थितैर्वाऽपि शयनीयगतैरपि ॥ ३३
जाग्रद्भिर्वा प्रसुप्तैर्वा गन्तव्यस्स महापथः ॥ ३३॥

मृत्युदूतैर्दुराधर्षैः प्रचण्डैश्चण्डविक्रमैः ।
आक्षिप्यमाणा विवशं यान्ति शीघ्रं यमालयम् ॥ ३४॥

कश्चिद्भीतैः कश्चित्त्रस्तैः प्रस्खलद्भिः कचित् कचित् ।
क्रन्दद्भिर्वेदनार्तैस्तु गन्तव्यं यमसादनम् ॥ ३५॥

निर्भर्त्स्यमानैरुद्विग्नैर् विधूतैर्भयविह्वलैः ।
कल्प्यमानशरीरैस्तु गन्तव्यं स्त्रीजितैस्सदा ॥ ३६॥

कण्टकाकीर्णमार्गेण तप्तवालुकपांसुना ।
दह्यमानैस्तु गन्तव्यो नरैर्दानविवर्जितैः ॥ ३७॥

[1]काष्ठोपलशिलाघातैर् दण्डोल्मुककशाङ्कुशैः ।
हन्यमानैर्यमपुरं गन्तव्यं धर्मवर्जितैः ॥ ३८॥

मेदश्शोणितपूयाद्यैर् वक्त्रैर्गात्रैश्च सव्रणैः ।
[2]दग्धक्षतव्रणाकीर्णैर् गन्तव्यं जीवघातकैः ॥ ३९॥

[3]क्रन्दद्भिश्च रुदद्भिश्च क्रोशद्भिश्चापि विस्वरम् ।
[4]वेदनार्तैः पतद्भिश्च गन्तव्यं जीवघातकैः ॥ ४०॥

भग्नपादोरुहस्ताङ्गैर् भग्नदन्ताशिरोधरैः ।

---

1. अ—अर्धद्वयं नास्ति
2. घ—नास्तीदमर्धम् ।
3. अ-घ—नास्तीदमर्धम्
4. अ-क-ख-ग-घ—अर्धपञ्चकं नास्ति

छिन्नकर्णोष्ठनासैश्च गन्तव्यं जीवघातकैः ॥ ४१॥
शक्तिभिर्भिण्डिपालैश्च शङ्कुतोमरसायकैः ।
तुद्यमानैस्तु शूलाग्रैर् गन्तव्यं जीवघातकैः ॥ ४२॥
श्वभिर्व्याघ्रैर्वृकैः कङ्कैर् भक्ष्यमाणास्समन्ततः ।
तुद्यमानाश्च गच्छन्ति राक्षसैर्मांसखादिभिः ॥ ४३॥
[1]महिषैश्च मृगैश्चापि सूकरैर्जम्बुकैस्तथा ।
भक्ष्यमाणैस्तदध्वानं गन्तव्यं मांसखादिभिः ॥ ४४॥
सूचीसुतीक्ष्णतुण्डाभिर् मक्षिकाभिस्समन्ततः ।
तुद्यमानैश्च गन्तव्यं पापिष्ठै[2]र्बालघातकैः ॥ ४५॥
विश्वस्तं स्वामिनं विप्रं स्त्रियं वा घ्नन्ति ये नराः ।
शस्त्रैर्निर्भिद्यमानैस्तु गन्तव्यं तैर्यमक्षयम् ॥ ४६॥
घातयन्ति च ये जीवान् दुःखमापादयन्ति च ।
राक्षसैश्च पिशाचैश्च भक्ष्यमाणा व्रजन्ति ते ॥ ४७॥
ये हरन्तीह वस्त्राणि शय्यां प्रावरणानि च ।
ते यान्ति विद्रुता नग्नाः पिशाचा इव तत्पथम् ॥ ४८॥
गाश्च धान्यं हिरण्यं वा बलात् क्षेत्रं गृहं तथा ।
ये हरन्ति दुरात्मानः परस्वं पापकारिणः ॥ ४९॥
पाषाणैरुल्मुकैर्दण्डैः काष्ठघातैश्च जर्झरैः ।

---

1. अ—अर्धद्वयं नास्ति 2. क-ग-घ—मधु ख—मधुघातिभिः ।

हन्यमानैः क्षताकीर्णैर् गन्तव्यं तैर्यमालयम् ॥ ५०॥

ब्रह्मस्वं ये हरन्तीह नरा नरकपातिनः ।
आक्रोशन्तीह ये नित्यं प्रहरन्ति च ये द्विजान् ॥ ५१॥

शुष्ककण्ठा निबद्धास्ते छिन्नजिह्वाक्षिनासिकाः ।
पूयशोणितदुर्गन्धा भक्ष्यमाणाश्च जम्बुकैः ॥ ५२॥

चण्डालैर्निर्घृणैश्चण्डैस् तुद्यमानास्समन्ततः ।
क्रोशन्तः करुणं घोरं गच्छन्ति यमसादनम् ॥ ५३॥

तत्रैव पतिताः पापा विष्ठाकूपेष्वनेकशः ।
मज्जन्ते वर्षकोटीस्तु क्लिश्यन्तो वेदनार्दिताः ॥ ५४॥

ततश्च मुक्ताः कालेन लोके चास्मिन् नराधमाः ।
विष्ठाक्रिमित्वं गच्छन्ति जन्मकोटिशतं नृप ॥ ५५॥

विद्यमानधनैर्यैस्तु लोभडम्भानृतान्वितैः ।
श्रोत्रियेभ्यो न दत्तानि दानानि बहुधा नृप ॥ ५६॥

[1]ग्रीवापाशनिबद्धास्ते हन्यमानाश्च राक्षसैः ।
क्षुत्पिपासाश्रमार्तास्तु यान्ति प्रेतपुरं नराः ॥ ५७॥

अदत्तदाना गच्छन्ति शुष्ककण्ठास्यतालुकाः ।
अन्नं पानीयसहितं प्रार्थयन्तः पुनः पुनः ॥ ५८॥

स्वामिन् बुभुक्षातृष्णार्ता गन्तुं नैवाद्य शक्नुमः ।

---

1. क—अर्धश्लोकं नास्ति

ममान्नं दीयतां स्वादु पानीयं दीयतामिति ॥ ५९॥
इति ब्रुवाणांस्तान् दूताः प्रापयन्ति यमालयम् ॥ ६०

वैशम्पायनः—

तच्छ्रुत्वा वचनं विष्णोः पपात भुवि पाण्डवः ।
निस्संज्ञो भयसन्त्रस्तो निश्चेष्टो भयविह्वलः ॥ ६१

ततो लब्ध्वा शनैस्संज्ञां समाश्वस्तोऽच्युतेन सः ।
नेत्रे प्रक्षाल्य तोयेन भूयः केशवमब्रवीत् ॥ ६२

युधिष्ठिरः—

भीतोऽस्म्यहं महादेव श्रुत्वा मार्गस्य विस्तरम् ।
केन दानेन तन्मार्गं तरन्ति पुरुषास्सुखम् ॥ ६३

श्रीभगवान्—

इह ये धार्मिका लोके जीवघातविवर्जिताः ।
[1]गुरुशुश्रूषणे युक्ता देवब्राह्मणपूजकाः ॥ ६४

अस्मान्मानुष्यलोकात् ते सभार्यास्सहबान्धवाः ।
[2]यमध्वानं तु गच्छन्ति यथावत् तं निबोध मे ॥ ६५

ब्राह्मणेभ्यः प्रदानानि नानारूपाणि पार्थिव ।
ये प्रयच्छन्ति [3]विप्रेभ्यस् ते सुखं यान्ति तत्पथम् ॥ ६६

1. च—अर्धपञ्चकं नास्ति
2. क-ख-ग—यमाध्वानं तु ते यान्ति ।
3. क-ख—विद्वद्भ्यः + पदम् । ग—विद्वद्भ्यस्ते सुखं यान्ति तत्पदम्

अन्नं च ये प्रयच्छन्ति ब्राह्मणेभ्यस्सुसंस्कृतम् ।
श्रोत्रियेभ्यो विशेषेण भक्त्या परमया युताः ॥ ६७

ते विमानैर्महात्मानो यान्ति चित्रैर्यमालयम् ।
सेव्यमाना वरस्त्रीभिर् अप्सरोभिर्महापथि ॥ ६८

ये च नित्यं प्रभाषन्ते प्रियं निष्कल्मषं वचः ।
ते च यान्त्यमलाभ्राभैर् विमानैस्तु यमालयम् ॥ ६९

कपिलादीनि दानानि श्रद्धायुक्ताश्च ये नराः ।
ब्राह्मणेभ्यः प्रयच्छन्ति श्रोत्रियेभ्यो विशेषतः ॥ ७०

ते यान्त्यादित्यवर्णाभैर् विमानैर्हेमभूषणैः ।
वैवस्वतपुरं रम्यम् अप्सरोभिर्निषेवितम् ॥ ७१

उपानहौ च छत्रं च शयनान्यासनानि च ।
विप्रेभ्यो ये प्रयच्छन्ति वस्त्राण्याभरणानि च ॥ ७२

ते [1]यान्त्यश्वैर्वृषैर्वाऽपि कुञ्जरैरप्यलङ्कृताः ।
[2]धर्मराजपुरं रम्यं सौवर्णच्छत्रभूषिताः ॥ ७३

ये च भक्ष्याणि दास्यन्ति भोज्यं पेयं तथैव च ।
स्निग्धान्नं चापि विप्रेभ्यश् श्रद्धया परया युताः ॥ ७४

ते यान्ति काञ्चनैर्यानैस् सुखं वैवस्वतालयम् ।
वरस्त्रीभिर्युवतिभिस् सेव्यमानास्समन्ततः ॥ ७५

---

1. क-ख—यान्त्यादित्यवर्णाभैः कुञ्जरैश्चाप्य+तैः ।
2. अ-क-ख-ग-घ—धनदस्य

ये च क्षीरं प्रयच्छन्ति घृतं दधि गुडं मधु ।
ब्राह्मणेभ्यः प्रयत्नेन श्रद्दधानास्सुसंस्कृताः ॥ ७६

चक्रवाकप्रयुक्तैस्तु यानै रुक्ममयैश्शुभैः ।
यान्ति गन्धर्ववादित्रैस् सेव्यमाना यमालयम् ॥ ७७

ये फलानि प्रयच्छन्ति पुष्पाणि सुरभीणि च ।
हंसयुक्तैर्विमानैस्तु यान्ति धर्मपुरं नराः ॥ ७८

ये प्रयच्छन्ति विप्रेभ्यो विविधान्नं घृताप्लुतम् ।
ते व्रजन्त्यमलाभ्राभैर् विमानैर्वायुवेगिभिः ॥ ७९
पुरं तत् प्रेतनाथस्य नानाजनसमाकुलम् ॥ ७९॥

पानीयं ये प्रयच्छन्ति सर्वभूतप्रजीवनम् ।
ते सुतृप्तास्सुखं यान्ति विमानैर्हंसचोदितैः ॥ ८०॥

ये तिलांस् तिलधेनुं वा घृतधेनुमथापि वा ।
श्रोत्रियेभ्यः प्रयच्छन्ति सौम्यभावसमन्विताः ॥ ८१॥

सोममण्डलसङ्काशैर् यानैस्ते यान्ति निर्मलैः ।
गीयमानास्तु गन्धर्वैर् वैवस्वतपुरं नराः ॥ ८२॥

येषां वाप्यश्च कूपाश्च तटाकानि सरांसि च ।
दीर्घिकाः पुष्करिण्यश्च सजलाश्च जलाशयाः ॥ ८३॥

यानैस्ते यान्ति चन्द्राभैर् दिव्यघण्टानिनादितैः ।
चामरैस्तालवृन्तैश्च वीज्यमाना महाप्रभाः ॥ ८४॥

नित्यतृप्ता महात्मानो गच्छन्ति यमसादनम् ॥ ८५

येषां देवगृहाणीह [1]चित्राण्यायतनानि च ।
मनोहराणि कान्तानि दर्शनीयानि भान्त्युत ॥ ८६

ते व्रजन्त्यमलाभ्राभैर् विमानैर्वायुवेगिभिः ।
पुरं तत् प्रेतनाथस्य नानाजनसमाकुलम् ॥ ८७

वैवस्वतं च पश्यन्ति सुखचित्तं सुखस्थितम् ।
यमेन पूजिता यान्ति यमसालोक्यतां गताः ॥ ८८

मृतानुद्दिश्य लोकेषु प्रपासु करकोद्धृतम् ।
शीतलं सलिलं रम्यं तृषितेभ्यो दिशन्ति ये ॥ ८९
ते तु तृप्तिं परां प्राप्तास् सुखं यान्ति [2]महापथम् ॥ ८९॥

काष्ठपादुकदा यान्ति तदध्वानं सुखं नराः ।
[3]सुवर्णमणिपीठे तु पादं कृत्वा रथोत्तमे ॥ ९०॥

आरामान् वृक्षषण्डांश्च रोपयन्ति च ये नराः ।
संवर्धयन्ति चाव्यग्रा फलपुष्पैश्च शोभिताः ॥ ९१॥

वृक्षच्छायासु रम्यासु शीतलासु स्वलङ्कृताः ।
यान्ति ते वाहनैर्दिव्यैः पूज्यमाना मुहुर्मुहुः ॥ ९२॥

सेव्यमानास्सुरूपाभिर् उत्तमाभिः प्रयत्नतः ।

---

1. क-ख-ग—छत्राण्याभरणानि च ।
2. क-ख—यमालयम् ।
3. अ—अर्धचतुष्टयं नास्ति

स्त्रीभिः कनकवर्णाभिर् यथाकामं यथासुखम् ॥ ९३॥

सुवर्णं रजतं वाऽपि विद्रुमं मौक्तिकं तथा ।
ये प्रयच्छन्ति ते यान्ति विमानैः कनकोज्ज्वलैः ॥ ९४॥

[1]सेव्यमानास्सुरूपाभिर् अकृशाभिः प्रयत्नतः ।
स्त्रीभिः कनकवर्णाभिर् यथाकामं यथासुखम् ॥ ९५॥

अश्वयानं तु गोयानं हस्तियानमथापि वा ।
ये प्रयच्छन्ति विप्रेभ्यो विमानैः कनकोज्ज्वलैः ॥ ९६॥

ते व्रजन्ति वरस्त्रीभिस् सेव्यमाना यथासुखम् ॥ ९७

भूमिदा यान्ति तं लोकं सर्वकामैस्सुतर्पिताः ।
[2]उदितादित्यसङ्काशैर् विमानैस्ते यमालयम् ॥ ९८

कन्यां ये च प्रयच्छन्ति विप्राय श्रोत्रियाय च ।
दिव्यकन्यावृता यान्ति विमानैस्ते यमालयम् ॥ ९९

[3]सुगन्धान् गन्धसंयोगान् पुष्पाणि सुरभीणि च ।
प्रयच्छन्ति द्विजाग्र्येभ्यो भक्त्या परमया युताः ॥ १००

ते सुगन्धास्सुवेषाश्च सुप्रभास्स्रग्विभूषिताः ।
यान्ति धर्मपुरं यानैर् विचित्रैरप्यलङ्कृताः ॥ १०१

---

1. क-ख-घ—नास्तीदं श्लोकद्वयम् ।
　　ग—अर्धद्वयं नास्ति
2. घ—नास्तीदमर्धम्
3. ग—ये फलानि प्रयच्छन्ति पुष्पाणि सुरभीणि च । [ अधिकः पाठः ]

दीपदा यान्ति यानैश्च दीपयन्तो दिशो दश ।
आदित्यसदृशाकारैर् दीप्यमाना यथाऽग्नयः ॥ १०२

गृहावसथदातारो गृहैः काञ्चनवेदिकैः ।
व्रजन्ति बालसूर्याभैर् धर्मराजपुरं नराः ॥ १०३

जलभाजनदातारः कुण्डिकाकरकप्रदाः ॥
पूज्यमाना वरस्त्रीभिर् यान्ति तृप्ता महागजैः ॥ १०४

पादाभ्यङ्गं शिरोभ्यङ्गं यानं पादोदकं तथा ।
ये प्रयच्छन्ति विप्रेभ्यस् ते यान्त्यश्वैर्यमालयम् ॥ १०५

विश्रामयन्ति ये विप्रान् श्रान्तानध्वनि कर्शितान् ।
चक्रावाकप्रयुक्तेन यान्ति यानेन तेऽपि च ॥ १०६

स्वागतेन च यो विप्रं पूजयेदासनेन च ।
स गच्छति तमध्वानं सुखं परमनिर्वृतः ॥ १०७

नमो ब्रह्मण्यदेवाय यो मां दृष्ट्वाऽभिवादयेत् ।
व्रतवत् प्रयतो नित्यं स सुखं याति तत्पथम् ॥ १०८

नमस्सर्वसहाभ्यश्चेत्यभिधाय दिने दिने ।
नमस्करोति गोभ्यो यस् स सुखं याति तत्पथम् ॥ १०९

नमोऽस्तु प्रियदत्तायै तुभ्यं चेति दिने दिने ।
भूमिमाक्रमते प्रातश् शयनादुत्थितस्तु यः ॥ ११०

स सर्वकामतृप्तात्मा सर्वभूषणभूषितः ।

याति यानेन दिव्येन सुखं वैवस्वतालयम् ॥   १११

अनन्तराशिनो ये तु डम्भाहङ्कारवर्जिताः ।
तेऽपि सारसयुक्तेन यान्ति यानेन वै सुखम् ॥   ११२

ये चाप्येकेन भक्तेन वर्तन्ते डम्भवर्जिताः ।
हंसयुक्तैर्विमानैस्तु सुखं यान्ति यमालयम् ॥   ११३

चतुर्थेन हि भक्तेन वर्तन्ते ये जितेन्द्रियाः ।
यान्ति ते धर्मनगरं यानैर्बर्हिणयोजितैः ॥   ११४

तृतीयदिवसेनेह भुञ्जते ये जितेन्द्रियाः ।
तेऽपि हस्तिरथैर्यान्ति तत्पथं कनकोज्ज्वलैः ॥   ११५

षष्ठान्नकालिको यस्तु वर्षमेकं तु वर्तते ।
कामक्रोधविनिर्मुक्तश् शुचिर्नित्यं जितेन्द्रियः ॥   ११६
स याति कुञ्जरस्थस्तु जयशब्दरवैर्युतः ॥   ११६॥

पक्षोपवासिनो यान्ति यानैश्शार्दूलयोजितैः ।
धर्मराजपुरं रम्यं दिव्यस्त्रीगणसेवितम् ॥   ११७॥

ये च मासोपवासं वै कुर्वते संयतेन्द्रियाः ।
तेऽपि सूर्योदयप्रख्यैर् यान्ति यानैर्यमालयम् ॥   ११८॥

अग्निप्रवेशं यश्चापि कुरुते मद्गतात्मना ।
स यात्यग्निप्रकाशेन विमानेन यमालयम् ॥   ११९॥

[1]प्राणांस्त्यजति यो विप्रो मां प्रपन्नो ह्यनाशकः ।
स बालार्कप्रकाशेन व्रजेद्यानेन तत्पथम् ॥ १२०॥

प्रविष्टोऽन्तर्जले यस्तु प्राणांस्त्यजति मानवः ।
सोममण्डलयानेन याति यानेन तत्पथम् ॥ १२१॥

स्वशरीरं हि गृध्राणां मन्मना यः प्रयच्छति ।
स याति रथमुख्येन काञ्चनेन यमालयम् ॥ १२२॥

गोकृते स्त्रीकृते चैव [2]हता विप्रकृतेऽपि ये ।
ते यान्त्यमरकन्याभिस् सेव्यमाना रविप्रभाः ॥ १२३॥

ये च कुर्वन्ति मद्भक्त्या तीर्थयात्रां जितेन्द्रियाः ।
ते पन्थानं महात्मानो यानैर्यान्ति सुखं नराः ॥ १२४॥

ये यजन्ति द्विजश्रेष्ठाः क्रतुभिर्भूरिदक्षिणैः ।
हंससारसयुक्तेन यान्ति यानेन तत्पथम् ॥ १२५॥

परपीडामकृत्वैव भृत्यान् बिभ्रति ये नराः ।
तत्पथं ते सुखं यान्ति विमानैः काञ्चनोज्ज्वलैः ॥ १२६॥

ये समास्सर्वभूतेषु जीवानामभयप्रदाः ।
क्रोधलोभविनिर्मुक्ता निगृहीतेन्द्रियास्तथा ॥ १२७॥

पूर्णचन्द्रप्रतीकाशैर् विमानैस्ते महाप्रभाः ।

---

1. अ-ब-च—अर्धषट्कं नास्ति

2. क-ख-ग—तथा विप्रकृतेऽपि च । अ-ब—हतो विप्रकृतेन च ।

यान्ति वैवस्वतपुरं देवगन्धर्वसेविताः ॥ १२८॥

ये मामेकान्तभावेन भक्त्या त्र्यम्बकमेव वा ।

पूजयन्ति नमस्यन्ति स्तुवन्ति च दिने दिने ॥ १२९॥

धर्मराजपुरं यान्ति यानैस्तेऽर्कसमप्रभैः ॥ १३०

पूजितास्तत्र धर्मेण स्वयं माल्यादिभिर्गुणैः ।

यान्त्येव मम लोकं वा रुद्रलोकमथापि वा ॥ १३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥
॥ ९२ ॥ अनुगीतापर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥
[ अस्मिन्नध्याये १३१ श्लोकाः ]

## ॥ षडधिकशततमोऽध्यायः ॥

श्रीकृष्णेन युधिष्ठिरं प्रति तोयान्नदानफलकथनम् ॥ १ ॥ तथा तयोरदाने नरकफलकथनं च ॥ २ ॥ अनेकेषां दानानां फलकथनम् ॥ ३ ॥ अतिथिपूजनकथनम् ॥ ४ ॥ अतिथ्यपूजने दोषकथनम् ॥ ५ ॥

वैशम्पायनः—

श्रुत्वा यमपुराध्वानं जीवानां गमनं तथा ।

धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ॥ १

युधिष्ठिरः—

देवदेवेश दैत्यघ्न सदा देवैरभिष्टुत ।

भवान् भवकरः श्रीमान् सहस्रादित्यसप्रभ ॥ २

सर्वसम्भव धर्मज्ञ सर्वधर्मप्रवर्तक ।
सर्वदानफलं सौम्य कथयस्व ममाच्युत ॥ ३

[1]दानं कृत्वा कथं कृष्ण कीदृशाय द्विजाय वै ।
कीदृशं वा तपः कृत्वा तत्फलं वाऽथ भुज्यते ॥ ४

वैशम्पायनः—

एवमुक्तो हृषीकेशो धर्मपुत्रेण धीमता ।
उवाच धर्मपुत्राय धर्मान् पुण्यान् महोदयान् ॥ ५

श्रीभगवान्—

शृणुष्वावहितो राजन् पूतं पापघ्नमुत्तमम् ।
सर्वदानफलं सौम्य न श्राव्यं पापकर्मणाम् ॥ ६

यच्छ्रुत्वा पुरुषस्त्री वा नष्टपापास्समाहिताः ।
तत्क्षणात् पूततां यान्ति पापकर्मरता अपि ॥ ७

एकाहमपि कौन्तेय भूमावुत्पादितं जलम् ।
सप्त तारयते पूर्वान् वितृष्णा यत्र गौर्भवेत् ॥ ८

पानीयं परमं लोके जीवानां जीवनं स्मृतम् ।
पानीयस्य प्रदानेन तृप्तिर्भवति शाश्वती ॥ ९
पानीयस्य गुणा दिव्याः परलोके सुखावहाः ॥ ९॥

तत्र पुष्पोदकी नाम नदी परमपावनी ।

---

1. क—अर्धद्वयं नास्ति

कामं ददाति राजेन्द्र तोयदानां यमालये ॥ १०॥

शीतलं सलिलं यस्याम् अक्षय्यममृतोपमम् ।
क्षीरं तोयप्रदातॄणां भवेद्दिव्यं सुखावहम् ॥ ११॥

ये चाप्यतोयदातारः पूयं तेषां विधीयते ॥ १२

प्रशाम्यत्यम्बुपानेन बुभुक्षा च युधिष्ठिर ।
तृषितस्य न चान्नेन पिपासाऽपि प्रणश्यति ॥ १३

तस्मात् तोयं सदा देयं तृषितेभ्यो विजानता ॥ १३॥

अग्नेर्मूर्तिः क्षितेर्योनिर् अमृतस्य च सम्भवः ।
तत् तोयं सर्वभूतानां मूलमित्युच्यते बुधैः ॥ १४॥

अद्भिस्सर्वाणि भूतानि जीवन्ति प्रभवन्ति च ।
तस्मात् सर्वेषु दानेषु तोयदानं विशिष्यते ॥ १५॥

सर्वदानतपोयज्ञैर् यत् प्राप्यं फलमुत्तमम् ।
तत् सर्वं तोयदानेन प्राप्यते नात्र संशयः ॥ १६॥

ये प्रयच्छन्ति विप्रेभ्यस् त्वन्नदानं सुसंस्कृतम् ।
तैस्तु दत्तास्स्वयं प्राणा भवन्ति पुरुषर्षभ ॥ १७॥

अन्नाद्रक्तं च शुक्लं च अन्ने जीवः प्रतिष्ठितः ।
इन्द्रियाणि च बुद्धिश्च पुष्णन्त्यन्नेन नित्यशः ॥ १८॥

अन्नहीनानि सीदन्ति सर्वभूतानि पाण्डव ॥ १९

तेजो बलं च रूपं च सत्वं वीर्यं द्युतिर्धृतिः ।
ज्ञानं मेधा तथाऽऽयुश्च सर्वमन्ने प्रतिष्ठितम् ॥ २०

देवदानवतिर्यक्षु सर्वलोकेषु सर्वदा ।
सर्वकालं हि सर्वेषाम् अन्ने प्राणाः प्रतिष्ठिताः ॥ २१

अन्नं प्रजापते रूपम् अन्नं प्रजननं स्मृतम् ।
सर्वभूतमयं चान्नं जीवश्चान्नमयस्स्मृतः ॥ २२

अन्नेनाधिष्ठितः प्राणो ह्यपानो व्यान एव च ।
उदानश्च समानश्च धारयन्ति शरीरिणम् ॥ २३

शयनोत्थानगमनग्रहणाकर्षणानि च ।
सर्वसत्वकृतं कर्म चान्नादेव प्रवर्तते ॥ २४

चतुर्विधानि भूतानि जङ्गमानि स्थिराणि च ।
अन्नाद्भवन्ति राजेन्द्र सृष्टिरेषा सनातनी ॥ २५

विद्यास्थानानि सर्वाणि सर्वयज्ञाश्च पावनाः
[1]अन्नाद्यस्मात् प्रवर्तन्ते तस्मादन्नं परं स्मृतम् ॥ २६

देवा रुद्रादयस्सर्वे पितरोऽप्यग्नयस्तथा ।
यस्मादन्नेन तुष्यन्ति तस्मादन्नं विशिष्यते ॥ २७

यस्मादन्नात् प्रजास्सर्वाः कल्पे कल्पेऽसृजत् प्रभुः ।
तस्मादन्नात् परं दानं न भूतं न भविष्यति ॥ २८

---

1. च—अर्धचतुष्टयं नास्ति 2. क-ख—अर्धपञ्चकं नास्ति

यस्मादन्नात् प्रवर्तन्ते धर्मार्थौ काम एव च ।
तस्मादन्नात् परं दानं नामुत्रेह च पाण्डव ॥ २९

यक्षरक्षोगणा नागा भूता दैत्याश्च दानवाः ।
तुष्यन्त्यन्नेन यस्मात्तु तस्मादन्नं परं भवेत् ॥ ३०

[1]परान्नमुपभुञ्जानो यत् कर्म कुरुते शुभम् ।
तच्छुभस्यैकभागस्तु कर्तुर्भवति भारत ॥ ३१

अन्नदस्य त्रयो भागा भवन्ति पुरुषर्षभ ।
तस्मादन्नं प्रदातव्यं ब्राह्मणेभ्यो विशेषतः ॥ ३२

ब्राह्मणाय दरिद्राय योऽन्नं संवत्सरं नृप ।
श्रोत्रियाय प्रयच्छेद्धै पाकभेदविवर्जितः ॥ ३३

डम्भानृतविमुक्तस्तु परां भक्तिमुपागतः ।
स्वधर्मेणार्जितफलं तस्य पुण्यफलं शृणु ॥ ३४

[2]शतवर्षसहस्राणि कामगः कामरूपधृत् ।
मोदतेऽमरलोकस्थः पूज्यमानस्सुरोत्तमैः ॥ ३५

ततश्चापि च्युतः कालान्नरलोके द्विजो भवेत् ॥ ३५॥

अग्रभिक्षां च यो दद्याद् दरिद्राय द्विजातये ।
षण्मासाद्वार्षिकं श्राद्धं तस्य पुण्यफलं शृणु ॥ ३६॥

---

1. अ-घ—अर्धचतुष्टयं नास्ति
2. क-ख-ग-घ—इतः सार्धं श्लोकद्वयं नास्ति

गोसहस्रप्रदानेन यत् पुण्यं समुदाहृतम् ।
तत् पुण्यफलमाप्नोति नरो वै नात्र संशयः ॥ ३७॥

अथ संवत्सरं दद्याद् अग्राभिक्षामयाचते ।
प्रच्छाद्यैव स्वयं नीत्वा तस्य पुण्यफलं शृणु ॥ ३८॥

कपिलानां सहस्रे तु दत्ते यत् पुण्यमुच्यते ।
तत् पुण्यमखिलं प्राप्य शक्रलोके महीयते ॥ ३९॥

स शक्रभवने रम्ये वर्षकोटिशतं नृप ।
यथाकामं महातेजाः क्रीडत्यप्सरसां गणैः ॥ ४०॥

अग्रान्नं यस्तु वै दद्याद् द्विजाय नियतव्रतः ।
दश वर्षाणि राजेन्द्र तस्य पुण्यफलं शृणु ॥ ४१॥

कपिलाशतसहस्रस्य विधिदत्तस्य यत् फलम् ।
तत् पुण्यफलमासाद्य पुरन्दरपुरं व्रजेत् ॥ ४२॥

स शक्रभवने रम्ये कामरूपी यथासुखम् ।
दशकोटिसमा राजन् क्रीडते सुरपूजितः ॥ ४३॥

शक्रलोकावतीर्णश्चेद् [1]इह लोके महाद्युतिः ।
चतुर्वेदी द्विजश्श्रीमान् जायते राजपूजितः ॥ ४४॥

अध्वश्रान्ताय विप्राय क्षुधितायान्नकाङ्क्षिणे ।
देशकालाभियाताय दीयते पाण्डुनन्दन ॥ ४५॥

---

1. क-ख-ग—श्च अङ्केशेन ।

याचितोऽन्नं न दद्याद्यो विद्यमाने धनागमे ।
स लुब्धो नरकं याति क्रूमीणां कालसूत्रकम् ॥     ४६॥

स तत्र नरके घोरे लोभमोहितचेतनः ।
[1]दशवर्षसहस्राणि क्लिश्यते वेदनार्दितः ॥     ४७॥

तस्माच्च नरकान्मुक्तः कालेन महता हि सः ।
दरिद्रो मानुषे लोके चण्डालेष्वेव जायते ॥     ४८॥

यस्तु पांसुलपादश्च दूराध्वश्रमकर्शितः ।
क्षुत्पिपासाश्रमश्रान्तश्च श्रमखिन्नगतिर्द्विजः ॥     ४९॥

पृच्छन् वै ह्यन्नदातारं गृहमभ्येति चाशया ।
तं पूजयेत यत्नेन सोऽतिथिस्स्वर्गसङ्क्रमः ॥     ५०॥

तस्मिंस्तुष्टे नरश्रेष्ठ तुष्टास्स्युस्सर्वदेवताः ॥     ५१

न तथा हविषा होमैर् न पुष्पैर्नानुलेपनैः ।
अग्नयः पार्थ तुष्यन्ति यथा ह्यतिथिपूजनात् ॥     ५२

कपिलायां तु दत्तायां विधिवज्ज्येष्ठपुष्करे ।
न तत् फलमवाप्नोति यत् फलं विप्रभोजनात् ॥     ५३

द्विजपादोदकक्लिन्ना यावत् तिष्ठति मेदिनी ।
तावत् पुष्करपर्णेन पिबन्ति पितरो जलम् ॥     ५४

देवमाल्योपनयनं द्विजोच्छिष्टावमार्जनम् ।

---

1. क-ग-च-शत ।

श्रान्तसंवाहनं चैव तथा पादावसेचनम् ॥ ५५

प्रतिश्रयप्रदानं च तथा शय्यासनस्य च ।
एकैकं पाण्डवश्रेष्ठ गोप्रदानाद्विशिष्यते ॥ ५६

पादोदकं पादघृतं दीपमन्नं प्रतिश्रयम् ।
ये प्रयच्छन्ति विप्रेभ्यो नोपसर्पन्ति ते यमम् ॥ ५७

विप्रातिथ्ये कृते राजन् भक्त्या शुश्रूषितेऽपि च ।
देवाश्शुश्रूषितास्सर्वे त्रयस्त्रिंशद्भवन्त्युत ॥ ५८

अभ्यागतो ज्ञातपूर्वो ह्यज्ञातोऽतिथिरुच्यते ।
तयोः पूजां द्विजः कुर्याद् इति पौराणिकी श्रुतिः ॥ ५९

पादाभ्यङ्गान्नपानैस्तु योऽतिथिं पूजयेन्नरः ।
पूजितस्तेन राजेन्द्र भवाम्येव न संशयः ॥ ६०

शीघ्रं पापाद्विनिर्मुक्तो मया चानुग्रहीकृतः ।
विमानेनेन्दुकल्पेन मम लोकं स गच्छति ॥ ६१

अभ्यागतं श्रान्तमनुव्रजान्ति
देवाश्च सर्वे पितरोऽग्नयश्च ।
तस्मिन् द्विजे पूजिते पूजितास्स्युर्
गते निराशाः पितरो व्रजन्ति ॥ ६२

अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्तते ।
पितरस्तस्य नाश्नन्ति दश वर्षाणि पञ्च च ॥ ६३

वर्जितः पितृभिर्लुब्धस् स दैवैरग्निभिस्सदा ।
निरयं रौरवं गत्वा दश वर्षाणि पच्यते ॥ ६४

ततश्चापि च्युतः कालाद् इह चोच्छिष्टभुग् भवेत् ॥ ६४॥

वैश्वदेवान्तिके प्राप्तम् अतिथिं यो न पूजयेत् ।
स चण्डालत्वमाप्नोति सद्य एव न संशयः ॥ ६५॥

निर्वासयति यो विप्रं देशकालेऽतिथिं गृहात् ।
पतितस्तत्क्षणादेव जायते नात्र संशयः ॥ ६६॥

नरके रौरवे घोरे वर्षकोटिं स पच्यते ॥ ६७

ततश्चापि च्युतः कालाद् इह लोके नराधमः ।
श्वा वै द्वादश जन्मानि जायते क्षुत्पिपासितः ॥ ६८

चण्डालोऽप्यतिथिः प्राप्तो देशकालेऽन्नकाङ्क्षया ।
अभ्युद्गम्यो गृहस्थेन पूजनीयस्स सर्वदा ॥ ६९

अनर्चयित्वा योऽश्नाति लोभमोहितचेतनः ।
स चण्डालत्वमाप्नोति दश जन्मानि पाण्डव ॥ ७०

निराशमतिथिं कृत्वा भुञ्जानो यः प्रहृष्टवान् ।
न जानात्यात्मनाऽऽत्मानं विष्ठाकूपे निपातितम् ॥ ७१

[1]मोघं ध्रुवं प्रोर्णयति मोघमस्य तु पच्यते ।
मोघमन्नं सदाऽश्नाति योऽतिथिं न च पूजयेत् ॥ ७२

---

1. च—ये यजन्ति न चार्चन्ति गृहेष्वतिथिमागतम्। [अधिकः पाठः]

साङ्गोपाङ्गांस्तु यो वेदान् पठतीह दिने दिने ।
न चातिथिं पूजयति वृथा स पठति द्विजः ॥ ७३

पाकयज्ञमहायज्ञैस् सोमसंस्थाभिरेव च ।
ये यजन्ति न चार्चन्ति गृहेष्वतिथिमागतम् ॥ ७४

[1]तेषां यशोभिकामानां दत्तमिष्टं च यद्भवेत् ।
वृथा भवति तत् सर्वम् आशया हि तया हृतम् ॥ ७५

देशं कालं च पात्रं च स्वशक्तिं च निरीक्ष्य च ।
अल्पं समं महद्वाऽपि कुर्यादातिथ्यमात्मवान् ॥ ७६

सुमुखस्सुप्रसन्नात्मा धीमानतिथिमागतम् ।
स्वागतेनासनेनाद्भिर् अन्नाद्येन च पूजयेत् ॥ ७७

प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।
प्राप्तो यो वैश्वदेवान्ते सोऽतिथिस्स्वर्गसङ्क्रमः ॥ ७८

क्षुत्पिपासाश्रमार्ताय देशकालागताय च ।
सत्कृत्यान्नं प्रदातव्यं स्वर्गस्य फलमिच्छता ॥ ७९

[2]भोजयेदात्मनश्श्रेष्ठान् विधिवद्धव्यकव्ययोः ।
अन्नं प्राणो मनुष्याणाम् अन्नदः प्राणदो भवेत् ॥ ८०

तस्मादन्नं विशेषेण दातव्यं भूतिमिच्छता ॥ ८०॥

---

1. घ—अल्पं वा सुमहद्वाऽपि कुर्यादातिथ्यमात्मवान् । [अधिकः पाठः]
2. अ—अर्धद्वयं नास्ति

अन्नदस्सर्वकामैस्तु सुतृप्तस्त्वभ्यलङ्कृतः ।
पूर्णचन्द्रप्रकाशेन विमानेन विराजता ॥ ८१॥

सेव्यमानो वरस्त्रीभिर् देवलोकं स गच्छति ॥ ८२

क्रीडित्वा तु ततस्तस्मिन् वर्षकोटिं यथाऽमरः ।
ततश्चापि च्युतः कालाद् इह लोके महायशाः ॥ ८३

वेदशास्त्रार्थतत्त्वज्ञो भोगवान् ब्राह्मणो भवेत् ॥ ८३॥

यथाश्रद्धं तु यः कुर्यान्मनुष्येषु प्रजायते ।
महाधनपतिश्श्रीमान् वेदवेदाङ्गपारगः ॥ ८४॥

सर्वशास्त्रार्थविद्विद्वान् भोगवान् ब्राह्मणो भवेत् ॥ ८५

[1]सर्वातिथ्यं तु यः कुर्याद् वर्षमेकमकल्मषः ।
धर्मार्जितधनो भूत्वा पाकभेदविवर्जितः ॥ ८६

देवानिव स्वयं विप्रान् अर्चयित्वा पितॄनपि ।
विप्रानग्राशनाशी यस् तस्य पुण्यफलं शृणु ॥ ८७

वर्षेणैकेन यावन्ति पिण्डान्यश्नन्ति ये द्विजाः ।
तावद्वर्षाणि राजेन्द्र मम लोके महीयते ॥ ८८

ततश्चापि च्युतः कालाद् इह लोके महायशाः ।
वेदशास्त्रार्थतत्त्वज्ञो भोगवान् ब्राह्मणो भवेत् ॥ ८९

सर्वातिथ्यं तु यः कुर्याद् यथाश्रद्धं नरेश्वर ।

1. अ—अर्धाष्टकं नास्ति

अकालनियमेनापि सत्यवादी जितेन्द्रियः ॥ १०

सत्यसन्धो जितक्रोधश् शाखाधर्मविवर्जितः ।

अधर्मभीरुर्धर्मिष्ठो मायामात्सर्यवर्जितः ॥ ११

श्रद्दधानश्शुचिर्नित्यं पाकभेदविवर्जितः ॥ ११॥

स विमानेन दिव्येन दिव्यरूपी महायशाः ।

पुरन्दरपुरं याति गीयमानोऽप्सरोगणैः ॥ १२॥

मन्वन्तरं तु तत्रैकं क्रीडित्वा देवपूजितः ।

मनुष्यलोकमागम्य भोगवान् ब्राह्मणो भवेत् ॥ १३॥

दश जन्मानि विप्रत्वं प्राप्नुयाद्राजपूजितः ।

जातिस्मरश्च भवति यत्र यत्रैव जायते ॥* १४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥
॥ ९२ ॥ अनुगीतापर्वणि नवतितमोऽध्यायः ॥ ९० ॥
[ अस्मिन्नध्याये १४॥ श्लोकाः ]

## ॥ सप्ताधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति भूगोतिलकन्यादानफलप्रतिपादनम् ॥ १ ॥

श्रीभगवान्—

अतः परं प्रवक्ष्यामि भूमिदानमनुत्तमम् ॥ ॥

यः प्रयच्छति विप्राय भूमिं रम्यां सदक्षिणाम् ।

1. क-ख-ग-घ—नास्त्यध्यायसमाप्तिर्दृश्यते ।

श्रोत्रियाय दरिद्राय साग्निहोत्राय पाण्डव ॥ १॥

स सर्वकामतृप्तात्मा सर्वरत्नविभूषितः ।
सर्वपापविनिर्मुक्तो दीप्यमानोऽर्कवत् सदा ॥ २॥

बालसूर्यप्रकाशेन विचित्रध्वजशोभिना ।
याति यानेन दिव्येन मम लोकं महायशाः ॥ ३॥

तत्र दिव्याङ्गनाभिस्तु सेव्यमानो यथासुखम् ।
कामगः कामरूपी च क्रीडत्यप्सरसां गणैः ॥ ४॥

यावद्बिभर्ति लोकान् वै भूमिः कुरुकुलोद्वह ।
तावद्भूमिप्रदः कामं मम लोके महीयते ॥ ५॥

न हि भूमिप्रदानाद्वै दानमन्यद्विशिष्यते ।
न चापि भूमिहरणात् पापमन्यद्विशिष्यते ॥ ६॥

दानान्यन्यानि हीयन्ते कालेन कुरुपुङ्गव ।
भूमिदानस्य पुण्यस्य क्षयो नैवोपपद्यते ॥ ७॥

ब्राह्मणाय दरिद्राय भूमिं दत्त्वा तु यो नरः ।
न हिंसति नरव्याघ्र तस्य पुण्यफलं शृणु ॥ ८॥

सप्तद्वीपसमुद्रान्ता रत्नधान्यसमाकुला ।
सशैलवनदुर्गाढ्या तेन दत्ता मही भवेत् ॥ ९॥

भूमिं दृष्ट्वा दीयमानां श्रोत्रियायाहिताग्नये ।
सर्वभूतानि मन्यन्ते मां ददातीति हर्षवत् ॥ १०॥

सुवर्णमणिरत्नानि धनधान्यवसूनि च ।
सर्वदानानि वै राजन् ददाति वसुधां ददत् ॥ ११॥

सागरान् सरितश्शैलान् समानि विषमाणि च ।
सर्वगन्धान् रसान् स्नेहान् ददाति वसुधां ददत् ॥ १२॥

ओषधीः फलसम्पन्ना नानापुष्पफलोदकाः ।
कमलोत्पलषण्डांश्च ददाति वसुधां ददत् ॥ १३॥

धर्मं कामं तथा चार्थं वेदान् यज्ञांस्तथैव च ।
स्वर्गमोक्षगतीश्चैव ददाति वसुधां ददत् ॥ १४॥

अग्निष्टोमादिभिर्यज्ञैर् ये यजन्ति सदक्षिणैः ।
न तत् फलं भवेत् तेषां भूमिदानस्य यत् फलम् ॥ १५॥

श्रोत्रियाय महीं दत्त्वा यो न हिंसति पाण्डव ॥ १६

तं जनाः कथयिष्यन्ति यावल्लोकाः प्रतिष्ठिताः ।
तावत् स्वर्गोपभोगानां भोक्तारं पाण्डुनन्दन ॥ १७

[1]सस्यपूर्णां महीं यस्तु श्रोत्रियाय प्रयच्छति ।
पितरस्तस्य तृप्यन्ति यावदाभूतसम्प्लवम् ॥ १८

मम रुद्रस्य सवितुस् त्रिदशानां तथैव च ।
प्रीतये विद्धि राजेन्द्र भूमिर्दत्ता द्विजाय वै ॥ १९

तेन पुण्येन पूतात्मा दाता भूमेर्युधिष्ठिर ।

---

1. अ—श्लोकसप्तकं नास्ति

मम सालोक्यमाप्नोति नात्र कार्या विचारणा ॥ २०

यत् किञ्चित् कुरुते पापं पुरुषो वृत्तिकर्शितः ।
स च गोकर्णमात्रेण भूमिदानेन शुद्ध्यति ॥ २१

मासोपवासे यत् पुण्यं कृच्छ्रे चान्द्रायणेऽपि च ।
भूमिगोकर्णमात्रेण तत् पुण्यं तु विधीयते ॥ २२

[1]वेदानां पारणे यत्तु परं पुण्यमुदाहृतम् ।
भूमिगोकर्णमात्रेण तत् पुण्यं तु विधीयते ॥ २३

सर्वतीर्थाभिषेके च यत् पुण्यं समुदाहृतम् ।
भूमिगोकर्णमात्रेण तत् पुण्यं तु विधीयते ॥ २४

युधिष्ठिरः—

[2]देवदेव नमस्तेऽस्तु वासुदेव सुरेश्वर ।
गोकर्णस्य प्रमाणं वै वक्तुमर्हसि तत्त्वतः ॥ २५

श्रीभगवान्—

शृणु गोकर्णमात्रस्य प्रमाणं पाण्डुनन्दन ॥ २५॥

त्रिंशद्दण्डप्रमाणेन प्रमितं सर्वतोदिशम् ।
प्रत्यक् प्रागपि राजेन्द्र तत् तथा दक्षिणोत्तरम् ॥ २६॥

गोकर्णं तद्विदः प्राहुः प्रमाणं धरणेर्नृप ॥ २७

सवृषं गोशतं यत्र सुखं तिष्ठत्ययन्त्रितम् ।

---

1. ग-ब-च—अर्धद्वयं नास्ति　　2. अ—अर्धत्रयं नास्ति

सवत्सं कुरुशार्दूल तच्च गोकर्णमुच्यते ॥ २८

किङ्करा मृत्युदण्डाश्च कुम्भीपाकाश्च दारुणाः ।
घोराश्च वारुणाः पाशा नोपसर्पन्ति भूमिदम् ॥ २९

निरया रौरवाद्याश्च तथा वैतरणी नदी ।
तीव्राश्च यातनाः कष्टा नोपसर्पन्ति भूमिदम् ॥ ३०

चित्रगुप्तः कलिः कालः कृतान्तो मृत्युरेव च ।
यमश्च भगवान् साक्षात् पूजयन्ति महीप्रदम् ॥ ३१

रुद्रः पशुपतिश्शक्रस् सुरा ऋषिगणास्तथा ।
अहं च प्रीतिमान् राजन् पूजयामि महीप्रदम् ॥ ३२

कृशवृत्तस्य कृशगोः कृशाश्वस्य कृशातिथेः ।
भूमिर्देया नरश्रेष्ठ स निधिः पारलौकिकः ॥ ३३

सीदमानकुटुम्बाय श्रोत्रियायाहिताग्नये ।
व्रतस्थाय दरिद्राय भूमिर्देया नराधिप ॥ ३४

यथा जनित्री क्षीरेण पुत्रं वर्धयति ध्रुवम् ।
दातारमनुगृह्णाति दत्ता ह्येवं वसुन्धरा ॥ ३५

यथा बिभर्ति गौर्वत्सं सृजन्ती क्षीरमात्मनः ।
तथा सर्वगुणोपेता भूमिर्वहति भूमिदम् ॥ ३६

यथा बीजानि रोहन्ति जलसिक्तानि भूतले ।
तथा कामाः प्ररोहन्ति भूमिदस्य दिने दिने ॥ ३७

यथोदयस्तु सूर्यस्य तमस्सर्वं व्यपोहति ।
[1]तथा पापं नरस्येह भूमिदानं व्यपोहति ॥ ३८

[2]दाता दशानुगृह्णाति यो हरेद्दश हन्ति च ।
अतीतान्यागतानीह कुलानि कुरुपुङ्गव ॥ ३९

आश्रुत्य भूमिदानं तु दत्त्वा यो वा हरेत् पुनः ।
स बद्धो वारुणैः पाशैः क्षिप्यते पूयशोणिते ॥ ४०

स्वदत्तां परदत्तां वा यो हरेत वसुन्धराम् ।
न तस्य नरकाद्घोराद् विद्यते निष्कृतिः क्वचित् ॥ ४१

ब्राह्मणस्य हृते क्षेत्रे हन्याद्द्वादश पूर्वजान् ।
स गच्छेत् कृमियोनिं च न च मुच्येत जातु सः ॥ ४२

दत्त्वा भूमिं द्विजेन्द्राय यस्तामेवोपजीवति ।
गवां शतसहस्रस्य हन्तुस्स लभते फलम् ॥ ४३
[3]सोधश्शिरास्तु पापात्मा कुम्भीपाकेषु पच्यते ॥ ४३॥

दिव्यैर्वर्षसहस्रैस्तु कुम्भीपाकाद्विनिस्सृतः ।
इह लोके भवेत् स श्वा शतजन्मानि पाण्डव ॥ ४४॥

दत्त्वा भूमिं द्विजेन्द्राणां यस्तामेवोपजीवति ।
स मूढो याति दुष्टात्मा नरकानेकविंशतिम् ॥ ४५॥

---

1. अ—इदमर्धं नास्ति
2. क-ख-घ—इत आरभ्य द्विषष्टितमश्लोकपर्यन्तं नास्ति
3. अ-क-ख-घ—अर्धचतुष्टयं नास्ति

नरकेभ्यो विनिर्मुक्तश् शुनां योनिं स गच्छति ॥ ४६

हलकृष्टा मही देया सबीजा सस्यशालिनी ।
अथवा सोदका देया दरिद्राय द्विजातये ॥ ४७

एवं दत्ता मही राजन् प्रहृष्टेनान्तरात्मना ।
सर्वान् कामानवाप्नोति मनसा चिन्तितान्यपि ॥ ४८

बहुभिर्वसुधा दत्ता दीयते च नराधिपैः ।
यस्य यस्य यदा भूमिस् तस्य तस्य तदा फलम् ॥ ४९

यः प्रयच्छति कन्यां वै सुरूपां श्रोत्रियाय वै ।
स ब्रह्मदेवो राजेन्द्र तस्य पुण्यफलं शृणु ॥ ५०

बलीवर्दसहस्राणां दत्तानां धुर्यवाहिनाम् ।
यत् फलं लभते राजन् कन्यादानेन तत् फलम् ॥ ५१

गवां शतसहस्रस्य सम्यग् दत्तस्य यत् फलम् ।
तत् फलं समवाप्नोति यः प्रयच्छति कन्यकाम् ॥ ५२

यावन्ति चैव रोमाणि कन्यायाः कुरुपुङ्गव ।
तावद्वर्षसहस्राणि मम लोके महीयते ॥ ५३

ततश्चापि च्युतः कालाद् इह लोके स जायते ।
षडङ्गविच्चतुर्वेदी सर्वदेवार्चितो द्विजः ॥ ५४

यस्सुवर्णं दरिद्राय ब्राह्मणाय प्रयच्छति ।
श्रोत्रियाय सुवृत्ताय बहुपुत्राय पाण्डव ॥ ५५

स मुक्तस्सर्वपापेभ्यो बालसूर्यसमप्रभः ।
विमानं दिव्यमारूढः कामगः कामभोगवान् ॥ ५६

वर्षकोटिं महातेजा मम लोके प्रमोदते ॥ ५६॥

ततः कालावतीर्णश्च सोऽस्मिँल्लोकेऽभिजायते ।
वेदवेदाङ्गविद्विप्रः कोटीधनपतिर्महान् ॥ ५७॥

यश्च रूप्यं प्रयच्छेद्वै दरिद्राय द्विजातये ।
कृशवृत्तये कृशगवे स मुक्तस्सर्वकिल्बिषैः ॥ ५८॥

पूर्णचन्द्रप्रकाशेन विमानेन विराजता ।
कामरूपी यथाकामं स्वर्गलोके महीयते ॥ ५९॥

ततोऽवतीर्णः कालेन लोके चास्मिन् महायशाः ।
सर्वलोकार्चितश्श्रीमान् राजा भवति वीर्यवान् ॥ ६०॥

तिलपर्वतकं यस्तु श्रोत्रियाय प्रयच्छति ।
विशेषेण दरिद्राय तस्यापि शृणु यत् फलम् ॥ ६१॥

पुण्यं वृषायुतोत्सर्गे यत् प्रोक्तं पाण्डुनन्दन ।
तत् पुण्यं समनुप्राप्तस् तत्क्षणाद्विरजा भवेत् ॥ ६२॥

यथा त्वचं भुजङ्गो वै त्यक्त्वा दिव्यतनुर्भवेत् ।
तथा तिलप्रदानाद्वै पापं त्यक्त्वा विशुद्ध्यति ॥ ६३॥

तिलषण्डप्रयुक्तं च जाम्बूनदविभूषितम् ।
विमानं दिव्यमारूढः पितृलोके महीयते ॥ ६४॥

षष्टिं वर्षसहस्राणि कामरूपी महायशाः ।
तिलप्रदाता रमते पितृलोके यथासुखम् ॥ ६५॥

यः प्रयच्छति विप्राय तिलधेनुं नराधिप ।
श्रोत्रियाय दरिद्राय शृणु तस्यापि यत् फलम् ॥ ६६॥

गोसहस्रप्रदानेन यत् पुण्यं समुदाहृतम् ।
तत्पुण्यफलमाप्नोति तिलधेनुप्रदानतः ॥ ६७॥

तिलानां कुडवैर्यस्तु तिलधेनुं प्रयच्छति ।
तावत् कोटिसमा राजन् स्वर्गलोके महीयते ॥ ६८॥

अष्टाढकतिलैः कृत्वा तिलधेनुं नराधिप ।
द्वात्रिंशन्निष्कसंयुक्तं विषुवे यः प्रयच्छति ॥ ६९॥
मद्भक्त्या मद्गतात्मा वै तस्य पुण्यफलं शृणु ॥ ७०

कन्यादानसहस्रस्य विधिदत्तस्य यत् फलम् ।
तत् पुण्यं समनुप्राप्तो मम लोके महीयते ॥ ७१

मम लोकावतीर्णश्च सोऽस्मिँल्लोकेऽभिजायते ।
ऋग्यजुस्सामवेदानां पारगो ब्राह्मणर्षभः ॥ ७२

गां तु यस्तु दरिद्राय ब्राह्मणाय प्रयच्छति ।
प्रसन्नां क्षीरिणीं पुण्यां सवत्सां कांस्यदोहनीम् ॥ ७३

यत् किञ्चिद्दुष्कृतं कर्म तस्य पूर्वकृतं नृप ।
तत् सर्वं तत्क्षणादेव विनश्यति न संशयः ॥ ७४

यानं च वृषसंयुक्तं दीप्यमानमलङ्कृतम् ।
आरूढः कामगं दिव्यं गोलोकमधिगच्छति ॥ ७५

यावन्ति चैव रोमाणि तस्या गोस्तु नराधिप ।
तावद्वर्षसहस्राणि गवां लोके महीयते ॥ ७६

गोलोकादवतीर्णस्तु लोकेऽस्मिन् ब्राह्मणो भवेत् ।
सत्रयाजी शतायुश्च सर्वराजभिरार्चितः ॥ ७७

तिलं [1]गावस्सुवर्णं चाप्यन्नं कन्या वसुन्धरा ।
तारयन्तीह दत्तानि ब्राह्मणेभ्यो महाभुज ॥ ७८

ब्राह्मणं वृत्तसम्पन्नम् आहिताग्निमलोलुपम् ।
तर्पयेद्विधिवद्राजन् स निधिः पारलौकिकः ॥ ७९

आहिताग्निं दरिद्रं च श्रोत्रियं च जितेन्द्रियम् ।
शूद्रान्नविरतं चैव द्विजं यत्नेन पूजयेत् ॥ ८०

आहिताग्निस्सदा पात्रं साग्निहोत्रश्च वेदवित् ।
पात्राणामपि तत् पात्रं शूद्रान्नं यस्य नोदरे ॥ ८१

यच्च वेदमयं पात्रं यच्च पात्रं तपोमयम् ।
असङ्कीर्णं च यत् पात्रं तत् पात्रं तारयिष्यति ॥ ८२

नित्यस्वाध्यायनिरतास् त्वसङ्कीर्णेन्द्रियाश्च ये ।
पञ्चयज्ञपरा नित्यं पूजितास्तारयन्ति ते ॥ ८३

---

1. क-ख-ग—गां वस्त्रमन्नं च स्वर्णं कन्या ।

ये क्षान्तिदान्ताश्श्रुतिपूर्णकर्णा
जितेन्द्रियाः प्राणिवधे निवृत्ताः ।
प्रतिग्रहे सङ्कुचिता गृहस्थास्
ते ब्राह्मणास्तारयितुं समर्थाः ॥ ८४

नित्योदकी नित्ययज्ञोपवीती
नित्यस्वाध्यायी वृषलान्नवर्जी ।
ऋतौ गच्छन् विधिवच्चापि जुह्वत्
स ब्राह्मणस्तारयितुं समर्थः ॥ ८५

ब्राह्मणो यस्तु मद्भक्तो मद्याजी मत्परायणः ।
मयि सन्न्यस्तकर्मा च स विप्रस्तारयिष्यति ॥ ८६

द्वादशाक्षरतत्त्वज्ञश् चतुर्व्यूहविभागवित् ।
अच्छिद्रपञ्चकालज्ञस् स विप्रस्तारयिष्यति ॥ ८७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

॥ ९२ ॥ अनुगीतापर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥

[ अस्मिन्नध्याये ८७ श्लोकाः ]

---

## ॥ अष्टाधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति वृषभगृहशय्यादिदानप्रशंसनम् ॥ १ ॥ तथा गोब्राह्मणरक्षणादिनानाधर्मकथनम् ॥ २ ॥

वैशम्पायनः—

वासुदेवेन दानेषु कथितेषु यथाक्रमम् ।
अवितृप्तस्तु धर्मेषु राजा केशवमब्रवीत् ॥ १

युधिष्ठिरः—

देव धर्मामृतमिदं शृण्वतोऽपि परन्तप ।
न विद्यते सुरश्रेष्ठ मम तृप्तिर्हि माधव ॥ २

अनडुत्सम्प्रदानस्य यत् फलं तु विधीयते ।
तत् फलं कथयस्वेह तव भक्तस्य मेऽच्युत ॥ ३

यानि चान्यानि दानानि त्वया नोक्तानि कानि चित् ।
तान्याचक्ष्व सुरश्रेष्ठ तेषां चानुक्रमात् फलम् ॥ ४

श्रीभगवान्—

शृणु धर्मामृतं श्रेष्ठं वृत्तस्यानडुहः फलम् ।
पवित्रत्वात् सुपुण्यत्वात् पावनत्वात् तथैव च ॥ ५

दशधेनुसमोऽनड्वान् एकोऽपि कुरुपुङ्गव ।
मेदोमांसविपुष्टाङ्गो नीरोगः कोपवर्जितः ॥ ६

[1]युवा भद्रस्सुशीलश्च सर्वदोषविवर्जितः ।
धुरं [2]धारयतेऽनड्वान् दत्तो विप्राय पाण्डव ॥ ७

स तेन पुण्यदानेन वर्षकोटिं युधिष्ठिर ।
यथाकामं महातेजा गवां लोके महीयते ॥ ८

यश्च दद्यादनड्वाहौ द्वौ युक्तौ तु धुरन्धरौ ।
सुव्रताय दरिद्राय श्रोत्रियाय विशेषतः ॥ ९

तस्य यत् पुण्यमाख्यातं तच्छृणुष्व युधिष्ठिर ॥ ९॥

सहस्रगोप्रदानेन यत् प्रोक्तं फलमुत्तमम् ।
तत् पुण्यफलमाप्नोति याति लोकान् सनातनान् ॥ १०॥

यावन्ति चैव रोमाणि तयोश्चानडुहोर्नृप ।
तावद्वर्षसहस्राणि मम लोके महीयते ॥ ११॥

दरिद्रायैव दातव्यं न समृद्धाय पाण्डव ।
[3]वर्षाणां हि तटाकेषु फलं नैव पयोधिषु ॥ १२॥

यस्तु [4]दद्यादनडुहं दरिद्राय द्विजातये ।
स तेन पुण्यदानेन पूतात्मा कुरुपुङ्गव ॥ १३॥

विमानं दिव्यमारूढो दिव्यरूपी यथासुखम् ।

---

1. क-ख—इदमर्धं नास्ति
2. क-ख-ग—धुरं धरति योऽनड्वान् । च—धुरं धारयते क्षिप्रं ।
3. क—अर्धद्वयं नास्ति
4. ग-घ—नैवेशिकं दद्यात् । ख—नैवेधिगं दद्याद्दरिद्राय द्विजाय वै ।

मम लोकेषु रमते यावदाभूतसम्प्लवम् ॥　　१४॥

गृहं दीपप्रभायुक्तं शय्यासनविभूषितम् ।
भाजनोपस्करैर्युक्तं धान्यपूर्णमलङ्कृतम् ॥　　१५॥

दासीगोभूमिसंयुक्तम् अन्यूनं सर्वसाधनैः ॥　　१६

[1]ब्राह्मणाय दरिद्राय श्रोत्रियाय युधिष्ठिर ।
दद्यात् सदक्षिणं यस्तु तस्य पुण्यफलं शृणु ॥　　१७

देवाः पितृगणाश्चैव ह्यग्नयो ऋषयस्तथा ।
प्रयच्छन्ति प्रहृष्टा वै यानमादित्यसन्निभम् ॥　　१८

तेन गच्छेच्छ्रिया युक्तो ब्रह्मलोकमनुत्तमम् ॥　　१८॥

स्त्रीसहस्रावृते दिव्ये भवने तत्र काञ्चने ।
मोदते ब्रह्मलोकस्थो यावदाभूतसम्प्लवम् ॥　　१९॥

शय्यां प्रस्तरणोपेतां यः प्रयच्छति पाण्डव ।
अर्चयित्वा द्विजं भक्त्या वस्त्रमाल्यानुलेपनैः ॥　　२०॥

भोजयित्वा विचित्रान्नं तस्य पुण्यफलं शृणु ॥　　२१

धेनुदानस्य यत् पुण्यं विधिदत्तस्य पाण्डव ।
तत् पुण्यं समनुप्राप्य पितृलोके महीयते ॥　　२२

[2]स्वल्पमध्ययनं वाऽपि विद्यामन्त्रौषधानि च ।
यः प्रयच्छति विप्राय तस्य पुण्यफलं शृणु ॥　　२३

---

1. क—नवार्धानि न सन्ति ।　　2. अ-ग-व—क्षिप्त ।

आहिताग्निसहस्रस्य तर्पितस्येह यत् फलम् ।
तत् पुण्यफलमाप्नोति यस्तु विद्यां प्रयच्छति ॥ २४

छन्दोभिस्सम्प्रयुक्तेन विमानेन विराजता ।
सप्तर्षिलोकान् व्रजति पूज्यते ब्रह्मवादिभिः ॥ २५

चतुर्युगानि वै त्रिंशत् क्रीडित्वा तत्र देववत् ।
इह मानुष्यके लोके विप्रो भवति वेदवित् ॥ २६

विश्रामयति यो विप्रं श्रान्तमध्वनि कर्शितम् ।
विनश्यति तदा पापं तस्य वर्षकृतं नृप ॥ २७

अथ प्रक्षालयेत् पादौ तस्य तोयेन भक्तिमान् ।
दशवर्षकृतं पापं व्यपोहति न संशयः ॥ २८

घृतेन वाऽथ तैलेन पादौ तस्य तु पूजयेत् ।
स द्वादशसमारूढं पापमाशु व्यपोहति ॥ २९

धेनुदानस्य दत्तस्य यच्च पुण्यमुदाहृतम् ।
तत्पुण्यफलमाप्नोति यस्त्वेनं विप्रमर्चयेत् ॥ ३०

स्वागतेन तु यो विप्रं पूजयेदासनेन च ।
प्रत्युत्थानेन वा राजन् स देवानां प्रियो भवेत् ॥ ३१

स्वागतेनाग्नयो राजन्नासनेन शतक्रतुः ।
प्रत्युत्थानेन पितरः प्रीतिं यान्त्यतिथिप्रियाः ॥ ३२

[1]अग्निशक्रपितॄणां च तेषां प्रीत्या नराधिप ।
संवत्सरकृतं पापं तस्य सद्यो विनश्यति ॥ ३३

यः प्रयच्छति विप्राय आसनं माल्यभूषितम् ।
स याति मणियुक्तेन [2]रथेनेन्द्रनिकेतनम् ॥ ३४

[3]पुरन्दरासने तत्र दिव्यनारीविभूषितः ।
षष्टिं वर्षसहस्राणि क्रीडत्यप्सरसां गणैः ॥ ३५

[4]इह लोके तु धनवांश् चतुर्वेदी द्विजो भवेत् ॥ ३५॥

वाहनं यः प्रयच्छेत ब्राह्मणाय युधिष्ठिर ।
स याति रत्नचित्रेण वाहनेन सुरालयम् ॥ ३६॥

स तत्र कामं क्रीडित्वा सेव्यमानोऽप्सरोगणैः ।
इह राजा भवेद्राजन् नात्र कार्या विचारणा ॥ ३७॥

पादपं पल्लवाकीर्णं पुष्पितं सफलं तथा ।
गन्धमाल्यार्चितं कृत्वा वस्त्रभूषणभूषितम् ॥ ३८॥

यः प्रयच्छति विप्राय श्रोत्रियाय सदक्षिणम् ।
भोजयित्वा यथाकामं तस्य पुण्यफलं शृणु ॥ ३९॥

जाम्बूनदविचित्रेण विमानेन विराजता ।
पुरन्दरपुरं याति जयशब्दरवैर्युतः ॥ ४०॥

---

1. क—अर्धत्रयं नास्ति 2. अ-घ—वाहनेन सुरालयम् ।
3. अ-घ—अर्धचतुष्टयं नास्ति
4. ग—कोश एकस्मिन्नेवेदमर्धं दृश्यते ।

तत्र शक्रपुरे रम्ये तस्य कल्पकपादपः ।
ददाति चेप्सितं सर्वं मनसा यद्यदिच्छति ॥ ४१॥

यावन्ति तस्य पत्राणि पुष्पाणि च फलानि च ।
तावद्वर्षसहस्राणि शक्रलोके महीयते ॥ ४२॥

शक्रलोकावतीर्णश्च मानुष्यं लोकमागतः ।
रथाश्वगजसम्पूर्णं पुरं राज्यं च रक्षति ॥ ४३॥

स्थापयित्वा तु मद्भक्त्या यो मत्प्रतिकृतिं नरः ।
आलयं विधिवत् कृत्वा पूजाकर्माणि कारयेत् ॥ ४४॥
स्वयं वा पूजयेद्भक्त्या तस्य पुण्यफलं शृणु ॥ ४५

अश्वमेधसहस्रस्य यत् फलं समुदाहृतम् ।
तत् फलं समनुप्राप्तो मत्सालोक्यं प्रपद्यते ॥ ४६
न जाने निर्गमं तस्य मम लोकाद्युधिष्ठिर ॥ ४६॥

देवालये विप्रगृहे गोवाटे चत्वरेऽपि वा ।
प्रज्वालयति यो दीपं तस्य पुण्यफलं शृणु ॥ ४७॥

आरुह्य काञ्चनं यानं द्योतयन् सर्वतो दिशम् ।
गच्छेदादित्यलोकं स सेव्य[1]मानस्सुरोत्तमैः ॥ ४८॥

तत्र प्रकामं क्रीडित्वा वर्षकोटिं महायशाः ।
इह लोके भवेद्विप्रो वेदवेदाङ्गपारगः ॥ ४९॥

---

1. क-ख—मानोऽप्सरोगणैः । ग—मानो द्विजोत्तमैः ।

देवालयेषु वा राजन् ब्राह्मणावसथेषु वा ।
चत्वरे वा चतुष्के वा रात्रौ वा यदि वा दिवा ॥ ५०॥

नानागन्धर्ववाद्यानि धर्मश्रावणिकानि च ।
यस्तु कारयते भक्त्या मद्गतेनान्तरात्मना ॥ ५१॥

तस्य देवा नरश्रेष्ठ पितरश्चापि हर्षिताः ।
सुप्रीतास्सम्प्रयच्छन्ति विमानं कामगं शुभम् ॥ ५२॥

स च तेन विमानेन याति देवपुरं नरः ।
तत्र दिव्याप्सरोभिस्तु सेव्यमानः प्रमोदते ॥ ५३॥

देवलोकावतीर्णस्तु स लोकेऽस्मिन् नराधिप ।
वेदवेदाङ्गतत्वज्ञो भोगवान् ब्राह्मणो भवेत् ॥ ५४॥

चत्वरे वा सभायां वा विस्तीर्णे वा सभाङ्गणे ।
कृत्वाऽग्निकुण्डं विपुलं स्थण्डिलं वा युधिष्ठिर ॥ ५५॥

तत्राग्निं चतुरो मासान् ज्वालयेद्यस्तु भक्तिमान् ।
समाप्तेषु तु मासेषु पौष्यादिषु ततो द्विजान् ॥ ५६॥

भोजयेत् पायसं मृष्टं मद्गतेनान्तरात्मना ।
दक्षिणां च यथाशक्ति ब्राह्मणेभ्यो निवेदयेत् ॥ ५७॥

एवमग्निं तु यः कुर्यान्नित्यमेवार्चयंस्तु माम् ।
तस्य पुण्यफलं यद्वै तन्निबोध युधिष्ठिर ॥ ५८॥

तेनाहं शङ्करश्चैव पितरो ह्यग्नयस्तथा ।

यास्यामः परमां प्रीतिं नात्र कार्या विचारणा ॥ ५९॥
षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च ।
सोऽस्मत्प्रीतिकरः श्रीमान् मम लोके महीयते ॥ ६०॥
मम लोकावतीर्णश्च सोऽस्मिँल्लोके महायशाः ।
वेदवेदाङ्गविद्विप्रो जायते राजपूजितः ॥ ६१॥
यः करोति नरश्रेष्ठ भरणं ब्राह्मणस्य तु ।
श्रोत्रियस्याभिजातस्य दरिद्रस्य विशेषतः ॥ ६२॥
तस्य पुण्यफलं यद्वै तन्निबोध युधिष्ठिर ॥ ६३
गवां कोटिप्रदानेन यत् पुण्यं समुदाहृतम् ।
तत्पुण्यफलमाप्नोति वर्षेणैकेन पाण्डव ॥ ६४
काञ्चनेन विचित्रेण यानेनाम्बरशोभिना ।
स याति मामकं लोकं दिव्यस्त्रीगणसेवितः ॥ ६५
गीयमानो वरस्त्रीभिर् वर्षाणां कोटिर्विंशतिम् ॥ ६५॥
क्रीडित्वा मामके लोके तत्र देवैरभिष्टुतः ।
मानुष्यमवतीर्णस्तु वेदविद्ब्राह्मणो भवेत् ॥ ६६॥
करकं कुण्डिकां वाऽपि महद्वा जलभाजनम् ।
यः प्रयच्छति विप्राय तस्य पुण्यफलं शृणु ॥ ६७॥
[1]ब्रह्मकूर्चेन यत् पीते फलं प्रोक्तं युधिष्ठिर ।

---

1. क-ख-ग-घ—ब्रह्मकूर्चं पयः पीते फलं प्रोक्तं यथाविधि ।
च—ब्रह्मकूर्चेन यत् प्रेते फलं + विधि ।

तत्पुण्यफलमाप्नोति जलभाजनदो नरः ॥ ६८॥

सुतृप्तस्सुप्रभस्सौम्यः प्रहृष्टेन्द्रियमानसः ।
हंससारसयुक्तेन विमानेन विराजता ॥ ६९॥

स याति वारुणं लोकं दिव्यगन्धर्वसेवितः ॥ ७०

[1]पानीयं यः प्रयच्छेद्वै जीवानां जीवनं परम् ।
ग्रीष्मकेषु तु मासेषु तस्य पुण्यफलं शृणु ॥ ७१

कपिलाकोटिदानस्य यत् पुण्यं तु विधीयते ।
तत्पुण्यफलमाप्नोति पानीयं यः प्रयच्छति ॥ ७२

पूर्णचन्द्रप्रकाशेन विमानेन विराजता ।
स गच्छेच्चन्द्रसदनं सेव्यमानोऽप्सरोगणैः ॥ ७३

[2]त्रिंशत्कोटिशतं तत्र दिव्यगन्धर्वसेवितः ।
क्रीडित्वा मानुषे लोके चतुर्वेदी द्विजो भवेत् ॥ ७४

शिरोभ्यङ्गप्रदानेन तेजस्वी प्रियदर्शनः ।
[3]सुभगो रूपवाञ्छूरः पण्डितश्च भवेद्द्विजः ॥ ७५

वस्त्रदायी तु पुरुषस् तेजस्वी प्रियदर्शनः ।
सुभगो भवति श्रीमान् स्त्रीणां नित्यं मनोरमः ॥ ७६

[4]उपानहौ च च्छत्रं च यो ददाति नरोत्तमः ॥ ७६॥

---

1. च – इदमादि अर्धसप्तकं नास्ति　2. अ—अर्धपञ्चकं नास्ति
3. ग—अर्धद्वयं नास्ति　4. अ—अर्धपञ्चकं नास्ति

स याति रथमुख्येन काञ्चनेन विराजता ।
शक्रलोकं महातेजास् सेव्यमानोऽप्सरोगणैः ॥ ७७॥

काष्ठपादुकदा यान्ति विमानैर्वृक्षनिर्मितैः ।
धर्मराजपुरं रम्यं सेव्यमानास्सुरोत्तमैः ॥ ७८॥

दन्तकाष्ठप्रदानेन प्रियवाक्यो भवेन्नरः ।
सुगन्धवदनश्श्रीमान् मेधासौभाग्यसंयुतः ॥ ७९॥

क्षीरं दधि घृतं वाऽपि गुडं मधुरसं तथा ।
ये प्रयच्छन्ति विप्रेभ्यः परां भक्तिं गता नराः ॥ ८०॥

ते धृषैरश्वयानैश्च श्वेतस्रग्दामभूषिताः ।
उपगीयमाना गन्धर्वैर् यान्तीश्वरपुरं नराः ॥ ८१॥

तत्र दिव्याप्सरोभिस्तु सेव्यमाना यथासुखम् ।
षष्टिवर्षसहस्राणि मोदन्ते देवसन्निभाः ॥ ८२॥

ततः कालावतीर्णाश्च जायन्ते त्विह मानवाः ।
प्रभूतधनधान्याश्च भोगवन्तो नरोत्तमाः ॥ ८३॥

वैशाखे [1]मासि वैशाखे दिवसे पाण्डुनन्दन ।
वैवस्वतं समुद्दिश्य परां भक्तिमुपागताः ॥ ८४॥

अभ्यर्च्य विधिवद्विप्रांस् तिलान् गुडसमायुतान् ।
ये प्रयच्छन्ति विप्रेभ्यस् तेषां पुण्यफलं शृणु ॥ ८५॥

---

1. अ-घ-च—माघमासे वा ।

गोप्रदानेन यत् पुण्यं विधिवत् पाण्डुनन्दन ।
तत् पुण्यं समनुप्राप्तो यमलोके महीयते ॥　　८६॥
ततश्चापि च्युतः कालाद् इह राजा भविष्यति ॥　　८७

तस्मिन्नेव दिने विप्रान् भोजयित्वा सदक्षिणम् ।
तोयपूर्णानि दिव्यानि भाजनानि दिशन्ति ये ॥　　८८

ते यान्त्यादित्यवर्णाभैर् विमानैर्वरुणालयम् ।
तत्र दिव्याङ्गनाभिस्तु रमन्ते कामगामिनः ॥　　८९

ततोऽवतीर्णाः कालेन ते चास्मिन् मानुषे पुनः ।
भोगवन्तो द्विजश्रेष्ठा भविष्यन्ति न संशयः ॥　　९०

अनन्तराशी यश्चापि वर्तते व्रतवत् सदा ॥　　९०॥

[1]सत्यवाक् क्रोधरहितस् शुचिस्स्नानरतस्सदा ।
स विमानेन दिव्येन याति शक्रपुरं नरः ॥　　९१॥

[2]तत्र दिव्याप्सरोभिस्तु वर्षकोटिं महातपाः ।
क्रीडित्वा मानुषे लोके जायते वेदविद्द्विजः ॥　　९२॥

[3]एकभुक्तेन यश्चापि वर्षमेकं तु वर्तते ।
ब्रह्मचारी जितक्रोधस् सत्यशौचसमन्वितः ॥　　९३॥

---

1. ग—इदमादि अर्धषट्कं नास्ति
2. क-ख—इदमाद्यर्धपञ्चकं नास्ति
3. घ—इतः सार्धं श्लोकद्वयं नास्ति

स विमानेन दिव्येन याति शक्रपुरं सुखम् ॥ ९४

दशकोटिसमास्तत्र क्रीडित्वाऽप्सरसां गणैः ।
इह मानुष्यके लोके ब्राह्मणो वेदविद् भवेत् ॥ ९५

चतुर्थकाले यो भुङ्क्ते ब्रह्मचारी जितेन्द्रियः ।
वर्तते वर्षमेकं तु तस्य पुण्यफलं शृणु ॥ ९६

चित्रबर्हिणयुक्तेन विचित्रध्वजशोभिना ।
याति यानेन दिव्येन स महेन्द्रपुरं नरः ॥ ९७

अकृशाभिर्वरस्त्रीभिस् सेव्यमानो यथासुखम् ।
तत्र द्वादशकोटिं स समास्सम्यक् प्रमोदते ॥ ९८

शक्रलोकावतीर्णस्तु लोके चास्मिन् नराधिप ।
भवेद्वै ब्राह्मणो विद्वान् क्षमावान् वेदपारगः ॥ ९९

षष्ठकालं तु योऽश्नाति वर्षमेकमकल्मषः ।
ब्रह्मचर्यव्रतैर्युक्तश् शुचिः क्रोधविवर्जितः ॥ १००

तपोयुक्तस्य तस्यापि शृणुष्व फलमुत्तमम् ॥ १००॥

अत्यादित्यप्रकाशेन विमानेनार्कसन्निभः ।
स याति मम लोकान् वै दिव्यनारीनिषेवितः ॥ १०१॥

तत्र साध्यैर्मरुद्भिश्च पूज्यमानो यथासुखम् ।
पश्यन्नेव सदा मां तु क्रीडत्यप्सरसां गणैः ॥ १०२॥

पक्षोपवासं यश्चापि कुरुते मद्गतात्मना ।
समाप्ते तु व्रते तस्मिस् तर्पयेच्छ्रोत्रियाञ्छुचीन् ॥  १०३॥
सोऽपि गच्छति दिव्येन विमानेन महातपाः ।
द्योतयन् प्रभया व्योम मम लोकं प्रपद्यते ॥  १०४॥
स तत्र मोदते कामं कामरूपी यथासुखम् ॥  १०५
त्रिंशत्कोटिसमा राजन् क्रीडित्वा तत्र देववत् ।
इह मानुष्यके लोके पूजनीयो द्विजोत्तमः ॥  १०६
त्रयाणामपि वेदानां साङ्गानां पारगो भवेत् ॥  १०६॥
यश्च मासोपवासं वै कुरुते मद्गतात्मना ।
जितेन्द्रियो जितक्रोधो जितधीस्स्नानतत्परः ॥  १०७॥
समाप्ते नियमे तत्र भोजयित्वा द्विजोत्तमान् ।
दक्षिणां च ततो दद्यात् प्रहृष्टेनान्तरात्मना ॥  १०८॥
स गच्छति महातेजा ब्रह्मलोकमनुत्तमम् ।
सिंहयुक्तेन यानेन दिव्यस्त्रीगणसेवितः ॥  १०९॥
[1]स तत्र ब्रह्मणो लोके देवर्षिगणसेवितः ।
शतकोटिसमा राजन् यथाकामं प्रमोदते ॥  ११०॥
ततः कालावतीर्णश्च सोऽस्मिँल्लोके द्विजो भवेत् ।
षडङ्गविच्चतुर्वेदी त्रिंशज्जन्मान्यरोगवान् ॥  १११॥

---

1. क-ख-ग-घ—नास्तीदमर्धम्।

यस्त्यक्त्वा सर्वकर्माणि शुचिः क्रोधविवर्जितः ।
महाप्रस्थानमेकाग्रो याति मद्गतमानसः ॥ ११२॥

स गच्छेदिन्द्रसदनं विमानेन विराजता ।
महामणिविचित्रेण सौवर्णेन विराजता ॥ ११३॥

शतकोटिसमास्तत्र सुराधिपतिपूजितः ।
नाकपृष्ठे निवसति दिव्यस्त्रीगणसेवितः ॥ ११४॥

शक्रलोकावतीर्णश्च मानुषेषूपजायते ।
राज्ञां राजा महातेजास् सर्वलोकार्चितः प्रभुः ॥ ११५॥

प्रायोपवेशं यः कुर्यान्मद्गतेनान्तरात्मना ॥ ११६

नमो ब्रह्मण्यदेवायेत्युक्त्वा मन्त्रं समाहितः ।
अन्तस्स्वस्थो जितक्रोधस् तस्य पुण्यफलं शृणु ॥ ११७

कामगः कामरूपी च बालसूर्यसमप्रभः ।
स विमानेन दिव्येन याति लोकाननामयान् ॥ ११८

स्वर्गात् स्वर्गं महातेजा गत्वा गत्वा यथासुखम् ।
मम लोकेषु रमते यावदाभूतसम्प्लवम् ॥ ११९

[1]अग्निप्रवेशं यश्चापि कुरुते मद्गतात्मना ।
सोऽपि यानेन दिव्येन मम लोके महीयते ॥ १२०

तव सर्वगुणोपेतः पश्यन्नेव स मां सदा ।

1. ग—इत आरभ्य एकादश श्लोका न दृश्यन्ते ।

त्रिंशत्कोटिसमा राजन् मोदते मम सन्निधौ ॥ १२१

ततोऽवतीर्णः कालेन वेदविद्ब्राह्मणो भवेत् ॥ १२१॥

कर्षणं साधयन् यस्तु मां प्रपन्नश्शुचिव्रतः ।
नमो ब्रह्मण्यदेवायेत्येतन्मन्त्रमुदीरयन् ॥ १२२॥

बालसूर्यप्रकाशेन विमानेन विराजता ।
मम लोकं समासाद्य वर्षकोटिं प्रमोदते ॥ १२३॥

मम लोकावतीर्णश्च लोकेऽस्मिन् क्षत्रियो भवेत् ॥ १२४

निवेशयति मन्मूर्त्याम् आत्मानं मद्गतश्शुचिः ।
रुद्रदक्षिणमूर्त्यां वा चतुर्दश्यां विशेषतः ॥ १२५

सिद्धैर्ब्रह्मर्षिभिश्चैव देवलोकैश्च पूजितः ।
गन्धर्वैर्भूतसङ्घैश्च गीयमानो महातपाः ॥ १२६

प्रविशेत् स महातेजा मां वा शङ्करमेव वा ।
न स्यात् पुनर्भवो राजन् नात्र कार्या विचारणा ॥ १२७

गोकृते स्त्रीकृते चैव गुरुविप्रकृतेऽपि वा ।
[1]हन्यन्ते ये तु राजेन्द्र शक्रलोकं व्रजन्ति ते ॥ १२८

तत्र जाम्बूनदमये विमाने कामगामिनि ।
मन्वन्तरं प्रमोदन्ते दिव्यनारीनिषेविताः ॥ १२९

आश्रुतस्याप्रदानेन दत्तस्य हरणेन च ।

1. क-ख—हन्यते योऽपि राजेन्द्र शक्रलोके महीयते ।

जन्मप्रभृति यद्दत्तं सर्वं नश्यति भारत ॥ १३०

नागोप्रदास्तत्र पयः पिबन्ति
नाभूमिदा भूमिमथाश्नुवन्ति ।
यान् यान् कामान् ब्राह्मणेभ्यो ददाति
तांस्तान् कामान् स्वर्गलोके स भुङ्क्ते ॥ १३१

यद्यदिष्टतमं द्रव्यं न्यायेनोपार्जितं च यत् ।
तत्तद् गुणवते देयं तदेवाक्षयमिच्छता ॥ १३२

अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनं गां च दरिद्रो नाम जायते ॥ १३३

दानं यत् तत्फलं नैति श्रोत्रियाय न दीयते ।
श्रोत्रिया यत्र नाश्नन्ति न देवास्तत्र भुञ्जते ॥ १३४

श्रोत्रियेभ्यः परं नास्ति परमं दैवतं महत् ।
निधानं चापि राजेन्द्र नास्माच्छ्रोत्रियभोजनात् ॥ १३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

॥ ९२ ॥ अनुगीतापर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥

[ अस्मिन्नध्याये १३५ श्लोकाः ]

———

## ॥ नवाधिकशततमोऽध्यायः ॥



कृष्णेन युधिष्ठिरं प्रति पञ्चमहायज्ञनिरूपणं, स्नानविधिनिरूपणं, वैष्णवलक्षणाभिधानं स्वपूजायोग्यायोग्यपुष्पविवेचनं च ॥ १ ॥

युधिष्ठिरः—

विप्रयोगे शरीरस्य सेन्द्रियस्य विशेषतः ।
अन्तरा वर्तमानस्य गतिः प्राणस्य कीदृशी ॥ १

श्रीभगवान्—

शुभाशुभकृतं सर्वं प्राप्नोतीह फलं नरः ।
न तु सर्वस्य भूतस्य पञ्चत्वं वाऽपि विद्यते ॥ २
पञ्चत्वं पाण्डवश्रेष्ठ भूरिभूतिकरं नृणाम् ॥ २॥
तेषां पञ्च महायज्ञान् ये कुर्वन्ति द्विजोत्तमाः ।
पञ्चत्वं पञ्चभिर्भूतैर् वियोगं सम्प्रचक्षते ॥ ३॥
न जायते न म्रियते पुरुषश्शाश्वतस्सदा ॥ ४
प्रायेण मरणं नाम पापिनामेव पाण्डव ।
येषां तु न गतिः पुण्या तेषां मरणमुच्यते ॥ ५
प्रायेणाकृतकृत्यस्तु मृत्योरुद्विजते जनः ।
कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम् ॥ ६

युधिष्ठिरः—

पञ्च यज्ञाः कथं देव क्रियन्तेऽत्र द्विजातिभिः ।

तेषां नाम च देवेश वक्तुमर्हस्यशेषतः ॥ ७

श्रीभगवान्—

शृणु पञ्च महायज्ञान् कीर्त्यमानान् युधिष्ठिर ।
यैरेव ब्रह्मसालोक्यं लभन्ते गृहमेधिनः ॥ ८

ऋषियज्ञं ब्रह्मयज्ञं भूतयज्ञं च पाण्डव ।
नृयज्ञं पितृयज्ञं च पञ्च यज्ञान् प्रचक्षते ॥ ९

तर्पणं ऋषियज्ञस्स्यात् स्वाध्यायो ब्रह्मयज्ञकम् ॥ ९॥

भूतयज्ञो बलिर्ज्ञेयो नृयज्ञोऽतिथिपूजनम् ।
पितॄनुद्दिश्य यत् कर्म पितृयज्ञः प्रकीर्तितः ॥ १०॥

हुतं चाप्यहुतं चैव तथा प्रहुतमेव च ।
प्राशितं बलिदानं च [1]पाकयज्ञान् प्रचक्षते ॥ ११॥

वैश्वदेवादयो होमा हुतमित्युच्यते बुधैः ।
अहुतं च भवेद्दत्तं प्रहुतं ब्राह्मणाशितम् ॥ १२॥

प्राणाग्निहोत्रहोमं च प्राशितं विधिवद्विदुः ।
बलिकर्म च राजेन्द्र पाकयज्ञाः प्रकीर्तिताः ॥ १३॥

[2]केचित् पञ्च महायज्ञान् पाकयज्ञान् प्रचक्षते ।
[3]अपरे ब्रह्मयज्ञादीन् महायज्ञविदो विदुः ॥ १४॥

---

1. क-ख-ग—पञ्च य। च—पञ्च यज्ञाः प्रकीर्तिताः।
2. अ—इदमर्धं नास्ति   3. ख—नास्तीदमर्धम्।

सर्वे एते महायज्ञास् सर्वथा परिकीर्तिताः ।
बुभुक्षितान् ब्राह्मणांस्तु यथाशक्ति न हापयेत् ॥　　१५॥

अहन्यहनि ये त्वेतान् अकृत्वा भुञ्जते स्वयम् ।
केवलं मलमश्नन्ति ते नरा न च संशयः ॥　　१६॥

तस्मात् स्नात्वा द्विजो विद्वान् कुर्यादेतान् दिने दिने ।
अतोऽन्यथा तु भुञ्जन् वै प्रायश्चित्ती भवेद्द्विजः ॥　　१७॥

युधिष्ठिरः—

देवदेव नमस्तेऽस्तु त्वद्भक्तस्य जनार्दन ।
वक्तुमर्हसि देवेश स्नानस्य च विधिं मम ॥　　१८॥

श्रीभगवान्—

शृणु पाण्डव तत् सर्वं पवित्रं पापनाशनम् ।
स्नात्वा येन विधानेन मुच्यन्ते किल्बिषाद्द्विजाः ॥　　१९॥

मृदं च गोमयं चैव तिलान् दर्भांस्तथैव च ।
पुष्पाण्यपि यथालाभम् आदाय तु जलं व्रजेत् ॥　　२०॥

नद्यां सत्यां न च स्नायाद् अन्यत्र द्विजसत्तमः ।
सति प्रभूते पयसि नाल्पे स्नायात् कदाचन ॥　　२१॥

[1]गत्वोदकसमीपं तु शुचौ देशे मनोरमे ।
ततो मृद्गोमयादीनि तत्रावेक्ष्य विनिक्षिपेत् ॥　　२२॥

बहिः प्रक्षाल्य पादौ च द्विराचम्य प्रयत्नतः ।

---

1. ग—अर्धपञ्चकं नास्ति

प्रदक्षिणं समावृत्य नमस्कुर्यात्तु तज्जलम् ॥ २३॥

न च प्रक्षालयेत् तीर्थम् अद्भिर्विद्वान् कदाचन ।
न च पादेन वा हन्याद्धस्तेनान्येन तज्जलम् ॥ २४॥

[1]सर्वदेवमया ह्यापो मन्मयाः पाण्डुनन्दन ।
तस्मात् तास्तु न हन्तव्यास् त्वद्भिः प्रक्षालयेत् स्थलं ॥ २५॥

केवलं प्रथमं मज्जेन्नाङ्गानि विमृजेद्बुधः ।
तत् तीर्थे स समासाद्य कुर्यादाचमनं पुनः ॥ २६॥

[2]गोकर्णाकृतिवत् कृत्वा करं त्रिः प्रपिबेज्जलम् ॥ २७

द्विस्तत् परिमृजेदङ्गं पादावभ्युक्ष्य चात्मनः ।
शीर्षण्यांस्तु ततः प्राणान् सकृदेव तु संस्पृशेत् ॥ २८

बाहू द्वौ च ततस्स्पृष्ट्वा हृदयं नाभिमेव च ।
प्रत्यङ्गमुदकं स्पृष्ट्वा मूर्धानं तु ततस्स्पृशेत् ॥ २९

आपः पुनन्त्वित्युक्त्वा च पुनराचमनं चरेत् ।
सोङ्कारव्याहृतीर्वाऽपि सदसस्पतिमित्यृचम् ॥ ३०

आचम्य मृत्तिकाः पश्चात् त्रिधाकृत्य समालभेत् ॥ ३०॥

ऋचेदं विष्णुरित्यङ्गम् उत्तमाधममध्यमम् ।
आलभ्य वारुणैस्सूक्तैर् नमस्कृत्य जलं ततः ॥ ३१॥

---

1. क-ख-च—अर्धपञ्चकं नास्ति
2. अ-क-ख-ब-श्वपुच्छाकृतिवत्। च-गोकर्णवत् करं कृत्वा ब्राह्मणस्त्रिः

स्रवन्त्यां चेत् प्रतिस्रोतः प्रत्यर्कं चान्यवारिषु ।
मज्जेदोमित्युदाहृत्य न च विक्षोभयेज्जलम् ॥ ३२॥

गोमयं च त्रिधा कृत्वा जले पूर्वं समालभेत् ।
सव्याहृतिं सप्रणवां गायत्रीं च पुनर्जपेत् ॥ ३३॥

पुनराचमनं कृत्वा मद्गतेनान्तरात्मना ।
आपोहिष्ठेति तिसृभिर् दर्भपूतेन वारिणा ॥ ३४॥

तथा तरत्समन्दीभिस् सिञ्चेच्चतसृभिः क्रमात् ॥ ३५

गोसूक्तेनाश्वसूक्तेन शुद्धवर्गेण चाप्यथ ।
वैष्णवैर्वारुणैस्सूक्तैस् [1]सावित्रैरिन्द्रदेवतैः ॥ ३६

वामदेव्येन चात्मानम् अन्यैर्मन्मयसामभिः ।
स्थित्वाऽन्तस्सलिले सूक्तं जपेद्वाचाऽघमर्षणम् ॥ ३७

सव्याहृतीकां सप्रणवां गायत्रीं वा ततो जपेत् ।
आश्वासमोक्षात् प्रणवं जपेद्वा मामनुस्मरन् ॥ ३८

उत्प्लुत्य तीरमासाद्य धौते शुक्ले च वाससी ।
शुद्धे चाच्छादयेत् कक्षे न कुर्यात् परिपाशके ॥ ३९

पाशेन बद्ध्वा कक्षे यत् कुरुते कर्म वैदिकम् ।
राक्षसा दानवा दैत्यास् तद्विलुम्पन्ति हर्षिताः ॥ ४०

1. क-ख-ग—वैष्णवैरिन्द्र ।

तस्मात् सर्वप्रयत्नेन [1]कच्छपाशे न धारयेत् ॥ ४०॥

ततः प्रक्षाल्य पादौ द्वौ हस्तौ चैव मृदा शनैः ।
आचम्य पुनराचामेत् ततस्सावित्रिया द्विजः ॥ ४१॥

[2]प्राङ्मुखोदङ्मुखो वाऽपि ध्यायन् वेदान् समाहितः ॥ ४२

जले जलगतश्शुद्धस् स्थल एव स्थले स्थितः ।
उभयत्र स्थितस्तस्माद् आचामेदात्मशुद्धये ॥ ४३

दर्भेषु दर्भपाणिस्सन् प्राङ्मुखस्सुसमाहितः ।
प्राणायामांस्ततः कृत्वा मद्गतेनान्तरात्मना ॥ ४४

सहस्रकृत्वस्सावित्रीं शतकृत्वस्तु वा जपेत् ॥ ४४॥

समाप्ते तु जपे तस्मिन् सावित्र्या चाभिमन्त्र्य च ।
मन्देहानां विनाशाय रक्षसां विक्षिपेज्जलम् ॥ ४५॥

उद्वर्गोऽसीत्यथाचान्तः प्रायश्चित्तजलं क्षिपेत् ॥ ४६

अथादाय सुपुष्पाणि तोयान्यञ्जलिना द्विजः ।
प्रक्षिप्य प्रतिसूर्यं च व्योममुद्रां प्रकल्पयेत् ॥ ४७

ततो द्वादशकृत्वस्तु सूर्यस्यैकाक्षरं जपेत् ।
ततष्षडक्षरादीनि त्रिः कृत्वः परिवर्तयेत् ॥ ४८

प्रदक्षिणं परामृज्य मुद्रया स्वमुखं तया ।

---

1. अ-च—कक्ष्यापाशे। ग-च—कक्ष्यां पा।
2. क-ख-ग-घ-च—नास्तीदमर्धम्।

ऊर्ध्वबाहुस्ततो भूत्वा सूर्यमीक्षेत् समाहितः ॥ ४९

तन्मण्डलस्थं मां ध्यायेत् तेजोमूर्तिं चतुर्भुजम् ।
उदुत्यं च जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि ॥ ५०

सावित्रीं च यथाशक्ति जप्त्वा सूक्तं च मामकम् ।
मन्मयानि च सामानि पुरुषव्रतमेव च ॥ ५१

ततश्चालोकयेदर्कं हंसश्शुचिषदित्यृचा ॥ ५१॥

प्रदक्षिणं समावृत्य नमस्कृत्य दिवाकरम् ।
ततस्तु तर्पयेदद्भिर् मां ब्रह्माणं च शङ्करम् ॥ ५२॥

प्रजापतिं च देवांश्च तथा देवमुनीनपि ।
साङ्गानपि तथा वेदान् इतिहासान् क्रतूंस्तथा ॥ ५३॥

पुराणानि च दिव्यानि कुलान्यप्सरसां तथा ।
ऋतून् संवत्सरांश्चैव कालान् कालात्मकं तथा ॥ ५४॥

भूतग्रामांश्च भूतानि सरितस्सागरांस्तथा ।
शैलाञ्शैलस्थितान् देवान् ओषधीस्सवनस्पतीः ॥ ५५॥

तर्पयेदुपवीती तु प्रत्येकं तृप्यतामिति ॥ ५६

अन्वारभ्य च सव्येन पाणिना दक्षिणेन तु ।
निवीती तर्पयेत् पश्चाद् ऋषीन् मन्त्रकृतस्तथा ॥ ५७

मरीच्यादिमुनींश्चैव नारदान्तान् समाहितः ॥ ५७॥

प्राचीनावीत्यथैतांस्तु तर्पयेद्देवताः पितॄन् ॥ ५८

ततस्तु कव्यवाडग्निं सोमं वैवस्वतं तथा ।
ततश्चार्यमणं चापि अग्निष्वात्तांस्तथैव च ॥ ५९

सोमपांश्चैव दर्भेषु सतिलैरेव वारिभिः ।
तृप्यतामिति पश्चात्तु स्वपितॄंस्तर्पयेत् ततः ॥ ६०

पितॄन् पितामहांश्चैव तथैव प्रपितामहान् ।
पितामहीस्तथा चापि तथैव प्रपितामहीः ॥ ६१

[1]मातरं चात्मनश्चैव तथा मातामहीमपि ।
मातुर्मातामहीं चैव गुरुमाचार्यमेव च ॥ ६२

उपाध्यायान् सखीन् बन्धून् शिष्यर्त्विग्ज्ञातिपुत्रकान् ।
प्रमीतानानृशंस्यार्थं [2]तर्पयेत् तानमत्सरः ॥ ६३

तर्पयित्वा तथाऽऽचम्य स्नानवस्त्रं प्रपीडयेत् ।
[3]वृद्धिं भृत्यजनस्याहुस् स्नानं पानं च तद्विदः ॥ ६४

अतर्पयित्वा तान् पूर्वं स्नानवस्त्रं न पीडयेत् ॥ ६४॥

पीडये[4]च्चेत् पुरा मोहाद् देवास्सर्षिगणास्तथा ।
पितरश्च निराशास्ते शप्त्वा यान्ति यथागतम् ॥ ६५॥

---

1. क-ग-च—तथा पितृष्वसॄश्चैव मातृष्वसॄस्तथैव च। [अधिकः पाठः]
2. ग—तर्पयेज् ज्ञानतत्परः।
3. क-ख-ग-घ—श्लोकोऽयं नास्ति
4. क-ख-ग—च न तन्मोहाद्।

प्रक्षाल्य च मृदा पादावाचम्य प्रयतः पुनः ।
दर्भेषु दर्भपाणिस्सन् स्वाध्यायं तु समारभेत् ॥ ६६॥

वेदमादौ समारभ्य ततोपर्युपरि क्रमात् ।
यदधीते स्वयं शक्त्या तत् स्वाध्यायं प्रचक्षते ॥ ६७॥

ऋचं वाथ यजुर्वाऽपि [1]सामगाथामथापि च ।
इतिहासपुराणानि यथाशक्ति न हापयेत् ॥ ६८॥

उत्थाय तु नमस्कृत्य दिशो दिग्देवता अपि ।
[2]ब्रह्माणं च ततश्चाग्निं पृथिवीमोषधीस्तथा ॥ ६९॥

वाचं वाचस्पतिं चैव मां चैव सरितस्तथा ।
नमस्कृत्वा तथाऽद्भिस्तु प्रणवादि च पूजयेत् ॥ ७०॥

ततो नमोऽद्ध्य इत्युक्त्वा नमस्कुर्यात्तु तज्जलम् ॥ ७१

घृणिस्सूर्यस्तथाऽऽदि[3]त्यस् त्रिस्स्वमूर्ध्नि ततो जलैः ।
सिक्त्वाऽवलोकयेदर्कं प्रणवेन समाहितः ॥ ७२

ततो मामर्चयेत् पुष्पैर् मत्प्रियैरेव नित्यशः ॥ ७२॥

युधिष्ठिरः—

त्वत्प्रियाणि प्रसूनानि त्वदनिष्टानि माधव ।
सर्वाण्याचक्ष्व देवेश त्वद्भक्तस्य ममाच्युत ॥ ७३॥

---

1. ग—साम आथर्वमेव च ।
2. ग-च—ब्राह्मणांश्च ततश्चाग्निं + स्तथा ।
3. क-ख-ग-च—त्यस्तर्पयेच्च स्वमूर्धनि ।
   च—घृणिसूर्यं तथाऽऽदित्यान् तत्प्रणम्य स्वमूर्धनि ।

श्रीभगवान्—

शृणुष्वावहितो राजन् पुष्पाणि प्रियकृन्ति मे ॥ ७४

कुमुदं करवीरं च चणकं चम्पकं तथा ।
मल्लिका जातिपुष्पं च नन्द्यावर्तं च नन्दिकम् ॥ ७५

पलाशपुष्पपत्राणि दूर्वा भृङ्गकमेव च ।
वनमाला च राजेन्द्र मत्प्रियाणि विशेषतः ॥ ७६

सर्वेषामपि पुष्पाणां सहस्रगुणमुत्पलम् ।
तस्मात् पद्मं तथा राजन् पद्मात्तु शतपत्रकम् ॥ ७७

तस्मात् सहस्रपत्रं तु पुण्डरीकं ततः परम् ।
पुण्डरीकसहस्रात्तु तुलसी गुणतोऽधिका ॥ ७८

बकपुष्पं ततस्तु स्यात् सौवर्णं तु ततोऽधिकम् ।
सौवर्णात्तु प्रसूनाच्च मत्प्रियं नास्ति पाण्डव ॥ ७९

पुष्पालाभे तुलस्यास्तु पत्रैर्मामर्चयेद्बुधः ।
पत्रालाभे तु शाखाभिश् शाखालाभे शिफाफलैः ॥ ८०

शिफालाभे मृदा तत्र भक्तिमानर्चयेत माम् ॥ ८०॥

[1]येन केन प्रकारेण तुलसीदलपूर्वकैः ।
पुष्पैः फलैर्वाऽप्यन्नाद्यैर् मदाराधनमुत्तमम् ॥ ८१॥

वर्जनीयानि पुष्पाणि शृणु राजन् समाहितः ॥ ८२

1. च—कोश एकस्मिन्नेवायं श्लोको लक्ष्यते ।

किङ्किणी मुनिपुष्पं च दुत्तूरं पाटलं तथा ।
तथाऽतिमुक्तकं चैव पुन्नागं नक्तमालिकम् ॥ ८३

यौधिकं क्षीरिकापुष्पं निर्गुण्डी लाङ्गुली जपा ।
कर्णिकारं तथाऽशोकं शाल्मलीपुष्पमेव च ॥ ८४

ककुभाः कोविदाराश्च वैभीतकमथापि च ।
कुरण्टकप्रसूनं च कल्पकं लाङ्गली तथा ॥ ८५

अङ्कोलं गिरिकर्णी च नीलान्येव च सर्वशः ॥
एकवर्णानि चान्यानि सर्वाण्येव विवर्जयेत् ॥ ८६

अर्कपुष्पाणि वर्ज्यानि चार्कपत्रस्थितानि च ।
व्याघातपिचुमन्दानि सर्वाण्येव विवर्जयेत् ॥ ८७

अन्यैस्तु शुक्लपत्रैश्च गन्धवद्भिर्नराधिप ।
अवर्ज्यैस्तैर्यथालाभं मद्भक्तो मां समर्चयेत् ॥ ८८

युधिष्ठिरः—

कथं त्वमर्चनीयोऽसि मूर्तयः कीदृशास्तु ते ।
वैखानसाः कथं ब्रूयुः कथं वा पाञ्चरात्रिकाः ॥ ८९

श्रीभगवान्—

शृणु पाण्डव तत् सर्वम् अर्चनाक्रममात्मनः ।
स्थण्डिले पद्मकं कृत्वा चाष्टपत्रं सकर्णिकम् ॥ ९०

अष्टाक्षरविधानेन ह्यथवा द्वादशाक्षरैः ।
वैदिकैरथवा मन्त्रैर् मम सूक्तेन वा पुनः ॥ ९१

[1]स्थापितं मां ततस्तस्मिन्नर्चयित्वा विचक्षणः ।
पुरुषं च ततस्सत्यम् अच्युतं च युधिष्ठिर ॥ ९२
अनिरुद्धं च मां प्राहुर् वैखानसविदो जनाः ॥ ९२॥
अन्ये त्वेवं विजानन्ति मां राजन् पाञ्चरात्रिकाः ॥ ९३
वासुदेवं च राजेन्द्र सङ्कर्षणमथापि वा ।
प्रद्युम्नमनिरुद्धं च चतुर्मूर्तिं प्रचक्षते ॥ ९४
एताश्चान्याश्च राजेन्द्र संज्ञाभेदेन मूर्तयः ।
विद्ध्यनर्थान्तरा एवं मामेवं चार्चयेद्बुधः ॥ ९५
[2]अत्यन्तभेदरहितं गुणपूर्णं सदैव हि ॥ ९५॥

युधिष्ठिरः—

त्वद्भक्ताः कीदृशा देव कानि तेषां व्रतानि च ।
एतत् कथय देवेश त्वद्भक्तस्य ममाच्युत ॥ ९६॥

श्रीभगवान्—

अनन्यदेवताभक्ता ये मद्भक्तजनप्रियाः ।
मामेव शरणं प्राप्तास् ते मद्भक्ताः प्रकीर्तिताः ॥ ९७॥
स्वर्ग्याण्यपि यशस्यानि मत्प्रियाणि विशेषतः ।
मद्भक्तः पाण्डवश्रेष्ठ व्रतानीमानि धारयेत् ॥ ९८॥
नान्यदाच्छादयेद्वस्त्रं मद्भक्तो जलतारणे ।

1. ग—इदमर्धं नास्ति 2. ख-घ-ग—नास्तीदमर्धम् ।

स्वस्थस्तु न दिवा स्वप्येन्मधुमांसानि वर्जयेत् ॥　९९॥

प्रदक्षिणं व्रजेद्विप्रान् गामश्वत्थं हुताशनम् ।
न धावेत् पतिते वर्षे नाग्रभिक्षां च लोपयेत् ॥　१००॥

प्रत्यक्षलवणं नाद्यात् सौभाञ्जनकरञ्जनौ ।
ग्रासमुष्टिं गवे दद्याद् धान्याम्लं चैव वर्जयेत् ॥　१०१॥

[1]तथा पर्युषितं चापि पक्वं परगृहागतम् ।
अनिवेदितं च यद्द्रव्यं तत् प्रयत्नेन वर्जयेत् ॥　१०२॥

विभीतककरञ्जानां छायां दूरात्तु वर्जयेत् ।
विप्रदेवपरीवादं न वदेत् पीडितोऽपि सन् ॥　१०३॥

सात्विका राजसाश्चापि तामसाश्चापि पाण्डव ।
मामर्चयन्ति मद्भक्तास् तेषामीदृग्विधा गतिः ॥　१०४॥

तामसास्तिमिरं यान्ति राजसा रज एव तत् ।
सात्विकास्सत्वसम्पन्नास् सत्वमेव प्रयान्ति ते ॥　१०५॥

ये सिद्धास्सन्ति साङ्ख्येन योगसत्वबलेन च ।
नभस्यादित्यचन्द्राभ्यां पश्यन्ति पदविस्तरम् ॥　१०६॥

एकस्तम्भे नवद्वारे त्रिस्थूणे पञ्चधातुके ।
एतस्मिन् देहनगरे राजसस्तु सदा भवेत् ॥　१०७॥

उदिते सवितर्याप्य क्रियायुक्तस्य धीमतः ।

1. अ-च—अर्धद्वयं नास्ति

चतुर्वेदविदश्चापि देहे षड् वृषलास्स्मृताः ॥ १०८॥
[1]क्षत्रियास्सप्त विज्ञेया वैश्यास्त्वष्टौ प्रकीर्तिताः ।
नियताः पाण्डवश्रेष्ठ शूद्राणामेकविंशतिः ॥ १०९॥

कामः क्रोधश्च लोभश्च मोहश्च मद एव च ।
महामोहश्च इत्येते देहे षड् वृषलास्स्मृताः ॥ ११०॥

गर्वस्तंभो ह्यहङ्कार ईर्ष्या च द्रोह एव च ।
पारुष्यं क्रूरता चेति सप्तैते क्षत्रियास्स्मृताः ॥ १११॥
तीक्ष्णता निकृतिर्माया शाठ्यं डम्भो ह्यनार्जवम् ।
पैशुन्यमनृतं चैव वैश्यास्त्वष्टौ प्रकीर्तिताः ॥ ११२॥
[2]तृष्णा बुभुक्षा निद्रा च ह्यालस्यं चाघृणाऽदया ।
आधिश्चापि विषादश्च प्रमादो हीनसत्वता ॥ ११३॥
भयं विक्लबता जाड्यं पापकं मन्युरेव च ।
आशा चाश्रद्दधानत्वम् अनवस्थाप्यमन्त्रणम् ॥ ११४॥
अशौचं मलिनत्वं च शूद्रा ह्येते प्रकीर्तिताः ॥ ११५
यस्मिन्नेते न दृश्यन्ते स वै ब्राह्मण उच्यते ॥ ११५॥
येषु येषु हि भावेषु यत्कालं वर्तते द्विजः ।
तत्तत्कालं स विज्ञेयो ब्राह्मणो ज्ञानदुर्बलः ॥ ११६॥

---
1. अ—अर्धचतुष्टयं नास्ति
2. अ—अर्धपञ्चकं नास्ति

प्राणानायम्य यत्काले यो मां चापि विचिन्तयेत् ।
तत्काले वै द्विजो ज्ञेयश् शेषकाले ह्यथेतरः ॥ ११७॥

तस्मात्तु सात्विको भूत्वा शुचिः क्रोधविवर्जितः ।
मामर्चयेत्तु सततं मत्प्रियत्वं यदीच्छति ॥ ११८॥

अलोलजिह्वस्समुपस्थितो धृतिं
निधाय चक्षुर्युगमात्रमेव च ।
मनश्च वाचं च निगृह्य चञ्चलं
भयान्निवृत्तो मम भक्त उच्यते ॥ ११९॥

ईदृशा ध्यानिनो ये तु ब्राह्मणा नियतेन्द्रियाः ।
तेषां श्राद्धेषु तृप्यन्ति तेन तृप्ताः पितामहाः ॥ १२०॥

धर्मो जयति नाधर्मस् सत्यं जयति नानृतम् ।
क्षमा जयति न क्रोधः क्षमावान् ब्राह्मणो भवेत् ॥ १२१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥

॥ ९२ ॥ अनुगीतापर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥

[ अस्मिन्नध्याये १२१॥ श्लोकाः ]

---

## ॥ दशाधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति दशधा कपिलाविभागकथनपूर्वकं तद्दान-प्रशंसनम् ॥

वैशम्पायनः—

दानपुण्यफलं श्रुत्वा तपः पुण्यफलानि च ।
धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ॥ १

युधिष्ठिरः—

या चैषा कपिला देव पूर्वमुत्पादिता विभो ।
होमधेनुस्सदा पुण्या चतुर्वक्त्रेण माधव ॥ २

सा कथं ब्राह्मणेभ्यो हि देया कस्मिन् दिनेऽपि वा ।
कीदृशाय च विप्राय दातव्या पुण्यलक्षणा ॥ ३

कति वा कपिलाः प्रोक्तास् स्वयमेव स्वयम्भुवा ।
कैर्वा देयाश्च ता देव श्रोतुमिच्छामि तत्त्वतः ॥ ४

वैशम्पायनः—

एवमुक्तो हृषीकेशो धर्मपुत्रेण संसदि ।
अब्रवीत् कपिलासङ्ख्यां तासां माहात्म्यमेव च ॥ ५

श्रीभगवान्—

शृणु पाण्डव तत्त्वेन पवित्रं पावनं परम् ।
यच्छ्रुत्वा पापकर्माऽपि नरः पापैः प्रमुच्यते ॥ ६

अग्निमध्योद्भवां दिव्याम् अग्निज्वालासमप्रभाम् ।
अग्निज्वालोज्ज्वलच्छृङ्गीं प्रदीप्ताङ्गारलोचनाम् ॥ ७

अग्निपुच्छामग्निखुराम् अग्निरोमप्रभान्विताम् ।
तामाग्नेयीमग्निजिह्वाम् अग्निग्रीवां ज्वलत्प्रभाम् ॥ ८

भुञ्जते कपिलां ये तु शूद्रा लोभेन मोहिताः ।
पतितांस्तान् विजानीयाच् चण्डालसदृशा हि ते ॥ ९

न तेषां ब्राह्मणः कश्चिद् गृहे कुर्यात् प्रतिग्रहम् ।
दूराच्च परिहर्तव्या महापातकिनो हि ते ॥ १०

सर्वकालं हि ते सर्वैर् वर्जिताः पितृदैवतैः ।
ते सदा ह्यप्रतिग्राह्या ह्यसम्भाष्याश्च पापिनः ॥ ११

पिबन्ति कपिलां यावत् तावत् तेषां पितामहाः ।
अमेध्यमुपभुञ्जन्ति भूम्यां वै श्वसृगालवत् ॥ १२

कपिलाया घृतं क्षीरं दधि तक्रमथापि वा ।
ये शूद्रा उपभुञ्जन्ति तेषां गतिमिमां शृणु ॥ १३

कपिलोपजीवी शूद्रस्तु मृतो गच्छति रौरवम् ।
क्लिश्यते रौरवे घोरे वर्षकोटिशतं वसन् ॥ १४

रौरवाच्च परिभ्रष्टो विष्ठायां जायते क्रिमिः ॥ १४॥

विष्ठागर्तेषु संविष्टो दुर्गन्धेषु सहस्रशः ।
तत्र तत्रोपजायेत नोत्तारं तत्र विन्दति ॥ १५॥

ब्राह्मणश्चैव यस्तेषां गृहे कुर्यात् प्रतिग्रहम् ।
ततः प्रभृति तस्यापि पितरस्स्युरमेध्यपाः ॥ १६॥

न तेन सार्धं सम्भाषेन्न चाप्येकासनं व्रजेत् ।
स नित्यं वर्जनीयो हि दूरात्तु ब्राह्मणाधमः ॥ १७॥

यस्तेन सह सम्भाषेद् एकशय्यां व्रजेत वा ।
प्राजापत्यं चरेत् कृच्छ्रं स च तेन विशुद्ध्यति ॥ १८॥

कपिलोपजीविनश्शूद्राद् यः करोति प्रतिग्रहम् ।
प्रायश्चित्तं भवेत् तस्य विप्रस्यैतन्न संशयः ॥ १९॥

ब्रह्मकूर्चं प्रकुर्वीत चान्द्रायणमथापि वा ।
मुच्यते किल्बिषात् तस्माद् एतेन ब्राह्मणो हि सः ॥ २०॥

कपिला ह्यग्निहोत्रार्थे यज्ञार्थे च स्वयम्भुवा ।
सर्वतस्तेज उद्धृत्य ब्रह्मणा निर्मिता पुरा ॥ २१॥

पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम् ।
पुण्यानां परमं पुण्यं कपिला पाण्डुनन्दन ॥ २२॥

तपसां तप एवाग्र्यं व्रतानां व्रतमुत्तमम् ।
दानानां परमं दानं निधानं ह्येतदक्षयम् ॥ २३॥

पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ।
पवित्राणि च रम्याणि सर्वलोकेषु पाण्डव ॥ २४॥

तेभ्यस्तेजस्समुद्धृत्य ब्रह्मणा लोककर्तृणा ।

लोकनिस्तरणार्थैव निर्मिता कपिला स्वयम् ॥ २५॥
सर्वतेजोमयी ह्येवं कपिला पाण्डुनन्दन ।
सदाऽमृतवहा मेध्या शुचिः पावनमुत्तमम् ॥ २६॥
क्षीरेण कपिलायास्तु दध्ना च सघृतेन वा ।
होतव्यान्यग्निहोत्राणि सायं प्रातर्द्विजातिभिः ॥ २७॥
कपिलाया घृतेनापि दध्ना क्षीरेण वा पुनः ।
जुह्वते येऽग्निहोत्राणि ब्राह्मणा विधिवत् प्रभो ॥ २८॥
पूजयन्त्यतिथींश्चैव परां भक्तिमुपागताः ।
शूद्रान्नविरता नित्यं डम्भानृतविवर्जिताः ॥ २९॥
ते यान्त्यादित्यसङ्काशैर् विमानैर्द्विजसत्तमाः ।
सूर्यमण्डलमध्येन ब्रह्मलोकमनुत्तमम् ॥ ३०॥
ब्रह्मणो भवने दिव्ये कामगाः कामरूपिणः ।
ब्रह्मणा पूज्यमानास्तु मोदन्ते कल्पमक्षयम् ॥ ३१॥
एवं हि कपिला राजन् [1]पुण्या मन्त्रामृताराणिः ।
आदावेवाग्निमध्यात्तु मैत्रेयी ब्रह्मनिर्मिता ॥ ३२॥
शृङ्गाग्रे कपिलायास्तु सर्वतीर्थानि पाण्डव ।
ब्रह्मणो हि नियोगेन निवसन्ति दिने दिने ॥ ३३॥
प्रातरुत्थाय यो मर्त्यः कपिलाशृङ्गमस्तकात् ।

1. क-ख-ग—पुण्यामृतवितारिणी ।

च्युता आपस्तु शीर्षेण धारयेत् प्रयतश्शुचिः ॥ ३४॥

स तेन पुण्यतीर्थेन सहसा दग्धकिल्बिषः ।
वर्षत्रयकृतं पापं प्रदहत्यग्निवत् तृणम् ॥ ३५॥

मूत्रेण कपिलायास्तु यस्तु प्रातरुपस्पृशेत् ।
स्नानेन तेन पुण्येन नष्टपापस्स मानवः ॥ ३६॥
त्रिंशद्वर्षकृतात् पापान्मुच्यते नात्र संशयः ॥ ३७

प्रातरुत्थाय यो भक्त्या प्रयच्छेत् तृणमुष्टिकम् ।
तस्य नश्यति तत् पापं त्रिंश[1]द्रात्रकृतं नृप ॥ ३८

प्रातरुत्थाय मद्भक्त्या कुर्याद्यस्तां प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन पृथिवी नात्र संशयः ॥ ३९

प्रदक्षिणेन चैकेन श्रद्धायुक्तस्य पाण्डव ।
दशरात्रकृतं पापं तस्य तन्नश्यति ध्रुवम् ॥ ४०

[2]कपिलापञ्चगव्येन यस्स्नायात्तु शुचिर्नरः ।
स गङ्गाद्येषु तीर्थेषु स्नातो भवति पाण्डव ॥ ४१

[3]तेन स्नानेन तस्यापि श्रद्धायुक्तस्य पाण्डव ।
दशरात्रकृतं पापं तत्क्षणादेव नश्यति ॥ ४२

दृष्ट्वा तु कपिलां भक्त्या श्रुत्वा हुङ्कारनिस्स्वनम् ।

---

1. क-ख-च—द्वात्रिंकृतं । ग—द्वर्षकृतं ।
2. अ-घ—अर्धचतुष्टयं नास्ति 3. च—अर्धद्वयं नास्ति

व्यपोहति नरः पापम् अहोरात्रकृतं नृप ॥ ४३

यत्र वा तत्र वा चाङ्गे कपिलां यस्स्पृशेच्छुचिः ।
संवत्सरकृतं पापं विनाशयति पाण्डव ॥ ४४

गोसहस्रं च यो दद्याद् एकां च कपिलां नरः ।
[1]समं तस्य फलं प्राह ब्रह्मलोके पितामहः ॥ ४५

[2]यस्त्वेकां कपिलां हन्यान्नरः कश्चित् प्रमादतः ।
गोसहस्रं हतं तेन भवेन्नात्र विचारणा ॥ ४६

यस्त्वेकां कपिलां दद्याच् छ्रोत्रियायाहिताग्नये ।
गवां शतसहस्रं तु दत्तं भवति पाण्डव ॥ ४७

दशेह कपिलाः प्रोक्तास् स्वयमेव स्वयम्भुवा ।
यो दद्याच्छ्रोत्रियेभ्यो वै स्वर्गं गच्छति तच्छृणु ॥ ४८

प्रथमा स्वर्णकपिला द्वितीया गौरपिङ्गला ।
तृतीया रक्तपिङ्गाक्षी चतुर्थी गलपिङ्गला ॥ ४९

पञ्चमी बभ्रुवर्णाभा षष्ठी च श्वेतपिङ्गला ।
सप्तमी रक्तपिङ्गाक्षी त्वष्टमी खुरपिङ्गला ॥ ५०

नवमी पाटला ज्ञेया दशमी पुच्छपिङ्गला ।

---

1. क-ख-ग—इदमर्धं नास्ति। तत्स्थाने, यस्त्वेकां कपिलां दद्यात् स तस्मात्तु विशिष्यते। [पाठान्तरम्]
2. अ—कपिलापञ्चगव्येन यस्स्नायात्तु शुचिर्नरः। स गङ्गादिषु तीर्थेषु स्नातो भवति भारत॥ [अधिकः पाठः]

[1]दशैताः कपिलाः प्रोक्तास् तारयन्ति नरान् सदा ॥ ५१
मङ्गल्याश्च पवित्राश्च सर्वपापप्रणाशनाः ।
एवमेव ह्यनड्वाहो दश प्रोक्ता नरेश्वर ॥ ५२
ब्राह्मणो वाहयेत् तांस्तु नान्यो वर्णः कथञ्चन ।
[2]न वाहयेच्च कपिलां क्षेत्रे वाऽध्वनि वा द्विजः ॥ ५३
वाहयेद्धुङ्कृतेनैव शाखया वा सपत्रया ।
न दण्डेन न यष्ट्या वा न पाशेन च वा पुनः ॥ ५४
न क्षुत्तृष्णाश्रमश्रान्तान् वाहयेद्विकलेन्द्रियान् ।
सुतृप्तेषु तु भुञ्जीयात् पिबेत् पीतेषु चोदकम् ॥ ५५
शुश्रूषोर्मातरश्चैताः पितरस्ते प्रकीर्तिताः ।
अह्नां पूर्वे त्रिभागे तु धुर्याणां वाहनं स्मृतम् ॥ ५६
विश्रामेन्मध्यमे भागे भागे चान्ते यथासुखम् ॥ ५६॥
यत्र वा त्वरया कृत्यं संशयो यत्र चाध्वनि ।
वाहयेत् तत्र धुर्यांस्तु न स पापेन लिप्यते ॥ ५७॥
अन्यथा वाहयन् राजन् निरयं याति रौरवम् ॥ ५८
रुधिरं वाहयेत् तेषां यस्तु मोहान्नराधिप ।
भ्रूणहत्यासमं पापं तस्य स्यात् पाण्डुनन्दन ॥ ५९
तेन पापेन पापात्मा नरकं यात्यसंशयम् ॥ ५९॥

---

1. ख—अर्धचतुष्टयं नास्ति 2. क-ख-ग-च—न घातयेत्तु दण्डेन ।

नरकेषु च सर्वेषु समास्स्थित्वा शतं शतम् ।
इह मानुष्यके लोके बलीवर्दो भविष्यति ॥ ६०॥

तस्मात्तु मुक्तिमन्विच्छन् दद्यात्तु कपिलां नरः ॥ ६१

कपिलां वाहयेद्यस्तु वृषलो लोभमोहितः ।
तेन देवास्त्रयस्त्रिंशत् पितरश्चापि वाहिताः ॥ ६२

स देवैः पितृभिर्नित्यं वध्यमानस्सुदुर्मतिः ।
नरकान्नरकं घोरं गच्छेदाप्रलयं नृप ॥ ६३

ब्रह्मा रुद्रस्तथाऽग्निश्च कपिलानां गतिं गताः ।
तस्मात् ते तु न हन्तव्याः पूज्यास्ते तु विशेषतः ॥ ६४

निश्श्वसन्ति यदा श्रान्तास् तदा हन्युश्च तत् कुलम् ॥ ६४॥

यावन्ति तेषां रोमाणि तावद्वर्षशतं नृप ।
नरके परिपच्यन्ते तत्र तद्वाहका नराः ॥ ६५॥

कपिला सर्वयज्ञेषु दक्षिणार्थं विधीयते ।
तस्मात्तद्दक्षिणा देया यज्ञेष्वेव द्विजातिभिः ॥ ६६॥

होमार्थं चाग्निहोत्रस्य यां प्रयच्छेत् प्रयत्नतः ।
श्रोत्रियाय दरिद्राय श्रान्ताय च यतात्मने ॥ ६७॥

तेन दानेन पूतात्मा सोऽग्निलोके महीयते ॥ ६८

यावन्ति चैव रोमाणि कपिलायां नरेश्वर ।

तावद्वर्षसहस्राणि नरस्स्वर्गे महीयते ॥ ६९

सुवर्णखुरशृङ्गीं च कपिलां यः प्रयच्छति ।
विषुवे चायने चापि सोऽश्वमेधफलं लभेत् ॥ ७०
तेनाश्वमेधतुल्येन मम लोकं स गच्छति ॥ ७०॥

स्वर्णशृङ्गीं रूप्यखुरां सवत्सां कांस्यदोहनाम् ।
वस्त्रैरलङ्कृतां पुष्टां गन्धैर्माल्यैश्च शोभिताम् ॥ ७१॥

पवित्रं हि पवित्राणां सुवर्णमिति मे मतिः ।
तस्मात् सुवर्णाभरणा दातव्या चाग्निहोत्रिणे ॥ ७२॥

एवं दत्त्वा तु राजेन्द्र सप्त पूर्वान् परानपि ।
तारयिष्यति राजेन्द्र नात्र कार्या विचारणा ॥ ७३॥

अग्निष्टोमसहस्रस्य वाजपेयं च तत्समम् ।
वाजपेयसहस्रस्य अश्वमेधं च तत्समम् ॥ ७४॥
अश्वमेधसहस्रस्य राजसूयं च तत्समम् ॥ ७५

[1]कपिलानां सहस्रेण विधिदत्तेन पाण्डव ।
राजसूयफलं प्राप्य मम लोके महीयते ॥ ७६
न तस्य पुनरावृत्तिर् विद्यते कुरुपुङ्गव ॥ ७६॥

[2]प्रयच्छते यः कपिलां सचेलां
सकांस्यदोहां कनकाग्र्यशृङ्गीम् ।

---

1. च—इदमर्धं नास्ति
2. अ-ब—प्रयच्छते यः कपिलां सचेलां कांस्यदोहनाम् ।[ पाठान्तरम् ]

तैस्तैर्गुणैः कामदुघा हि भूत्वा
नरं प्रदातारमुपैति सा गौः ॥ ७७॥

स्वकर्मभिश्चाप्यनुबध्यमानं
तीव्रान्धकारे नरके पतन्तम् ।
महार्णवे नौरिव वायुनीता
दत्ता हि गौस्तारयते मनुष्यम् ॥ ७८॥

पुत्रांश्च पौत्रांश्च कुलं च सर्वम्
आसप्तमं तारयते परत्र ।
यावन्मनुष्यान् पृथिवी बिभर्ति
तावत् प्रदातारमितोऽपरत्र ॥ ७९॥

यथौषधं मन्त्रकृतं नरस्य
प्रयुक्तमात्रं विनिहन्ति रोगान् ।
तथैव दत्ता कपिला सुपात्रे
पापं नरस्याशु निहन्ति सर्वम् ॥ ८०॥

यथैव दृष्ट्वा भुजगास्सुपर्णं
नश्यन्ति दूराद्विवशा भयार्ताः ।
तथैव दृष्ट्वा कपिलाप्रदानं
नश्यन्ति पापानि नरस्य शीघ्रम् ॥ ८१॥

यथा त्वचं स्वां भुजगो विहाय
पुनर्नवं रूपमुपैति पुण्यम् ।
तथैव मुक्तः पुरुषस्स्वपापैर्
विराजते वै कपिलाप्रदानात् ॥ ८२॥

यथाऽन्धकारं नयनेषु लग्नं
दीप्तो हि निर्यातयति प्रदीपः ।
तथा नरे पापमतिप्रलीनं
निर्यातयेद्वै कपिलाप्रदानम् ॥ ८३॥

यावन्ति रोमाणि भवन्ति तस्या
वत्सान्वितायाश्च शरीरजानि ।
तावत् प्रदाता युगवर्षकोटिं
स ब्रह्मलोके रमते मनुष्यः ॥ ८४॥

यस्याहिताग्नेरतिथिप्रियस्य
शूद्रान्नदूरस्य जितेन्द्रियस्य ।
सत्यव्रतस्याध्ययनान्वितस्य
दत्ता हि गौस्तारयते परत्र ॥ ८५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥
॥ ९२ ॥ अनुगीतापर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

[ अस्मिन्नध्याये ८५॥ श्लोकाः ]

## ॥ एकादशाधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति कपिलादानप्रशंसनम् ॥ १ ॥ ब्रह्मणाऽग्निकुण्डमध्यात् कपिलासर्जनम् ॥२॥ तदा रुद्रादिदेवैः कपिलायै सर्वपूज्यत्वादिरूपवरदानम् ॥ ३ ॥ देवर्ष्यादिभिः स्वनिवासाय कपिलावयवसमाश्रयणम् ॥४॥ कृष्णेन हव्यकव्यदानकालकथनम् ॥५॥ तथा श्राद्धार्हानर्हब्राह्मणविवेचनम् ॥६॥ तथा स्वर्गनरकप्रापकसुकृतदुष्कृतकथनम् ॥ ७ ॥

वैशम्पायनः—

एवं श्रुत्वा परं पुण्यं कपिलादानमुत्तमम् ।
धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ॥ १

युधिष्ठिरः—

देवदेवेश कपिला यदा विप्राय दीयते ।
कथं सर्वेषु चाङ्गेषु तस्यास्तिष्ठन्ति देवताः ॥ २

याश्चैताः कपिलाः प्रोक्ता दश चैव त्वया मम।
तासां कति सुरश्रेष्ठ कपिलाः पुण्यलक्षणाः ॥ ३

[1]कथं वाऽनुगृहीतास्तास् सुरैः पितृगणैरपि ।
केन युक्ताश्च वर्णेन श्रोतुं कौतूहलं हि मे ॥ ४

वैशम्पायनः—

युधिष्ठिरेणैवमुक्तः केशवस्सत्यवाक् तदा ।
गुह्यानां परमं गुह्यं वक्तुमेवोपचक्रमे ॥ ५

1. अ—इदमर्धं नास्ति

श्रीभगवान्—

शृणु राजन् पवित्रं वै रहस्यं धर्ममुत्तमम् ।
ग्रहणीयं सत्यमिदं न श्राव्यं हेतुवादिना ॥ ६

यदा वत्सस्य पादौ द्वौ प्रसवे शिरसा सह ।
दृश्येते दानकालं तम् आहुः कालविदो जनाः ॥ ७

अन्तरिक्षगतो वत्सो यावद्भूमिं न यास्यति ।
गौस्तावत् पृथिवी ज्ञेया तस्माद्देया तु तादृशी ॥ ८

यावन्ति धेनो रोमाणि सवत्साया युधिष्ठिर ।
यावन्त्यस्सिकताश्चापि गर्भोदकपरिप्लुताः ॥ ९

तावद्वर्षसहस्राणि दाता स्वर्गे महीयते ॥ ९॥

सुवर्णाभरणां कृत्वा सवत्सां कपिलां तिलैः ।
प्रच्छाद्य तां तु दद्याद्वै सर्वरत्नैरलङ्कृताम् ॥ १०॥

ससमुद्रनदी तेन सशैलवनकानना ।
चतुरन्ता भवेद्दत्ता नात्र कार्या विचारणा ॥ ११॥

पृथिवीदानतुल्येन तेन दानेन मानवः ।
संसारसागरात् तीर्णो याति लोकं प्रजापतेः ॥ १२॥

ब्रह्महा यदि वा गोघ्नो भ्रूणहा गुरुतल्पगः ।
महापातकयुक्तोऽपि दानेनानेन शुद्ध्यति ॥ १३॥

इदं पठति यः पुण्यं कपिलादानमुत्तमम् ।

प्रातरुत्थाय मद्भक्त्या तस्य पुण्यफलं शृणु ॥ १४॥

मनसा कर्मणा वाचा मतिपूर्वं [1]युधिष्ठिर ।
[2]पापं रात्रिकृतं हन्याद् अस्याध्यायस्य पाठकः ॥ १५॥

इदमावर्तमानस्तु श्राद्धे यस्तर्पयेद्द्विजान् ।
तस्याप्यमृतमश्नन्ति पितरोऽत्यन्तहर्षिताः ॥ १६॥

यश्चेदं शृणुयाद्भक्त्या मद्गतेनान्तरात्मना ।
तस्य रात्रिकृतं सर्वं पापमाशु प्रणश्यति ॥ १७॥

अतः परं विशेषं तु कपिलानां ब्रवीमि ते ॥ १८

याश्चैताः कपिलाः प्रोक्ता दश राजन् मया तव ।
तासां चतस्रः प्रवराः पवित्राः पापनाशनाः ॥ १९

[3]सुवर्णकपिला पुण्या तथा रक्ताक्षिपिङ्गला ।
पिङ्गलाक्षी च या गौश्च या स्यात् पिङ्गलपिङ्गला ॥ २०

एताश्चतस्रः प्रवराः पवित्राः पापनाशनाः ।
नमस्कृता वा स्पृष्टा वा घ्नन्ति पापं नरस्य तु ॥ २१

यस्यैताः कपिलास्सन्ति गृहे पापप्रणाशनाः ।
तत्र श्रीर्विजयः कीर्तिस् स्थिरा नित्यं युधिष्ठिर ॥ २२

एतासां प्रीतिमायाति क्षीरेण तु वृषध्वजः ।

---

1. अ—प्रणश्यति  2. अ—अर्धपञ्चकं नास्ति
3. ख—अर्धत्रयं नास्ति

दध्ना च त्रिदशास्सर्वे घृतेन च हुताशनः ॥ २३

पितरः पितामहाश्चैव तथैव प्रपितामहाः ।
सकृद्दत्तेन तुष्यन्ति वर्षकोटिं युधिष्ठिर ॥ २४

कपिलानां घृतं क्षीरं दधि पायसमेव वा ।
श्रोत्रियेभ्यस्सकृद्दत्त्वा नरः पापैः प्रमुच्यते ॥ २५

उपवासं तु यः कृत्वाऽप्यहोरात्रं जितेन्द्रियः ।
कपिलापञ्चगव्यं तु पीत्वा चान्द्रायणात् परम् ॥ २६

सौम्ये मुहूर्ते तत् प्राश्य शुद्धात्मा शुद्धमानसः ।
क्रोधानृतविनिर्मुक्तो मद्गतेनान्तरात्मना ॥ २७

कपिलापञ्चगव्येन समन्त्रेण पृथक् पृथक् ।
यो मत्प्रतिकृतिं वाऽपि शङ्कराकृतिमेव वा ॥ २८

स्नापयेद्विषुवे यस्तु सोऽश्वमेधफलं लभेत् ॥ २८॥

स मुक्तपापः पूतात्मा यानेनाम्बरशोभिना ।
मम लोकं व्रजेन्मुक्तो रुद्रलोकमथापि वा ॥ २९॥

ब्रह्मणा तु पुरा सृष्टा कपिला काञ्चनप्रभा ।
अग्निकुण्डात् परैर्मन्त्रैर् होमधेनुर्महाप्रभा ॥ ३०॥

सृष्टमात्रां तु तां दृष्ट्वा देवा रुद्रादयो दिवि ।
सिद्धा ब्रह्मर्षयश्चैव वेदास्साङ्गास्सहाध्वराः ॥ ३१॥

सागरास्सरितश्चैव पर्वतास्सवलाहकाः ।

गन्धर्वाप्सरसो यक्षाः पन्नगाश्चाप्युपस्थिताः ॥　३२॥

सर्वे विस्मयमापन्नाश् शिखिमध्ये महाप्रभाम् ।
मन्त्रैश्च विविधैस्सर्वास् तुष्टुवुस्तामनेकशः ॥　३३॥

कृताञ्जलिपुटास्सर्वे ताम्रशृङ्गीं त्रिलोचनाम् ।
शिरोभिः पतिता भूमौ सवत्साममृतारणिम् ॥　३४॥

ऊचुः प्राञ्जलयस्सर्वे चतुर्वक्त्रं पितामहम् ॥　३५

देवताः—

आज्ञापय महादेव किं ते कर्म प्रियं विभो ॥　३५॥

श्रीभगवान्—

एवमुक्तस्सुरैस्सर्वैर् ब्रह्मा वचनमब्रवीत् ॥　३६

ब्रह्मा—

भवन्तोऽप्यनुगृह्णन्तु दोग्ध्रीमेनां पयस्विनीम् ॥　३६॥

होमधेनुरियं यज्ञे ह्यग्नीन् सन्तर्पयिष्यति ।
अतोऽग्निस्तर्पितस्सर्वान् भवतस्तर्पयिष्यति ॥　३७॥

प्रीताः क्षीरामृतेनास्या जातवीर्यपराक्रमाः ।
जयिष्यथ यथाकामं दानवान् सर्व एव तु ॥　३८॥

जातवीर्यबलैश्वर्यास् सत्त्ववन्तो जितारयः ।
अदेवमातृकास्सर्वाः पालयिष्यथ वै प्रजाः ॥　३९॥

पालिताश्च प्रजास्सर्वा भवद्भिरिह धर्मतः ।

पूजयिष्यन्ति वो नित्यं यज्ञैर्विविधदक्षिणैः ॥ ४०॥

श्रीभगवान्—

एवमुक्तास्सुरास्सर्वे ब्रह्मणा परमेष्ठिना ।
ततस्संहृष्टमनसः कपिलायै वरं ददुः ॥ ४१॥

देवताः—

यस्माल्लोकहितायाद्य ब्रह्मणा त्वं विनिर्मिता ।
तस्मात् पूता पवित्रा च भव पापव्यपोहनी ॥ ४२॥

ये त्वां दृष्ट्वा नमस्यन्ति स्पृशन्ति च करैर्नराः ।
तेषां वर्षकृतं पापं त्वद्भक्तानां प्रणश्यति ॥ ४३॥

अकामकृतमज्ञातम् अदृष्टं यत्तु पातकम् ।
त्वां दृष्ट्वा ये नमस्यन्ति नरास्सर्वंसहेति च ॥ ४४॥

तेषां तद्विलयं याति तमस्सूर्योदये यथा ॥ ४५

श्रीभगवान्—

इत्युक्त्वाऽस्यै वरं दत्त्वा प्रययुस्ते यथागतम् ।
लोक[1]निस्तरणार्थाय सा च लोकांश्चचार ह ॥ ४६

तस्यामेव समुद्भूताश् शेषाश्च कपिला नव ।
विचरन्ति महीमेनां लोकानुग्रहकारणात् ॥ ४७

तस्मात्तु कपिला देया परत्र हितमिच्छता ॥ ४७॥

1. क-ख-ग—निस्तारणार्थाय निर्मिता ब्रह्मणा पुरा ।

यदा च दीयते राजन् कपिला ह्यग्निहोत्रिणे ।
तदाऽग्रशृङ्गयोस्तस्या विष्णुरिन्द्रश्च तिष्ठतः ॥ ४८॥

चन्द्रवज्रधरौ चापि तिष्ठतश्शृङ्गमूलयोः ।
शृङ्गमध्ये तथा ब्रह्मा ललाटे गोवृषध्वजः ॥ ४९॥

कर्णयोरश्विनौ देवौ चक्षुषोश्शशिभास्करौ ।
दन्तेषु मरुतो देवा जिह्वायां च सरस्वती ॥ ५०॥

रोमान्ते मुनयस्सर्वे चर्मण्येव प्रजापतिः ।
निश्श्वासेषु स्थिता वेदास् सषडङ्गपदक्रमाः ॥ ५१॥

नासापुटे स्थिता गन्धाः पुष्पाणि सुरभीणि च ।
अधरे वसवस्सर्वे मुखे चाग्निः प्रतिष्ठितः ॥ ५२॥

साध्या देवास्स्थिताः कक्षे ग्रीवायां पार्वती स्थिता ।
पृष्ठे च नक्षत्रगणाः ककुद्देशे नभस्स्थितम् ॥ ५३॥

अपाने सर्वतीर्थानि गोमूत्रे जाह्नवी स्वयम् ।
[1]अष्टैश्वर्यमयी लक्ष्मीर् गोमये वसते तदा ॥ ५४॥

नासिकायां सदा देवी ज्येष्ठा वसति भामिनी ।
श्रोणीतटस्थाः पितरो रोमलाङ्गूलमाश्रिताः ॥ ५५॥

पार्श्वयोरुभयोस्सर्वे विश्वे देवाः प्रतिष्ठिताः ।
तिष्ठत्युरसि तासां तु प्रीतश्शक्तिधरो गुहः ॥ ५६॥

जानुजङ्घोरुदेशेषु पञ्च तिष्ठन्ति वायवः ।

---

1. अ-क-ख-ग-घ—इष्टतुष्टमयी

खुरमध्येषु गन्धर्वाः खुराग्रेषु च पन्नगाः ॥ ५७॥

चत्वारस्सागराः पूर्णास् तस्या एव पयोधराः ।
रतिर्मेधा क्षमा स्वाहा श्रद्धा शान्तिर्धृतिस्स्मृतिः ॥ ५८॥

कीर्तिर्दीप्तिः क्रिया कान्तिस् तुष्टिः पुष्टिश्च सन्ततिः ।
दिशश्च विदिशश्चैव सेवन्ते कपिलां सदा ॥ ५९॥

[1]देवाः पितृगणाश्चापि गन्धर्वाप्सरसां गणाः ।
लोका द्वीपार्णवाश्चैव गङ्गाद्यास्सरितस्तथा ॥ ६०॥

[2]ग्रहाः पितृगणाश्चापि वेदास्साङ्गास्सहाध्वरैः ।
वेदोक्तैर्विविधैर्मन्त्रैस् स्तुवन्ति हृषितास्तथा ॥ ६१॥

[3]विद्याधराश्च ये सिद्धा भूतास्तारागणास्तथा ।
पुष्पवृष्टिं च वर्षन्ति प्रनृत्यन्ति च हर्षिताः ॥ ६२॥

ब्रह्मणोत्पादिता देवी वह्निकुण्डान्महाप्रभो ॥ ६३

देवाः—

नमस्ते कपिले पुण्ये सर्वदेवैर्नमस्कृते ॥ ६३॥

कपिलेऽथ महासत्वे सर्वतीर्थमये शुभे ।
दातारं स्वजनोपेतं ब्रह्मलोकं नय स्वयम् ॥ ६४॥

अहो रत्नमिदं पुण्यं सर्वदुःखघ्नमुत्तमम् ।

---

1. च—विद्याधराश्च ये सिद्धा येऽपि स्वर्लोकवासिनः ।
देवाः पितृगणाश्चापि सेवन्ते कपिलां सदा ॥ [ अधिकः पाठः ]
2. अ—अर्धद्वयं नास्ति च—इदमेकमर्धं नास्ति
3. ग—इदमर्धं नास्ति

अहो धर्मार्जितं शुद्धम् इदमग्र्यं महद् धनम् ॥ ६५॥

श्रीभगवान्—

इत्याकाशस्थितास्ते तु जल्पन्ति च रमन्ति च ॥ ६६

तस्याः प्रतिग्रहीता च भुङ्क्ते यावद्द्विजोत्तमः ।
तावद्देवगणास्सर्वे कपिलामर्चयन्ति वै ॥ ६७

स्वर्णशृङ्गीं रूप्यखुरां गन्धैः पुष्पैस्सुपूजिताम् ॥ ६७॥

वस्त्राभ्यामहताभ्यां तु यावत् तिष्ठत्यलङ्कृता ।
[1]तावद्यदिच्छेत् कपिला मन्त्रपूता सुसंस्कृता ॥ ६८॥
भूलोकवासिनस्सर्वान् ब्रह्मलोकं नयेत् स्वयम् ॥ ६९

भूरश्वः कनकं गावो रूप्यमन्नं तिला यवाः ।
दीयमानानि विप्राय प्रहृष्यन्ति दिने दिने ॥ ७०

अथ त्वश्रोत्रियेभ्यो वै तानि दत्तानि पाण्डव ।
तथा निन्दन्त्यथात्मानम् अशुभं किं नु नः कृतम् ॥ ७१

अहो रक्षःपिशाचैश्च लुप्यमानास्समन्ततः ।
यास्यामो निरयं शीघ्रम् इति शोचन्ति तानि वै ॥ ७२

एतान्यपि द्विजेभ्यो वै श्रोत्रियेभ्यो विशेषतः ।
दीयमानानि हृष्यन्ति दातारं तारयन्ति च ॥ ७३

युधिष्ठिरः—

देवदेवेश दैत्यघ्न कालः को हव्यकव्ययोः ।

---

1. ख—इदमर्धं नास्ति

के तत्र पूजामर्हन्ति वर्जनीयाश्च के द्विजाः ॥ ७४

श्रीभगवान्—

दैवं पूर्वाह्णिकं ज्ञेयं पैतृकं चापराह्णिकम् ।
कालहीनं च यद्दानं तद्दानं राजसं विदुः ॥ ७५

[1]अवदृष्टं च यद्भुक्तम् अनृतेन च भारत ।
परामृष्टं शुना वाऽपि तद्भागं राक्षसं विदुः ॥ ७६

यावन्तः पतिता विप्रा जडोन्मत्तादयोऽपि च ।
दैवे च पित्र्ये ते विप्रा राजन् नार्हन्ति सत्क्रियाम् ॥ ७७

[2]क्लीबः प्लीही च कुष्ठी च राजयक्ष्मान्वितश्च यः ।
अपस्मारी च यश्चापि पित्र्ये नार्हति सत्क्रियाम् ॥ ७८

[3]चिकित्सका देवलका वृथा नियमधारिणः ।
सोमविक्रयिणश्चापि श्राद्धे नार्हन्ति सत्कृतिम् ॥ ७९

[4]एकोद्दिष्टे च ये चान्नं भुञ्जते विधिवद्द्विजाः ।
[5]चान्द्रायणमकृत्वा ते पुनर्नार्हन्ति सत्कृतिम् ॥ ८०

गायका नर्तकाश्चैव प्लवका वादकास्तथा ।
कथका यौधिकाश्चैव श्राद्धे नार्हन्ति सत्क्रियाम् ॥ ८१

अनग्नयश्च ये विप्राः प्रेतनिर्यातकाश्च ये ।

---

1. क-ख-च—अवघुष्टं । ग—अवमृष्टं ।
2. ग—अर्धद्वयं नास्ति
3. ब—इतः श्लोकषट्कं नास्ति
4. अ—अर्धद्वयं नास्ति ।
5. च—इदमर्धं नास्ति

स्तेनाश्चापि विकर्मस्था राजन् नार्हन्ति सत्कृतिम् ॥ ८२

[1]अपरिज्ञातपूर्वाश्च गणपुत्रश्च यो द्विजः ।
पुत्रिकापुत्रकाश्चापि श्राद्धे नार्हन्ति सत्क्रियाम् ॥ ८३

[2]रणकर्ता च यो विप्रो यश्च वाणिज्यको द्विजः ।
प्राणिविक्रयवृत्तिश्च श्राद्धे नार्हन्ति सत्कृतिम् ॥ ८४

चीर्णव्रतगुणैर्युक्ता नित्यं स्वाध्यायतत्पराः ।
सावित्रीज्ञाः क्रियावन्तस् ते श्राद्धे सत्कृतिक्षमाः ॥ ८५

श्राद्धस्य ब्राह्मणः कालप्राप्तो दधि घृतं तथा ।
दर्भास्सुमनसः क्षेत्रं तत्काले श्राद्धदो भवेत् ॥ ८६

चारित्रनियता राजन् कृशा ये कृशवृत्तयः ।
अर्थिनश्चोपगच्छन्ति तेभ्यो दत्तं महत् फलम् ॥ ८७

[3]तपस्विनश्च ये विप्रास् तथा भैक्षचराश्च ये ।
अर्थिनः केचिदिच्छन्ति तेषां दत्तं महत् फलम् ॥ ८८

एवं धर्मविदां श्रेष्ठ ज्ञात्वा सर्वात्मना तदा ।
श्रोत्रियाय दरिद्राय प्रयच्छानुपकारिणे ॥ ८९

दानं यत् ते प्रियं किञ्चिच् छ्रोत्रियाणां च यत् प्रियम् ।
तत् प्रयच्छस्व धर्मज्ञ यदीच्छसि [4]तदक्षयम् ॥ ९०

---

1. क-ख—अर्धचतुष्टयं नास्ति
2. अ-क-ख-च—अर्धद्वयं नास्ति    3. अ—अर्धद्वयं नास्ति
4. क-ख-ग-च—महत् फलम् ।

निरयं ये च गच्छन्ति तच्छृणुष्व युधिष्ठिर ॥ ९०॥

गुर्वर्थे वा गवार्थे वा नो चेदन्यत्र पाण्डव ।
वदन्ति येऽनृतं विप्रास् ते वै निरयगामिनः ॥ ९१॥

[1]परदारापहर्तारः परदाराभिमर्शकाः ।
परदारप्रयोक्तारस् ते वै निरयगामिनः ॥ ९२॥

सूचकास्सन्धिभेत्तारः परद्रव्योपजीविनः ।
अकृतज्ञाश्च विप्राणां ते वै निरयगामिनः ॥ ९३॥

वर्णाश्रमाणां ये बाह्याः पाषण्डस्थाश्च पाण्डव ।
उपासते च तानेव ते सर्वे निरयालयाः ॥ ९४॥

वेदविक्रयिणश्चैव वेदानां चैव दूषकाः ।
[2]वेदानां लेखकाश्चैव ते वै निरयगामिनः ॥ ९५॥

रसविक्रयिणो राजन् विषविक्रयिणश्च ये ।
क्षीरविक्रयिणश्चापि ते वै निरयगामिनः ॥ ९६॥

चण्डालेभ्यश्च ये क्षीरं प्रयच्छन्ति नराधमाः ।
अर्थार्थमथवा स्नेहात् ते वै निरयगामिनः ॥ ९७॥

पशूनां दमकाश्चैव तथा नासानुवेधकाः ।
पुंस्त्वहिंसाकराश्चैव ते वै निरयगामिनः ॥ ९८॥

अदातारस्समर्था ये द्रव्याणां लोभकारणात् ।

---

1. च—इदमादि अर्धद्वयं नास्ति 2. क—वेदावलेपिनश्चापि ।

दीनानन्धान् न पश्यन्ति ते वै निरयगामिनः ॥ ९९॥

क्षान्तान् दान्तान् कृशान् प्राज्ञान् दीर्घकालसहोषितान् ।
त्यजन्ति कृतकृत्या ये ते वै निरयगामिनः ॥ १००॥

बालानामपि वृद्धानां श्रान्तानां चापि ये नराः ।
अदत्त्वाऽश्नन्ति ये मृष्टं ते वै निरयगामिनः ॥ १०१॥

एते पूर्वर्षिभिः प्रोक्ता नरा निरयगामिनः ॥ १०२
[1]ये स्वर्गं समनुप्राप्तास् तान् छृणुष्व युधिष्ठिर ॥ १०२॥

दानेन तपसा चैव सत्येन च दमेन च ।
ये धर्ममनुवर्तन्ते ते नरास्स्वर्गगामिनः ॥ १०३॥

शुश्रूषयाऽप्युपाध्यायाच् छ्रुतमादाय पाण्डव ।
ये प्रतिग्रहनिस्स्नेहास् ते नरास्स्वर्गगामिनः ॥ १०४॥

मधुमांसासवेभ्यस्तु निवृत्ता वृत्तवत्तु ये ।
परदारनिवृत्ताश्च ते नरास्स्वर्गगामिनः ॥ १०५॥

मातरं पितरं चैव शुश्रूषन्ति च ये नराः ।
भ्रातृणामपि सस्नेहास् ते नरास्स्वर्गगामिनः ॥ १०६॥

ये तु भोजनकाले तु निर्याताश्चातिथिप्रियाः ।
द्वाररोधं न कुर्वन्ति ते नरास्स्वर्गगामिनः ॥ १०७॥

---

1. क-ख-च—इतः सार्धं श्लोकद्वयं नास्ति

वैवाहिकं तु कन्यानां दरिद्राणां च ये नराः ।
कारयन्ति च कुर्वन्ति ते नरास्स्वर्गगामिनः ॥ १०८॥

रसानामथ बीजानाम् ओषधीनां तथैव च ।
दातारश्श्रद्धयोपेतास् ते नरास्स्वर्गगामिनः ॥ १०९॥

क्षेमाक्षेमं च मार्गेषु समानि विषमाणि च ।
अर्थिनां ये च वक्ष्यन्ति ते नरास्स्वर्गगामिनः ॥ ११०॥

[1]पर्वद्वये चतुर्दश्याम् अष्टम्यां सन्ध्ययोर्द्वयोः ।
आर्द्रायां जन्मनक्षत्रे विषुवे श्रवणेऽथवा ॥ १११॥

ये ग्राम्यधर्मविरतास् ते नरास्स्वर्गगामिनः ॥ ११२

हव्यकव्यविधानं च नरकस्वर्गगामिनौ ।
धर्माधर्मौ च कथितौ किं भूयश्श्रोतुमिच्छसि ॥ ११३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥
॥ ९२ ॥ अनुगीतापर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥
[ अस्मिन्नध्याये ११३ श्लोकाः ]

---

1. क—अर्धचतुष्टयं नास्ति

## ॥ द्वादशाधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति साक्षाद्ब्रह्महत्याया अकरणेऽपि तत्तुल्यफलक-दुष्कृतकथनम् ॥ १ ॥ तथा अभोज्यान्नानां पापिनां लक्षणकथनम् ॥ २ ॥

युधिष्ठिरः—

इदं मे तत्त्वतो देव वक्तुमर्हस्यशेषतः ।
हिंसामकृत्वा यो मर्त्यो ब्रह्महत्यामवाप्नुयात् ॥ १

श्रीभगवान्—

ब्राह्मणं स्वयमाहूय भिक्षार्थं कृशवृत्तिनम् ।
ब्रूयान्नास्तीति यः पश्चात् तमाहुर्ब्रह्मघातकम् ॥ २

मध्यस्थस्येह विप्रस्य योऽनूचानस्य भारत ।
वृत्तिं हरति दुर्बुद्धिस् तमाहुर्ब्रह्मघातकम् ॥ ३

गोकुलस्य तृषार्तस्य जलान्ते वसुधाधिप ।
उत्पादयति यो विघ्नं तमाहुर्ब्रह्मघातकम् ॥ ४

[1]यः प्रवृत्तां श्रुतिं सम्यक् छास्त्रं वा मुनिभिः कृतम् ।
दूषयत्यनभिज्ञाय तमाहुर्ब्रह्मघातकम् ॥ ५

आश्रमे वा वने वाऽपि ग्रामे वा नगरेऽपि वा ।
अग्निं यः प्रक्षिपेत् क्रुद्धस् तमाहुर्ब्रह्मघातकम् ॥ ६

---

1. क-ख-घ—इतः श्लोकद्वयं नास्ति

चक्षुषा वा विहीनस्य पङ्गोर्वाऽपि जडस्य वा ।
हरेद्वै यस्तु सर्वस्वं तमाहुर्ब्रह्मघातकम् ॥ ७

क्रोधाद्वा यदि वा द्वेषाद् आकृष्टस्तर्जितोऽपि वा ।
ऋतौ स्त्रियं वा नोपेयात् तमाहुर्ब्रह्मघातकम् ॥ ८

यावत्सारो भवेद्दीनस् तन्नाशे यस्य दुस्थितिः ।
तत्सर्वस्वं हरेद्यो वै तमाहुर्ब्रह्मघातकम् ॥ ९

युधिष्ठिरः—

सर्वेषामपि दानानां यत्तु दानं विशिष्यते ।
अभोज्यान्नाश्च ये विप्रास् तान् ब्रवीहि सुरोत्तम ॥ १०

श्रीभगवान्—

अन्नमेव प्रशंसन्ति देवा ब्रह्मपुरस्सराः ।
अन्नेन सदृशं दानं न भूतं न भविष्यति ॥ ११

अन्नमूर्जस्करं लोके अन्नात् प्राणाः प्रतिष्ठिताः ॥ ११॥

अभोज्यान्नान् मया राजन् वक्ष्यमाणान् निबोध मे ॥ १२

दीक्षितस्य कदर्यस्य बद्धस्य निगलेन तु ।
अभिशस्तस्य षण्डस्य पाकभेदकरस्य च ॥ १३

चिकित्सकस्य दूतस्य तथा चोच्छिष्टभोजिनः ॥ १३॥

उग्रान्नं सूतकान्नं च शूद्रोच्छेषणमेव च ।
[1]द्विषदन्नं न भोक्तव्यं पतितान्नं च यच्छ्रुतम् ॥ १४॥

1. अ-ब—अर्धद्वयं नास्ति

तथा च पिशुनस्यान्नं यज्ञविक्रयिणस्तथा ॥ १५
शैलूषतन्तुवायान्नं कृतघ्नस्यान्नमेव च ॥ १५॥
अम्बष्ठस्य निषादस्य रङ्गावतरकस्य च ॥ १६
सुवर्णकर्तुर्वैणस्य शस्त्रविक्रयिणस्तथा ।
सूतानां शौण्डिकानां च वैद्यस्य रजकस्य च ॥ १७
स्त्रीजितस्य नृशंसस्य तथा माहिषकस्य च ।
अनिर्देशानां प्रेतानां गणिकानां तथैव च ॥ १८
बन्दिनो द्यूतकर्तुश्च तथा द्यूतविदामपि ।
परिवित्तस्य यच्चान्नं परिवेत्तुस्तथैव च ॥ १९
यश्चाग्रेदिधिषुर्विप्रो दिधिषूपपतिस्तथा ।
तयोरप्युभयोरन्नं राज्ञां चापि विवर्जयेत् ॥ २०
राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
आयुस्सुवर्णकारान्नं यशश्चर्मावकृन्तिनः ॥ २१
गणान्नं गणिकान्नं च लोकेभ्यः परिकृन्तति ।
पूयं चिकित्सकस्यान्नं शुक्लं तु वृषलीपतेः ॥ २२
विष्ठा वार्धुषिकस्यान्नं तस्मात् तत् परिवर्जयेत् ॥ २२॥
तेषां त्वगस्थिरोमाणि भुङ्क्ते योऽन्नं तु भक्षयेत् ॥ २३
अमात्यान्नमथैतेषां भुक्त्वा तु त्रियहं क्षिपेत् ।
मत्या भुक्त्वा सकृद्वाऽपि प्राजापत्यं चरेद्द्विजः ॥ २४

दानानां च फलं यद्वै शृणु पाण्डव तत्त्वतः ॥ २४॥
जलदस्तृप्तिमाप्नोति सुखमक्षयमन्नदः ॥ २५
[1]तिलदस्तु प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ।
भूमिदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः ॥ २६

गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ।
वासोदश्चन्द्रसालोक्यम् अश्विसालोक्यमश्वदः ॥ २७
अनडुद्दश्श्रियं जुष्टां गोदो गोलोकमश्नुते ।
यानशय्याप्रदो भार्याम् ऐश्वर्यमभयप्रदः ॥ २८
[2]धान्यदश्शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसाम्यताम् ।
सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते ॥ २९
हिरण्यभूगवाश्वाजवस्त्रशय्यासनादिषु ।
योऽर्चितं प्रतिगृह्णाति ददात्यर्चितमेव च ॥ ३०
तावुभौ गच्छतस्स्वर्गं नरकं तु विपर्यये ॥ ३०॥
अनृतं न वदेद्विद्वांस् तपस्तप्त्वा न विस्मयेत् ।
नार्तोऽप्यपवदेद्विप्रान् न दत्त्वा परिकीर्तयेत् ॥ ३१॥
यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।

---

1. च—अर्धचतुष्टयं नास्ति
2. च—अर्धद्वयं नास्ति किंतु तत्स्थाने ।
तिलदस्तु प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ।
वासोदश्चन्द्रसालोक्यमश्वदस्सूर्यलोकगः ॥ [इति वर्तते]

आयुर्विप्रापवादेन दानं तु परिकीर्तनात् ॥ ३२॥

एकः प्रजायते जन्तुर् एक एव प्रमीयते ।
एकोऽनुभुङ्क्ते सुकृतम् एकश्चाप्नोति दुष्कृतम् ॥ ३३॥

मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥ ३४॥

अनागतानि कार्याणि कर्तुं गणयते मनः ।
शरीरकं समुद्वीक्ष्य स्मयते नूनमन्तकः ॥ ३५॥

तस्माद्धर्मसहायस्तु धर्मं सञ्चिनुयात् सदा ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥ ३६॥

येषां तटाकानि बहूदकानि
सभाश्च कूपाश्च प्रतिश्रयाश्च ।
अन्नप्रदानं मधुरा च वाणी
यमस्य ते निर्विषया भवन्ति ॥ ३७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥
॥ ९२ ॥ अनुगीतापर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥
[ अस्मिन्नध्याये ३७॥ श्लोकाः ]

## ॥ त्रयोदशाधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति यत्यग्निमहिमानुवर्णनम् ॥ १ ॥ दानपात्र-ब्राह्मणलक्षणकथनम् ॥ २ ॥ तथाऽन्नदानप्रशंसनम् ॥ ३ ॥

युधिष्ठिरः—

अनेकान्तं बहुद्वारं धर्ममाहुर्मनीषिणः ।
किंलक्षणोऽसौ भवति तन्मे ब्रूहि जनार्दन ॥ १

श्रीभगवान्—

शृणु राजन् समासेन धर्मशौचविधिक्रमम् ॥ १॥

अहिंसा सत्यमस्तेयम् आनृशंस्यं दमश्शमः ।
आर्जवं चैव राजेन्द्र निश्चितं धर्मलक्षणम् ॥ २॥

ब्रह्मचर्यं तपः क्षान्तिर् मधुमांसस्य वर्जनम् ।
मर्यादायां स्थितिश्चैव शमश्शौचस्य लक्षणम् ॥ ३॥

बाल्ये विद्यां निषेवेत यौवने दारसङ्ग्रहम् ।
वार्धके मौनमातिष्ठेत् सर्वदा धर्ममाचरेत् ॥ ४॥

ब्राह्मणान् नावमन्येत गुरून् परिवदेन्न च ।
यतीनामनुकूलस्स्याद् एष धर्मस्सनातनः ॥ ५॥

यतिर्गुरुर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
[1]पतिरेव गुरुस्स्त्रीणां सर्वेषां [2]पार्थिवो गुरुः ॥ ६॥

---

1. च—इदमर्धं नास्ति 2. क-ख—ब्राह्मणो गुरुः ।

यद्गृहस्थार्जितं पापं ज्ञानतोऽज्ञानतोऽपि वा ।
निर्दहिष्यति तत् सर्वम् एकरात्रोषितो यतिः ॥ ७॥

दुर्वृत्ता वा सुवृत्ता वा ज्ञानिनोऽज्ञानिनोऽपि वा ।
गृहस्थैर्यतयः पूज्याः परत्र हितकाङ्क्षिभिः ॥ ८॥

एकदण्डी त्रिदण्डी वा [1]शिखितो मुण्डितोऽपि वा ।
काषायदण्डसारोऽपि यतिः पूज्यो युधिष्ठिर ॥ ९॥

अपूजितो गृहस्थैर्वा तथा चाप्यवमानितः ।
यतिर्वाऽप्यतिथिर्वाऽपि नरके पातयिष्यतः ॥ १०॥

तस्मात्तु यतयः पूज्या मद्भक्ता मत्परायणाः ।
मयि सन्न्यस्तकर्माणः परत्र हितकाङ्क्षिभिः ॥ ११॥

प्रहरेन्न द्विजान् विप्रो गां न हन्यात् कदाचन ।
भ्रूणहत्यासमं चैव उभयं यो निषेवते ॥ १२॥

नाग्निं मुखेनोपधमेन्न च पादौ प्रतापयेत् ।
नाधः कुर्यात् कदाचित्तु न पृष्ठं परितापयेत् ॥ १३॥

नान्तरा गमनं कुर्यान्न चामेध्यं विनिक्षिपेत् ।
उच्छिष्टो न स्पृशेदग्निम् आशौचस्थो न जातुचित् ॥ १४॥

श्वचण्डालादिभिस्स्पृष्टो नाङ्गमग्नौ प्रतापयेत् ।
सर्वदेवमयो वह्निस् तस्माच्छुद्धस्सदा स्पृशेत् ॥ १५॥

प्राप्तमूत्रपुरीषस्तु न स्पृशेद्वह्निमात्मवान् ।

---

1. अ-क-ग-घ-च—शिखण्डी

यावत्तु धारयेद्वेगं तावदप्रयतो भवेत् ॥ १६॥

पचनाग्निं न गृह्णीयात् परवेश्मनि जातुचित् ॥ १७

तेन पक्वेन चान्नेन यत् कर्म कुरुते शुभम् ।
तच्छुभस्य फलं चार्धम् अग्निदस्य भवेन्नृप ॥ १८

तस्माच्छुभतरं कर्म प्रकुर्यादविनाशितम् ॥ १८॥

प्रमादाद्यदि वाऽज्ञानात् तस्य नाशो भविष्यति ।
गृह्णीयात्तु मथित्वा वा श्रोत्रियागारतोऽपि वा ॥ १९॥

युधिष्ठिरः—
कीदृशास्साधवो विप्रास् तेभ्यो दत्तं महाफलम् ।
कीदृशेभ्यो हि दातव्यं तन्मे ब्रूहि जनार्दन ॥ २०॥

श्रीभगवान्—
अक्रोधनास्सत्यपरा धर्मनित्या जितेन्द्रियाः ।
तादृशास्साधवो विप्रास् तेभ्यो दत्तं महत् फलम् ॥ २१॥

अमानिनस्सर्वसहा दृष्टार्था विजितेन्द्रियाः ।
सर्वभूतहिता मैत्रास् तेभ्यो दत्तं महत् फलम् ॥ २२॥

[1]अलुब्धाश्शुचयो वैद्या ह्रीमन्तस्सत्यवादिनः ।
स्वधर्मनिरता ये तु तेभ्यो दत्तं महत् फलम् ॥ २३॥

साङ्गांश्च चतुरो वेदान् योऽधीयेत दिने दिने ।
शूद्रान्नं यस्य देहे न तत् पात्रमृषयो विदुः ॥ २४॥

---

1. ग—इदमर्धद्वयं नास्ति

प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च समन्वितः ।
तारयेत् तत् कुलं सर्वम् एकोऽपीह युधिष्ठिर ॥ २५॥

ग्रामश्वमन्नं वित्तं वा तद्विधे प्रतिपादयेत् ॥ २६

निशम्य च गुणोपेतं ब्राह्मणं साधुसम्मतम् ।
दूरादाहूय सत्कृत्य तं प्रयत्नेन पूजयेत् ॥ २७

युधिष्ठिरः—
धर्माधर्मविधिर्देव मम भीष्मेण भाषितः ।
भीष्मवाक्यात् सारभूतं वद धर्मं सुरेश्वर ॥ २८

श्रीभगवान्—
अन्नेन धार्यते सर्वं जगदेतच्चराचरम् ।
अन्नात् प्रभवति प्राणः प्रत्यक्षं नास्ति संशयः ॥ २९

कलत्रं पीडयित्वा तु देशकाले च शक्तितः ।
दातव्यं भिक्षवे चान्नम् आत्मनो भूतिमिच्छता ॥ ३०

विप्रमध्वपरिश्रान्तं बालं वृद्धमथापि वा ।
[1]अर्चयेद्गुरुवत् प्रीतो गृहस्थो गृहमागतम् ॥ ३१

क्रोधमुत्पतितं हित्वा सुशीलो वीतमत्सरः ।
अर्चयेदतिथिं प्रीतः परत्र हितभूतये ॥ ३२

अतिथिं नावमन्येत नानृतां गिरमीरयेत् ।
न पृच्छेद्गोत्रचरणं नाधीतं वा कदाचन ॥ ३३

---

1. ख—अर्धद्वयं नास्ति

चण्डालो वा श्वपाको वा काले यः कश्चिदागतः ।
[1]अन्नेन पूजनीयस्स्यात् परत्र हितमिच्छता ॥ ३४
पिधाय तु गृहद्वारं भुङ्क्ते योऽन्नं प्रहृष्टवान् ।
स्वर्गद्वारपिधानं वै कृतं तेन युधिष्ठिर ॥ ३५
पितॄन् देवानृषीन् विप्रान् अतिथींश्च निराश्रयान् ।
यो नरः प्रीणयत्यन्नैस् तस्य पुण्यफलं महत् ॥ ३६
कृत्वाऽपि पापं बहुशो यो ददात्यन्नमर्थिने ।
ब्राह्मणाय विशेषेण सर्वपापैः प्रमुच्यते ॥ ३७
अन्नदः प्राणदो लोके प्राणदस्सर्वदो भवेत् ।
तस्मादन्नं प्रयत्नेन दातव्यं भूतिमिच्छता ॥ ३८
अन्नं ह्यमृतमित्याहुर् अन्नं प्रजननं स्मृतम् ।
अन्नप्रणाशे सीदन्ति शरीरे पञ्च धातवः ॥ ३९
बलं बलवतो नश्येद् अन्नहीनस्य देहिनः ।
तस्मादन्नं प्रदातव्यं श्रद्धयाऽश्रद्धयाऽपि वा ॥ ४०
आदत्ते हि रसं सर्वम् आदित्यस्स्वगभस्तिभिः ।
वायुस्तस्मात् समादाय रसं मेघेषु धारयेत् ॥ ४१
तत्तु मेघगतं भूमौ शक्रो वर्षति तद्रसम् ।
तेन दिग्धा भवेद्देवी मही प्रीता च पाण्डव ॥ ४२
तस्यां सस्यानि रोहन्ति यैर्जीवन्त्यखिलाः प्रजाः ।
मांसमेदोस्थिमज्जानां सम्भवस्तेभ्य एव हि ॥ ४३

---

1. अ—अर्धद्वयं नास्ति

[1]एवं सूर्यश्च पवनो मेघश्शक्रस्तथैव च ।
एक एव [2]स्थितो राशिर् यतो भूतानि जज्ञिरे ॥ ४४
भवनानि च दिव्यानि दिवि तेषां महात्मनाम् ।
नानासंस्थानरूपाणि नानाभूतयुतानि च ॥ ४५
चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ।
तरुणादित्यवर्णानि स्थावराणि चराणि च ॥ ४६
[3]अनेकशतसङ्ख्यानि सान्तर्जलवनानि च ।
तत्र पुष्पफलोपेताः कामदास्सुरपादपाः ॥ ४७
[4]वाप्यो दिव्यास्सरःकूपाः दीर्घिकाश्च सहस्रशः ।
भक्ष्यभोज्यमयाश्शैला वासांस्याभरणानि च ॥ ४८
क्षीरस्रवन्त्यस्सरितस् तथा चैवान्नपर्वताः ।
[5]घोषवन्ति च यानानि युक्तान्यथ सहस्रशः ॥ ४९
प्रासादाः पाण्डराश्शुभ्राश् शय्याश्च कनकोज्ज्वलाः ।
अन्नदास्तत्र तिष्ठन्ति तस्मादन्नप्रदो भवेत् ॥ ५०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥
॥ ९२ ॥ अनुगीतापर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥
[ अस्मिन्नध्याये ५० श्लोकाः ]

---

1. क-ख—एनमन्नं च सूर्यश्च पवनश्शक्र एव च।
2. क-ख-ग-च—स्मृतो राशिर्यतो भूतश्शृणुष्व हि।
3. ख—इदमर्धं नास्ति
4. क-ख-ग—वाप्यो वीथ्यस्सभाः कूपाः दीर्घिकाश्च सहस्रशः ।
5. ग—इदमर्धं नास्ति ।

## ॥ चतुर्दशाधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति भोजनविधिकथनम् ॥ १ ॥ तथा गोग्रासदानप्रकारकथनम् ॥ २ ॥ तथा तिलप्रशंसनपूर्वकं तेषामिक्षूणां च ब्राह्मणेन स्वयं यन्त्रे निपीडनप्रतिषेधनम् ॥ ३ ॥

युधिष्ठिरः—

अन्नदानफलं श्रुत्वा प्रीतोऽस्मि मधुसूदन ।
भोजनस्य विधिं वक्तुं देवदेव त्वमर्हसि ॥ १

श्रीभगवान्—

भोजनस्य द्विजातीनां विधानं शृणु पाण्डव ।
स्नातश्शुचिश्शुचौ देशे निर्जने हुतपावकः ॥ २

मण्डलं कारयित्वा तु चतुरश्रं द्विजोत्तमः ।
क्षत्रियश्चेत् ततो वृत्तं वैश्योऽर्धेन्दुसमाकृतिम् ॥ ३

आर्द्रपादस्तु भुञ्जीयात् प्राङ्मुखश्चासने शुचौ ।
पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः ॥ ४

नैकवासास्तु भुञ्जीयान्न चान्तर्धाय वा पुनः ।
न भिन्नभाण्डे भुञ्जीत पर्णपृष्ठे तथैव च ॥ ५

अन्नं पूर्वं नमस्कुर्यात् प्रहृष्टेनान्तरात्मना ।
नान्यदालोकयेदन्नान्न जुगुप्सेत तत्परः ॥ ६

जुगुप्सितं च यच्चान्नं राक्षसा एव भुञ्जते ॥ ६ ॥

पाणिना जलमुद्धृत्य कुर्यादन्नं प्रदक्षिणम् ।
अपेयं तद्विजानीयात् पीत्वा चान्द्रायणं चरेत् ॥ ७॥

परिवेषजलादन्यत् पेयमेव तु मन्त्रवत् ।
पञ्च प्राणाहुतीः कुर्यात् समन्त्रं तु पृथक् पृथक् ॥ ८॥

यथा रसं न जानाति जिह्वा प्राणाहुतौ नृप ।
तथा समाहितः कुर्यात् प्राणाहुतिमतन्द्रितः ॥ ९॥

[1]वन्दित्वाऽन्नमथान्नादं पञ्च प्राणांश्च पाण्डव ।
यः कुर्यादाहुतीः पञ्च तेनेष्टाः पञ्च वायवः ॥ १०॥

अतोऽन्यथा तु भुञ्जानो ब्राह्मणो ज्ञानदुर्बलः ।
तेनान्नेनासुरान् प्रेतान् राक्षसांस्तर्पयिष्यति ॥ ११॥

वक्त्रप्रमाणान् पिण्डांश्च ग्रसेदेकैकशः पुनः ।
वक्त्राधिकं तु यत् पिण्डम् आत्मोच्छिष्टं तदुच्यते ॥ १२॥

पिण्डावशिष्टमन्यच्च वक्त्रानिस्सृतमेव च ।
अभोज्यं तद्विजानीयाद् भुक्त्वा चान्द्रायणं चरेत् ॥ १३॥

[2]स्वमुच्छिष्टं तु यो भुङ्क्ते यो भुङ्क्ते मुक्तभोजनम् ।
चान्द्रायणं चरेत् कृच्छ्रं प्राजापत्यमथापि वा ॥ १४॥

पिबतः पतिते तोये भोजने मुखनिस्सृते ।
अभोज्यं तद्विजानीयाद् भुक्त्वा चान्द्रायणं चरेत् ॥ १५॥

---

1. अ—विदित्वा ।　　2. अ-ब—अर्धद्वयं नास्ति

[1]पीतशेषं तु तन्नाम न पेयं पाण्डुनन्दन ।
पिबेद्यदि हि तन्मोहाद् द्विजश्चान्द्रायणं चरेत् ॥ १६॥

पानीयानि पिबेद्येन तत् पात्रं द्विजसत्तमः ।
अनुच्छिष्टं भवेत् तावद् यावद्भूमौ न निक्षिपेत् ॥ १७॥

मौनी वाऽप्यथवा भूमौ प्रहृष्टस्संयतेन्द्रियः ।
भुञ्जीत विधिवद्विप्रो न [2]चोच्छिष्टं प्रदापयेत् ॥ १८॥

सदा चात्यशनं नाद्यान्नातिहीनं च कर्हिचित् ।
यथाऽन्नेन व्यथा न स्यात् तथा भुञ्जीत नित्यशः ॥ १९॥

उदक्यामपि चण्डालं श्वानं वा [3]शूद्रमेव वा ।
भुञ्जानो यदि वा पश्येत् तदन्नं तु परित्यजेत् ॥ २०॥

भुञ्जानो ह्यत्यजन् मोहाद् द्विजश्चान्द्रायणं चरेत् ॥ २१

केशकीटावपन्नं च मुखमारुतवीजितम् ।
अभोज्यं तद्विजानीयाद् भुक्त्वा चान्द्रायणं चरेत् ॥ २२

उत्थाय च पुनस्स्पृष्टं पादस्पृष्टं च लङ्घितम् ।
अन्नं तद्राक्षसं विद्यात् तस्मात् तत् परिवर्जयेत् ॥ २३

राक्षसोच्छिष्टभुग्विप्रस् सप्त [4]पूर्वान् परानपि ।

---

1. क-ख—अर्धद्वयं नास्ति
2. क-ख—चोच्छिष्टानि दाप । च-ग—चोच्छिष्टानि चाव ।
3. क-ख-ग—रुक्मेव वा ।
4. क-ख-ग—पूर्वापरानपि । च—दशापूर्वान् दशापरान् ।

निरये रौरवे घोरे स्वपितॄन् पातयिष्यति ॥ २४

तस्मिन्नाचमनं कुर्याद् यस्मिन् भाण्डे स भुक्तवान् । २४॥

यद्युत्तिष्ठत्यनाचान्तो भुक्तवानासनात् ततः ।
स्नानं सद्यः प्रकुर्वीत सोऽन्यथाऽप्रयतो भवेत् ॥ २५॥

युधिष्ठिरः—

तृणमुष्टिविधानं च तिलमाहात्म्यमेव च ।
इक्षोस्सोमसमुद्भूतिं वक्तुमर्हसि मानद ॥ २६॥

श्रीभगवान्—

पितरो वृषभा ज्ञेया गावो लोकस्य मातरः ।
तासां तु पूजया राजन् पूजिताः पितृमातरः ॥ २७॥

सभा प्रपा गृहं चापि देवतायतनानि च ।
शुद्ध्यन्ति शकृता यासां किं भूतमधिकं ततः ॥ २८॥

ग्रासमुष्टिं परगवे दद्यात् संवत्सरं तु यः ।
अकृत्वा स्वयमाहारं व्रतवत् सार्वकालिकम् ॥ २९॥

गावो मे मातरस्सर्वाः पितरश्चैव गोवृषाः ।
ग्रासमुष्टिं मया दत्तं प्रतिगृह्णन्तु मातरः ॥ ३०॥

इत्युक्त्वाऽनेन मन्त्रेण सावित्र्या वा समाहितः ।
अभिमन्त्र्य ग्रासमुष्टिं दद्यात् तस्य फलं शृणु ॥ ३१॥

यत् कृतं दुष्कृतं तेन ज्ञानतोऽज्ञानतोऽपि वा ।

तस्य नश्यति तत् सर्वं दुस्स्वप्नं च विनश्यति ॥ ३२॥

तिलाः पवित्राः पापघ्ना नारायणसमुद्भवाः ।
तिलाञ्श्राद्धे प्रशंसन्ति दानमेतदनुत्तमम् ॥ ३३॥

तिलान् दद्यात् तिलान् भक्ष्यात् तिलान् प्रातरुपस्पृशेत् ।
तिलं तिलमिति ब्रूयात् तिलाः पापहरा हि ते ॥ ३४॥

क्रीताः प्रतिगृहीता वा न विक्रेया द्विजातिभिः ॥ ३५

भोजनाभ्यञ्जनाद्दानाद् योऽन्यत्तु कुरुते तिलैः ।
क्रिमिर्भूत्वा श्वविष्ठायां पितृभिस्सह मज्जति ॥ ३६

तिलान् न पीडयेद्विप्रो यन्त्रचक्रे स्वयं नृप ।
पीडयन् हि द्विजो मोहान्नरकं याति रौरवम् ॥ ३७

इक्षुवंशोद्भवस्सोमस् सोमवंशोद्भवो द्विजः ।
इक्षून् न घातयेत् तस्माद् इक्षुघात्यात्मघातकः ॥ ३८

इक्षुदण्डसहस्राणाम् एकैकेन युधिष्ठिर ।
ब्रह्महत्यामवाप्नोति ब्राह्मणो यन्त्रपीडकः ॥ ३९

तस्मान्न पीडयेदिक्षून् यन्त्रचक्रे द्विजोत्तमः ॥ ३९॥

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥
॥ ९२ ॥ अनुगीतापर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥
[ अस्मिन्नध्याये ३९॥ श्लोकाः ]

---

## ।। पञ्चदशाधिकशततमोऽध्यायः ।।

कृष्णेन युधिष्ठिरं प्रत्यापद्धर्मकथनम् ॥ १ ॥ तथा प्रशस्ताप्रशस्तब्राह्मणलक्षणकथनम् ॥ २ ॥ तथा सामान्यतो नानाधर्मकथनपूर्वकं ब्राह्मण्यसिद्धिप्रकारकथनम् ॥ ३ ॥ तथा गुर्वाचार्योपाध्यायलक्षणकथनम् ॥४ ॥

युधिष्ठिरः—

समुच्चयं तु धर्माणां भोज्याभोज्यं च केशव ।
श्रुतं मया त्वत्प्रसादाद् आपद्धर्मं ब्रवीहि मे ।। १

श्रीभगवान्—

दुर्भिक्षे राष्ट्रसम्बाधे त्वाशौचे मृतसूतके ।
घर्मकालेऽध्वनि तथा नियमो येन लुप्यते ।। २

दूराध्वगमनात् खिन्नो द्विजालाभेऽथ शूद्रतः ।
अकृतान्नं तु यत् किञ्चिद् गृह्णीयादात्मवृत्तये ।। ३

आतुरो दुःखितो वाऽपि भयार्तो वा बुभुक्षितः ।
भुञ्जन्नविधिना विप्रः प्रायश्चित्तीयते न च ।। ४

निमन्त्रितस्तु यो विप्रो विधिवद्धव्यकव्ययोः ।
मांसादीन्यपि भुञ्जानः प्रायश्चित्तीयते न च ।। ५

[1]अष्टौ तान्यव्रतघ्नानि आपो मूलं घृतं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ।। ६

1. अ—अर्धचतुष्टयं नास्ति

अशक्तो विधिवत् कर्तुं प्रायश्चित्तानि यो नरः ।
विदुषां वचनेनापि दानेनापि विशुद्ध्यति ॥ ७

[1]अनृताद्यृतुकाले वा दिवा रात्रौ तथाऽपि वा ।
प्रोषितस्तु स्त्रियं गच्छेत् प्रायश्चित्तीयते न च ॥ ८

युधिष्ठिरः—

प्रशस्याः कीदृशा विप्रा निन्द्याश्चापि सुरेश्वर ।
अष्टकायाश्च कः कालस् तन्मे कथय सुव्रत ॥ ९

श्रीभगवान्—

सत्यसन्धं द्विजं दृष्ट्वा स्थानाद्वेपति भास्करः ।
एष मे मण्डलं भित्त्वा याति ब्रह्म सनातनम् ॥ १०

कुलीनः कर्मकृद्वैद्यस् तथा चाप्यानृशंस्यवान् ।
ह्रीमानृजुस्सत्यवादी पात्रं सर्वे इमे द्विजाः ॥ ११

एते चाग्रासनस्थास्ते भुञ्जानाः प्रथमं द्विजाः ।
तस्यां पङ्क्त्यां च ये चान्ये तान् पुनन्त्येव दर्शनात् ॥ १२

मद्भक्ता ये द्विजश्रेष्ठा मद्गता मत्परायणाः ।
तान् पङ्क्तिपावनान् विद्धि पूज्यांश्चैव विशेषतः ॥ १३

निन्द्याञ्शृणु द्विजान् राजन्नपि वा वेदपारगान् ।
ब्राह्मणच्छद्मना लोके चरतः पापकारिणः ॥ १४

अनग्निरनधीयानः प्रतिग्रहरुचिस्तु यः ।

---

1. अ-क-ख-घ—अर्धद्वयं नास्ति

यत्र कुत्र तु भुञ्जानस् तं विद्यात् पङ्क्तिदूषकम् ॥ १५

मृतसूतकपुष्टाङ्गो यश्च शूद्रान्नभुग् द्विजः ॥ १५॥

[1]असूयालुर्दम्भपरो महानहमिति ब्रुवन् ।
अहं चापि न जानामि गतिं तस्य नराधिप ॥ १६॥

शूद्रान्नरसपुष्टाङ्गोऽप्यधीयानो हि नित्यशः ।
जपतो जुह्वतश्चापि गतिरूर्ध्वा न विद्यते ॥ १७॥

आहिताग्निश्च यो विप्रश् शूद्रान्नान्न निवर्तते ।
[2]पञ्च तस्य प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः ॥ १८॥

शूद्रप्रेषणकर्तुश्च ब्राह्मणस्य विशेषतः ।
भूम्यामन्नं प्रदातव्यं श्वसृगालसमो हि सः ॥ १९॥

प्रेतभूतं तु यश्शूद्रं ब्राह्मणो ज्ञानदुर्बलः ।
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ॥ २०॥

त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम् ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति॥ २१॥

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजोत्तमाः ।
पदे पदेऽश्वमेधस्य फलं ते प्राप्नुवन्ति हि ॥ २२॥

न तेषामशुभं किञ्चित् पापं वा शुभकर्मणाम् ।
जलावगाहनादेव सद्यश्शौचं विधीयते ॥ २३॥

---

1. च—कोश एकस्मिन्नेवेदमर्धं दृश्यते ।  2. ख—इदमर्धं नास्ति

शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि ।
निर्वृतेन न भोक्तव्यं विद्धि शूद्रान्नमेव तत् ॥ २४॥

विप्राणां भोक्तुकामानाम् अत्यन्तं चान्नकाङ्क्षया ।
यो विघ्नं कुरुते मर्त्यस् ततो नान्योऽस्ति पापकृत् ॥ २५॥

सर्वे च वेदास्सह षड्भिरङ्गैस्
साङ्ख्यं पुराणं च कुले च जन्म ।
नैतानि सर्वाणि गतिर्भवन्ति
शीलव्यपेतस्य नृप द्विजस्य ॥ २६॥

ग्रहोपरागे विषुवेऽयनान्ते
पित्र्ये मघासु स्वसुते च जाते ।
गयेषु [1]सर्वेषु च पाण्डुपुत्र
दत्तं भवेन्निष्कसहस्रतुल्यम् ॥ २७॥

[2]वैशाखमासस्य च या तृतीयाऽ-
नवद्याऽसौ कार्तिकशुक्लपक्षे ।
नभस्यमासस्य च कृष्णपक्षे
त्रयोदशी पञ्चदशी च माघे ॥ २८॥

उपप्लवे चन्द्रमसो रवेश्च
श्राद्धस्य कालो ह्ययनद्वये च ।

---

1. क-ग-च—पद्मेषु ।
2. अ-क-ख-ब—अर्धमिदं नास्ति

[1]पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात् पितृभ्यः प्रयतो मनुष्यः ॥ २९॥

यस्त्वेकपङ्क्त्यां विषमं ददाति
स्नेहाद्भयाद्वा यदि वाऽर्थहेतोः ।
क्रूरं दुराचारमनात्मवन्तं
ब्रह्मघ्नमेनं मुनयो वदन्ति ॥ ३०॥

इहैवैकस्य नामुत्र अमुत्रैकस्य नो इह ।
[2]इह चामुत्र चैकस्य नामुत्रैकस्य नो इह ॥ ३१॥

धनानि येषां विपुलानि सन्ति
नित्यं रमन्ते परलोकमूढाः ।
तेषामयं शत्रुवरघ्नलोको
नान्यत् सुखं देहसुखे रतानाम् ॥ ३२॥

ये योगयुक्तास्तपसि प्रयुक्तास्
स्वाध्यायशीला जरयन्ति देहम् ।
जितेन्द्रिया भूतहिते निविष्टास्
तेषामसौ नाम रिपुघ्नलोकः ॥ ३३॥

ये धर्ममेव प्रथमं चरन्ति
धर्मेण लब्ध्वाऽपि धनानि लोके ।

---

1. क-ख-ग-घ—नास्तीदमर्धम् । 2. च—नास्तीदमर्धम्

दारानवाप्य क्रतुभिर्यजन्ते
तेषामयं चैव परश्च लोकः ॥ ३४॥

ये नैव विद्यां न तपो न दानं
न चापि मूढाः प्रजने यतन्ते ।
[1]न चापि गच्छन्ति सुखानि भोगांस्
तेषामयं चैव परश्च नास्ति ॥ ३५॥

युधिष्ठिरः—

नारायण पुराणेश लोकावास नमोऽस्तु ते ।
श्रोतुमिच्छामि कार्त्स्न्येन धर्मसारसमुच्चयम् ॥ ३६॥

श्रीभगवान्—

धर्मसारं महाप्राज्ञ मनुना प्रोक्तमादितः ।
प्रवक्ष्यामि मनुप्रोक्तं पौराणं श्रुतिसंहितम् ॥ ३७॥

अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत तान् सदा ॥ ३८॥

गौरेकस्यैव दातव्या न बहूनां युधिष्ठिर ।
सा गौर्विक्रयमापन्ना दहत्यासप्तमं कुलम् ॥ ३९॥

बहूनां न प्रदातव्या गौर्वस्त्रं शयनं स्त्रियः ।
तादृग्भूतं तु तद्दानं दातारं नोपतिष्ठति ॥ ४०॥

आक्रम्य ब्राह्मणैर्भुक्तम् अनार्याणां तु वेश्मनि ।

---

1. क-ख-घ—ये चापि गच्छन्ति परस्य भार्यां तेषामयं ।

गोभिश्च पुण्यं तत् तेषां राजसूयाद्विशिष्यते ॥　　४१॥
मा ददात्विति यो ब्रूयाद् गोषु च ब्राह्मणेषु च ।
तिर्यग्योनिशतं गत्वा चण्डालेषूपजायते ॥　　४२॥

ब्राह्मणस्वं तु देवस्वं दरिद्रस्य च यद्धनम् ।
गुरोश्चापि हृतं राजन् स्वर्गस्थमपि पातयेत् ॥　　४३॥

धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ।
द्वितीयं धर्मशास्त्राणि तृतीयं लोकसङ्ग्रहः ॥　　४४॥

आसमुद्राच्च यत् पूर्वाद् आसमुद्राच्च पश्चिमात् ।
हिमवद्विन्ध्ययोर्मध्यम् आर्यावर्तं प्रचक्षते ॥　　४५॥

सरस्वतीदृषद्वत्योर् देवनद्योर्यदन्तरम् ।
तद्देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥　　४६॥

यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥　　४७॥

कुरुक्षेत्रं च मत्स्याश्च पाञ्चालाश्शूरसेनयः ।
एते ब्रह्मर्षिदेशास्तु ब्रह्मावर्तादनन्तराः ॥　　४८॥

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं चारित्रं च गृह्णीयुः पृथिव्यां सर्वमानवाः ॥　　४९॥

हिमवद्विन्ध्ययोर्मध्यं यत् प्राग् विनशनादपि ।
प्रत्यगेव प्रयागात्तु मध्यदेशः प्रकीर्तितः ॥　　५०॥

कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो याज्ञियो देशो म्लेच्छदेशस्ततः परः ॥ ५१॥

एतान् विज्ञाय देशांस्तु संश्रयेयुर्द्विजातयः ।
शूद्रस्तु यस्मिन् कस्मिन् वा निवसेद्वृत्तिकर्शितः ॥ ५२॥

[1]आचारः प्रथमो धर्मो ह्यहिंसा सत्यमेव च ।
दानं चैव यथाशक्ति यमाश्च नियमैस्सह ॥ ५३॥

वैदिकैः कर्मभिः पुण्यैर् निषेकादिर्द्विजन्मनाम् ।
कार्यश्शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ ५४॥

गर्भहोमैर्जातकर्मनामचौलोपनायनैः ।
स्वाध्यायैस्तद्व्रतैश्चैव विवाहस्नातकव्रतैः ॥ ५५॥

महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ ५६

धर्मार्थौ यदि न स्यातां शुश्रूषा वाऽपि तद्विधा ।
विद्या तस्मिन् न वप्तव्या शुभं बीजमिवोषरे ॥ ५७

लौकिकं वैदिकं वाऽपि तथाऽऽध्यात्मिकमेव वा ।
यस्माज्ज्ञानमिदं प्राप्तं तं पूर्वमभिवादयेत् ॥ ५८

सव्येन सव्यस्स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ।
न कुर्यादेकहस्तेन गुरोः पादाभिवादनम् ॥ ५९

निषेकादीनि कर्माणि यः करोति यथाविधि ।

1. क-ख—आचारप्रभवो ।

अध्यापयति चैवैनं स विप्रो गुरुरुच्यते ॥ ६०

कृत्वोपनयनं वेदान् योऽध्यापयति नित्यशः ।
सकल्पान् सरहस्यांश्च स चोपाध्याय उच्यते ॥ ६१

साङ्गांश्च वेदानध्याप्य शिक्षयित्वा व्रतानि च ।
विवृणोति च मन्त्रार्थान् आचार्यस्सोऽभिधीयते ॥ ६२

उपाध्यायाद्दशाचार्य आचार्याणां शतं पिता ।
पितुश्शतगुणं माता गौरवेणातिरिच्यते ॥ ६३

तस्मात् तेषां वशे तिष्ठेच् छुश्रूषापरमो भवेत् ।
अवमानाद्धि तेषां तु नरकं स्यान्न संशयः ॥ ६४

हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान् वयोधिकान् ।
रूपद्रविणहीनांश्च न वाचाऽधिक्षिपेद्बुधः ॥ ६५

शपता यत् कृतं पुण्यं शप्यमानं तु गच्छति ।
शप्यमानस्य यत् पापं शपन्तमनुगच्छति ॥ ६६

नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम् ।
द्वेषं डम्भं च मानं च क्रोधं तैक्ष्ण्यं च वर्जयेत् ॥ ६७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आश्वमेधिकपर्वणि पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

॥ ९२ ॥ अनुगीतापर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥

[ अस्मिन्नध्याये ६७ श्लोकाः ]

---

## ॥ षोडशाधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रत्यग्निसृष्टिप्रकारकथनम् ॥ १ ॥ आहवनीयादित्वेन तद्विभागकथनपूर्वकं तत्तन्नामनिर्वचनम् ॥ २ ॥ तथा यज्ञाग्निहोत्रप्रशंसनम् ॥ ३ ॥

---

युधिष्ठिरः—

भगवंस्तव भक्तस्य [1]धर्माधर्ममजानतः ।
धर्मं पुण्यतमं देव पृच्छतः कथयस्व मे ॥ १

श्रीभगवान्—

यदेतदग्निहोत्रं वै सृष्टं वर्णत्रयस्य तु ।
मन्त्रवद्यद्धुतं सम्यग् विधिना चाप्युपासितम् ॥ २
आहिताग्निं नयत्यूर्ध्वं सपत्नीकं सबान्धवम् ॥ २॥

युधिष्ठिरः—

कथं तद्ब्राह्मणैर्देव होतव्यं क्षत्रियैः कथम् ।
वैश्यैर्वा देवदेवेश कथं वा सुहुतं भवेत् ॥ ३॥
कस्मिन् कालेऽथवा कस्मिन्नाधेयोऽग्निस्सुरोत्तम ।
आहितस्य कथं वाऽपि सम्यगाचरणं भवेत् ॥ ४॥
कत्यग्नयः किमात्मानस् स्थानं किं कस्य वा विभो ।
कतरस्मिन् हुते स्थाने कं व्रजेदाग्निहोत्रिकः ॥ ५॥

---

1. क-ख-ग-घ—मम धर्मजनप्रिय ।

अग्निहोत्रनिमित्तं च किमुत्पन्नं पुराऽनघ ।
कथमेवाथ हूयन्ते प्रीयन्ते च सुराः कथम् ॥ ६॥

विधिवन्मन्त्रवद्भक्त्या पूजितास्त्वग्नयः कथम् ।
कां गतिं वदतां श्रेष्ठ नयन्ति ह्यग्निहोत्रिणः ॥ ७॥

दुर्हुताश्चापि भगवन्नविज्ञातास्त्रयोऽग्नयः ।
[1]किमाहिताग्नेः कुर्वन्ति दुश्चीर्णा वाऽपि केशव ॥ ८॥

उत्सन्नाग्निस्तु पापात्मा कां योनिं देव गच्छति ॥ ९

एतत् सर्वं समासेन भक्त्या ह्युपगतस्य मे ।
वक्तुमर्हसि सर्वज्ञ सर्वात्मक नमोऽस्तु ते ॥ १०

**श्रीभगवान्—**

शृणु राजन् महापुण्यम् इदं धर्मामृतं परम् ।
यत्तु तारयते युक्तान् ब्राह्मणानग्निहोत्रिणः ॥ ११

ब्रह्मत्वेनासृजं लोकान् अहमादौ महाद्युते ।
सृष्टोऽग्निर्मुखतः पूर्वं लोकानां हितकाम्यया ॥ १२

यस्मादग्रे स भूतानां सर्वेषां निर्मितो मया ।
तस्मादग्नीत्यभिहितः पुराणज्ञैर्महर्षिभिः ॥ १३

यस्मात्तु सर्वकृत्येषु पूर्वमस्मै प्रदीयते ।
[2]आहुतिर्दीप्यमानाय तस्मादग्नीति कथ्यते ॥ १४

---

1. ख—नास्तीदमर्धम्   2. क-ख-घ—नास्तीदमर्धम्

[1]यस्माच्च नयति ह्यग्र्यां गतिं विप्रान् सुपूजितः ।
यस्माच्च नयनाद्राजन् देवेष्वग्नीति कीर्त्यते ॥ १५

यस्माच्च दुर्हुतस्सोऽयम् अलं भक्षयितुं क्षणात् ।
यजमानं नरश्रेष्ठ क्रव्यादोऽग्निस्ततस्स्मृतः ॥ १६

सर्वभूतात्मको राजन् देवानामेष वै मुखम् ।
प्रथमं मन्मुखात् सृष्टो लोकार्थे पचनप्रभुः ॥ १७

सृष्टमात्रो जगत् सर्वम् अत्तुमैच्छत् पुरा खलु ।
[2]ततः प्रशमितस्सोऽग्निर् उपासीनो मया पुनः ॥ १८

सततोपासनात् [3]सोऽयम् औपासन इति स्मृतः ॥ १८॥

आहुतिस्सर्वमाख्याता तस्मिन् वसति सोऽनलः ।
आवसथ्य इति ख्यातस् तेनासौ ब्रह्मवादिभिः ॥ १९॥

तस्मिन् पञ्च महायज्ञा वर्तन्ते यस्य धर्मतः ।
सोममण्डलमध्येन गतिस्तस्य द्विजन्मनः ॥ २०॥

तेन सप्तर्षयस्सिद्धास् संयतेन्द्रियबुद्धयः ।
गता ह्यमरसायुज्यम् एकाग्र्यर्चनतत्पराः ॥ २१॥

---

1. अ-क-ख-घ—अर्धद्वयं नास्ति
2. क—आहुत्या शमितस्सोऽग्निरुपास्यत मया पुरा ।
   ख-ग-घ—उपास्यत मया पुरः । अ—उपास्यैव मनोप्रभुः ।
3. क-ख—पूर्वमौपासन ।

[1,2]अपरे चावसथ्यं च पचनाग्निं प्रचक्षते ।
तस्मिन् पञ्च महायज्ञा वैश्वदेवश्च वर्तते ॥　२२॥

स्थालीपाकं च गार्हं च सर्वे चास्मिन् प्रतिष्ठिताः ।
गृह्यकर्मवहो यस्मात् तस्माद्गृहपतिस्तु सः ॥　२३॥

औपासनं चावसथ्यं सभ्यं पचनपावकम् ।
आहुर्ब्रह्मविदः केचिन्मतमेतन्ममापि च ॥　२४॥

अग्निहोत्रप्रकारं तु शृणु राजन् समाहितः ।
त्रयाणां गुणनामानि वह्नीनामुच्यते मया ॥　२५॥

गृहाणां हि पतित्वं हि गृहपत्यमिति स्मृतम् ।
गृहपत्यं तु यस्यासीत् तत् तस्माद्गार्हपत्यता ॥　२६॥

यजमानं तु यस्मात्तु दक्षिणां तु गतिं नयेत् ।
[3]दक्षिणाग्निं तमाहुस्ते दक्षिणायतनं द्विजाः ॥　२७॥

आहुतिस्सर्वमाख्याति हव्यं वै वहनं स्मृतम् ।
सर्वहव्यवहो वह्निर् गतश्चाहवनीयताम् ॥　२८॥

[4]यस्त्वावसथ्यं जुहुयान्मूलाग्निं विधिवद्द्विजः ।

1. अ—अर्धचतुष्टयं नास्ति　　2. च—अर्धद्वयं नास्ति
3. घ—दक्षिणाग्निरिति प्राहुर्दक्षिणत्वाच्च तद्विदः ॥
क-ख—दक्षिणाग्निं तमाहुस्तु दक्षिणत्वाच्च तद्विदः ।
ग-च—दक्षिणाग्निं तमाहुस्तद्दक्षिणायतनं द्विजाः ।
4. क-ख-घ—नास्तीदमर्धम् ।

[1]आवसथ्यं तु तं चाग्निं पवनाग्निं प्रचक्षते ॥ २९॥

तेषां सभागतो वह्निस् सभ्य इत्यभिधीयते ।
आवसथ्यस्तु यो वह्निः प्रथमस्स प्रजापतिः ॥ ३०॥

ब्रह्मा च गार्हपत्योऽग्निस् तस्मादेव तु सोऽभवत् ।
दक्षिणाग्निस्त्वयं रुद्रः क्रोधात्मा चण्ड एव सः ॥ ३१॥

अहमाहवनीयोऽग्निर् आहोमाद्यस्य वै मुखे ।
[2]सभ्योऽग्निः पञ्चमो यस्तु स्कन्द एव नराधिप ॥ ३२॥

पृथिवी गार्हपत्योऽग्निर् अन्तरिक्षं च दक्षिणः ।
स्वर्गमाहवनीयोऽग्निर् एवमग्नित्रयं स्मृतम् ॥ ३३॥

वृत्तश्च गार्हपत्योऽग्निर् यस्माद्वृत्ता च मेदिनी ।
अर्धचन्द्राकृतिः खं वै दक्षिणाग्निस्तथा भवेत् ॥ ३४॥

चतुरश्रं ततस्स्वर्गं निर्मलं तु निरामयम् ।
तस्मादाहवनीयोऽग्निर् चतुरश्रो भवेन्नृप ॥ ३५॥

जुहुयाद्गार्हपत्यं यो भुवं जयति स द्विजः ।
जुहोति दक्षिणाग्निं यस् स जयत्यन्तरिक्षकम् ॥ ३६॥

पृथिवीमन्तरिक्षं च दिवं चर्षिगणैस्सह ।
जयत्याहवनीयं यो जुहुयाद्भक्तिमान् द्विजः ॥ ३७॥

---

1. ग—आवसथ्य—एतदादि सार्धैकोनचत्वारिंशच्छ्लोकपर्यन्तं नास्ति
2. ब—इतः श्लोकद्वयं नास्ति

आभिमुख्येन होमस्तु यस्य यज्ञेषु वर्तते ।
तेनाप्याहवनीयत्वं गतो वह्निर्महाद्युतिः ॥ ३८॥

आहोमादग्निहोत्रेषु यज्ञैर्वा यत्र सर्वशः ।
यस्मादस्मिन् प्रवर्तन्ते ततो ह्याहवनीयता ॥ ३९॥

यस्त्वावसथ्यं जुहुयान्मूलाग्निं विधिवद्द्विजः ।
स तु सप्तर्षिलोकेषु सपत्नीकः प्रमोदते ॥ ४०॥

यश्चाप्युपासते सभ्यं विधिवत् प्रयतात्मवान् ।
स जयेद्वाङ्मयं सर्वं तथात्यृषिसभामपि ॥ ४१॥

अग्नीनामथवाऽग्नेऽस्तु यस्य होमः प्रदीयते ।
इष्टो भवति सर्वाग्निर् अग्निहोत्रं च यद्भवेत् ॥ ४२॥

त्राणाय यजमानस्य चाग्निहोत्रमिति स्मृतम् ॥ ४३

हो इत्येष विषादो वै विषादो दुःखमुच्यते ।
दुःखं [1]तापत्रयं प्रोक्तं पापं हि नरकं विदुः ॥ ४४
तस्माद्वै त्रायते दुःखाद् यजमानं हुतोऽनलः ।
तस्मात्तु विधिवत् प्रोक्तम् अग्निहोत्रमिति श्रुतौ ॥ ४५

1. व—अत्र महान्विच्छेदः । तदनन्तरं.
......राहोमाद्यस्य वै मुखम् ।
सभ्याग्निः पञ्चमो यस्तु स्कन्द एव नराधिप ॥
पृथिवीगार्हपत्योऽग्निरन्तरिक्षं तु दक्षिणम् ।
स्वर्गमाहवनीयोऽग्निरेवमग्नित्रयं स्मृतम् ॥
वृत्तं च गार्हपत्योऽग्निस् तापं च नरकं विदुः । [ अधिकः पाठः ]

तदग्निहोत्रं सृष्टं वै ब्रह्मणा लोककर्तृणा ।
वेदाश्चाप्य[1]ग्निहोत्रार्थं जज्ञिरे स्वयमेव तु ॥ ४६

अग्निहोत्रफला वेदास् शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला नारी दत्तभोगफलं धनम् ॥ ४७

त्रिवेदमन्त्रसंयोगाद् अग्निहोत्रं प्रवर्तते ।
ऋग्यजुस्सामभिः पुण्यैस् स्थाप्यते सूत्रसंयुतैः ॥ ४८

वसन्ते ब्राह्मणस्य स्याद् आधेयोऽग्निर्नराधिप ।
वसन्तो ब्राह्मणः प्रोक्तो वेदयोनिस्स उच्यते ॥ ४९

अग्न्याधेयं तु येनाथ वसन्ते क्रियते नृप ।
तस्य श्रीर्ब्रह्मवृद्धिश्च ब्राह्मणस्य विवर्धते ॥ ५०

क्षत्रियस्याग्निराधेयो ग्रीष्मे श्रेष्ठस्स वै नृप ॥ ५०॥

येनाधानं तु वै ग्रीष्मे क्रियते तस्य वर्धते ।
श्रीः प्रजाः पशवश्चैव वित्तं तेजो बलं यशः ॥ ५१॥

शरद्रात्रेऽथ वैश्यस्य ह्याधानीयो हुताशनः ।
शरद्रात्रं स्वयं वैश्यो वैश्ययोनिस्स उच्यते ॥ ५२॥

शरद्याधानमेवं वै क्रियते येन पाण्डव ।
तस्यापि श्रीः प्रजाऽऽयुश्च पशवोऽर्थश्च वर्धते ॥ ५३॥

पशवस्सर्वे एवैते त्रिभिर्वेदैरलङ्कृताः ।

---

1. झ-ग-म—ग्निहोत्रं च

अग्निहोत्रात् प्रवर्तन्ते तैरेव ध्रियते जगत् ॥　　५४॥
ग्राम्यारण्याश्च पशवस् तथा वृक्षास्तृणानि च ।
फलान्योषधयश्चापि अग्निहोत्रकृते हि ताः ॥　　५५॥
रसास्स्नेहास्तथा गन्धा रत्नानि मणयस्तथा ।
काञ्चनानि च लोहानि ह्यग्निहोत्रकृतेऽभवन् ॥　　५६॥
आयुर्वेदो धनुर्वेदो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं च तत् सर्वम् अग्निहोत्रकृते कृतम् ॥　　५७॥
[1]छन्दश्शिक्षा च कल्पाश्च तथा व्याकरणं नृप ।
ज्योतिश्शास्त्रं निरुक्तं चाप्यग्निहोत्रकृते कृतम् ॥　　५८॥
इतिहासपुराणाश्च गाथाश्चोपनिषत् तथा ।
आथर्वणानि कर्माणि चाग्निहोत्रकृते कृतम् ॥　　५९॥
यच्चैतस्यां पृथिव्यां हि किञ्चिदस्ति चराचरम् ।
तत् सर्वमग्निहोत्रस्य कृते सृष्टं स्वयम्भुवा ॥　　६०॥
अग्निहोत्रस्य दर्शस्य पूर्णमासस्य चाप्यथ ।
यूपेष्टिपशुबन्धानां सोमपानक्रियावताम् ॥　　६१॥
तिथिनक्षत्रयोगानां मुहूर्तकरणात्मनाम् ।
कालस्य वेदनार्थं तु ज्योतिर्ज्ञानं कृतं पुरा ॥　　६२॥
[2]ऋग्यजुस्साममन्त्राणां श्लोकतत्त्वार्थचिन्तनात् ।

---

1. घ—इतः श्लोकद्वयं नास्ति　　2. क-ख—अर्धषट्कं नास्ति

प्रत्यापत्तिविकल्पानां छन्दोज्ञानं प्रकल्पितम् ॥ ६३॥

वर्णाक्षरपदार्थानां सन्धिलिङ्गविवक्षितम् ।
नामधातुविवेकार्थं पुरा व्याकरणं कृतम् ॥ ६४॥

यूपवेद्यध्वरार्थं तु प्रोक्षणश्रवणाय तु ।
यज्ञदैवतयोगार्थं शिक्षाज्ञानं प्रकल्पितम् ॥ ६५॥

यज्ञपात्रपवित्रार्थं द्रव्यसम्भारणाय च ।
सर्वयज्ञविकल्पाय पुरा कल्पं प्रकल्पितम् ॥ ६६॥

नामधातुविभक्तीनां तत्त्वार्थनियमाय च ।
सर्ववेदनिरुक्तानां निरुक्तमृषिभिः कृतम् ॥ ६७॥

वेद्यर्थं पृथिवी सृष्टा सम्भारार्थं तथैव च ।
इध्मार्थमथ यूपार्थं ब्रह्मा चक्रे वनस्पतिम् ॥ ६८॥

ग्राम्यारण्याश्च पशवो जायन्ते यज्ञकारणात् ।
मन्त्राणां विनियोगं च प्रेषितश्रवणं तथा ॥ ६९॥

अनुयाजप्रयाजाश्च मरुतां शंसिनस्तथा ।
औद्गात्रं चैव साम्नां वै प्रतिप्रस्थानमेव च ॥ ७०॥

विष्णुक्रमाणां क्रमणं दक्षिणावभृथं तथा ।
[1]त्रिकालमर्चनं चैव स्थानेषूपहृतं तथा ॥ ७१॥

देवताग्रहणं मोक्षं हविषां श्रपणं तथा ।

---

1. अ—नास्तीदमर्धम्

नावबुद्ध्यन्ति ये विप्रा निन्दन्ति च पशोर्वधम् ॥　　७२॥

ते यान्ति नरकं घोरं रौरवं तमसाऽऽवृतम् ॥　　७३

शतवर्षसहस्राणि तत्र स्थित्वा नराधमाः ।
क्रिमिभिर्भक्ष्यमाणाश्च तिष्ठेयुः पूयशोणिते ॥　　७४

यूपास्तु मन्त्रसंस्कारैर् एषां वै पशवस्तथा ।
यजमानेन सहितास् स्वर्गं यान्ति नरेश्वर ॥　　७५

यावत्कालं हि यज्वा वै स्वर्गलोके महीयते ।
तावत्कालं प्रमोदन्ते पशवो ह्यध्वरे हताः ॥　　७६

वृक्षा यूपत्वमिच्छन्ति पशुत्वं पशवस्तथा ।
तृणानीच्छन्ति बर्हिष्ट्वं ओषध्यश्च हविष्यताम् ॥　　७७

सोमत्वं च लतास्सर्वा वेदित्वं च वसुन्धरा ॥　　७७॥

यस्मात् पशुत्वमिच्छन्ति पशवस्स्वर्गलिप्सया ।
तस्मात् पशुवधे हिंसा नास्ति यज्ञेषु पाण्डव ॥　　७८॥

[1]अहिंसा वैदिकं कर्म ब्रह्मकर्मेति तत्कृतम् ॥　　७९

वेदोक्तं ये न कुर्वन्ति हिंसाबुद्ध्या क्रतून् द्विजाः ।
सद्यश्शूद्रत्वमायान्ति प्रेत्य चण्डालतामपि ॥　　८०

गावो यज्ञार्थमुत्पन्ना दक्षिणार्थं तथैव च ।
सुवर्णं रजतं चैव पात्रकुम्भार्थमेव च ॥　　८१

---

1. अ—अर्धचतुष्टयं नास्ति

दर्भास्संस्तरणार्थं तु रक्षसां रक्षणाय च ।
यजनार्थं द्विजास्सृष्टास् तारका दिवि देवताः ॥ ८२
क्षत्रिया रक्षणार्थं तु वैश्या वार्तानिमित्ततः ।
शुश्रूषार्थं त्रयाणां तु शूद्रास्सृष्टास्स्वयम्भुवा ॥ ८३
एवमेतज्जगत् सर्वम् अग्निहोत्रकृते कृतम् ॥ ८३॥
नावबुध्यन्ति ये चैवं नरास्तु तमसा वृताः ।
ते यान्ति नरकं घोरं रौरवं नाम विश्रुतम् ॥ ८४॥
रौरवाद्विप्रयुक्तास्तु क्रिमियोनिं व्रजन्ति ते ॥ ८५
यथोक्तमग्निहोत्राणां शुश्रूषन्ति च ये द्विजाः ।
तैस्तु दत्तं हुतं चेष्टं दत्तमध्यापितं भवेत् ॥ ८६
एवमिष्टं च पूर्तं च यद्विप्रैः क्रियते नृप ।
तत् सर्वं सम्यगाहृत्य चादित्ये स्थापयाम्यहम् ॥ ८७
मया स्थापितमादित्ये लोकस्य सुकृतं हि यत् ।
धारयेत् तत् सहस्रांशुस् सुकृतं ह्यग्निहोत्रिणाम् ॥ ८८
[1-2]यावत्कालं तु तिष्ठन्ति लोके चाप्यग्निहोत्रिणः ।
तावदेव हि पुण्येन दीप्यते रविणाऽम्बरे ॥ ८९
स्वर्गे स्वर्गं गतानां तु वीर्याद्भवति वीर्यवान् ।
तत्र ते ह्युपभुञ्जन्ति ह्यग्निहोत्रस्य तत् फलम् ॥ ९०

1. अ—अर्धषट्कं नास्ति 2. क-ख—इदमर्धं नास्ति

समानरूपा देवानां तिष्ठन्त्याभूतसम्प्लवम् ॥　　९०॥

वृथाग्निना च ये केचिद् दह्यन्ते ह्यग्निहोत्रिणः ।
न तेऽग्निहोत्रिणां लोकं मनसाऽपि व्रजन्ति वै ॥　　९१॥

वीरघ्नास्ते दुराचारा दरिद्रास्तु नराधमाः ।
विकला व्याधिताश्चापि जायन्ते शूद्रयोनिषु ॥　　९२॥

तस्मादप्रोषितैर्नित्यम् अग्निहोत्रं द्विजातिभिः ।
होतव्यं विधिवद्राजन्नूर्ध्वामिच्छन्ति ये गतिम् ॥　　९३॥

आत्मवत् तत्र मन्तव्यम् अग्निहोत्रं युधिष्ठिर ।
न त्याज्यं क्षणमप्येतद् गृहीतव्यं द्विजातिभिः ॥　　९४॥

वृद्धत्वेऽप्यग्निहोत्रं वै गृह्णन्ति विधिवद्द्विजाः ।
शूद्रान्नाद्विरता दान्तास् संयतेन्द्रियबुद्धयः ॥　　९५॥

पञ्चयज्ञपरा नित्यं क्रोधलोभविवर्जिताः ।
द्विकालमतिथींश्चैव पूजयन्ति च भक्तितः ॥　　९६॥

तेऽपि सूर्योदयप्रख्यैर् विमानैर्वायुवेगिभिः ।
मम लोके प्रमोदन्ते दृष्ट्वा मां च युधिष्ठिर ॥　　९७॥

मन्वन्तरं च तत्रैकं मोदिता द्विजसत्तमाः ।
[1]इह मानुष्यके लोके भवन्ति द्विजसत्तमाः ॥　　९८॥

1. क-ख—इदमर्धं नास्ति

बालाहिताग्नयो ये च शूद्रान्नाद्विरतास्सदा ।
क्रोधलोभविनिर्मुक्ताः प्रातस्स्नानपरायणाः ॥ ९९॥

यथोक्तमग्निहोत्रं वै जुह्वते विजितेन्द्रियाः ॥ १००

आतिथेयास्सदा सौम्या द्विकालं मत्परायणाः ।
ते यान्त्यपुनरावृत्तिं भित्त्वा चादित्यमण्डलम् ॥ १०१

मम लोकं सपत्नीका यानैस्सूर्योदयप्रभैः ।
तत्र बालार्कसङ्काशाः कामगाः कामरूपिणः ॥ १०२

ऐश्वर्यगुणसम्पन्नाः क्रीडन्ति च यथासुखम् ।
इत्येषा ह्याहिताग्नीनां विभूतिः पाण्डुनन्दन ॥ १०३

ये च वेदश्रुतिं केचिन्निन्दमाना ह्यबुद्धयः ।
[1]प्रमाणं न च कुर्वन्ति ते यान्ति ह्यक्षयं तमः ॥ १०४

प्रमाणमितिहासं च वेदान् कुर्वन्ति ये द्विजाः ।
ते यान्त्यमरसायुज्यं नित्यमास्तिक्यबुद्धयः ॥ १०५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

॥ ९ २॥ अनुगीतापर्वणि शततमोऽध्यायः ॥ १०० ॥

[ अस्मिन्नध्याये १०५ श्लोकाः ]

---

1. घ—इतः सार्धः श्लोको नास्ति

## ॥ सप्तदशाधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति चान्द्रायणविधिनिरूपणपूर्वकं तदाचरणफलकथनम् ॥ १ ॥

युधिष्ठिरः—

चक्रायुध नमस्तेऽस्तु देवेश गरुडध्वज ।
चान्द्रायणविधिं पुण्यम् आख्याहि भगवन् मम ॥ १

श्रीभगवान्—

शृणु पाण्डव तत्त्वेन सर्वपापप्रणाशनम् ।
पापिनो येन शुद्ध्यन्ति तत् ते वक्ष्यामि सर्वशः ॥ २

ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा चरितव्रतः ।
यथावत् कर्तुकामो यस् तस्येयं प्रथमा क्रिया ॥ ३

शोधयेत्तु शरीरं स्वं पञ्चगव्येन यन्त्रितम् ।
सशिरः कृष्णपक्षे तु ततः कुर्वीत वापनम् ॥ ४

शुद्धवासाश्शुचिर्भूत्वा मौञ्जीं बध्नीत मेखलाम् ।
पालाशदण्डमादाय ब्रह्मचारिव्रते स्थितः ॥ ५

कृतोपवासः पूर्वं तु शुक्लप्रतिपदि द्विजः ।
नदीसङ्गमतीर्थेषु शुचौ देशे गृहेऽपि वा ॥ ६

गोमयेनोपलिप्तेऽथ स्थण्डिलेऽग्निं निधापयेत् ॥ ६ ॥

आघारावाज्यभागौ च प्रणवं व्याहृतिं तथा ।
वारुणं चैव पञ्चैव हुत्वा सर्वान् यथाक्रमम् ॥ ७॥

सत्याय विष्णवे चेति ब्रह्मर्षिभ्योऽथ ब्रह्मणे ।
विश्वेभ्यश्चैव देवेभ्यस् सप्रजापतये तथा ॥ ८॥

षट्कृत्वो जुहुयात् पश्चात् प्रायश्चित्ताहुतीर्द्विजः ।
ततस्समापयेदग्निं शान्तिं कृत्वाऽथ पौष्टिकम् ॥ ९॥

प्रणम्य चाग्निं सोमं च भस्म धृत्वा तथात्मनि ॥ १०

नदीं गत्वा विविक्तात्मा सोमाय वरुणाय च ।
आदित्याय नमस्कृत्वा ततस्नायात् समाहितः ॥ ११

उत्तीर्योदकमाचम्य त्वासीनः पूर्वतोमुखः ।
प्राणायामं ततः कृत्वा पवित्रैरभिषेचनम् ॥ १२

आचान्तस्त्वभिवीक्षेत चोर्ध्वबाहुर्दिवाकरम् ।
[1]कृताञ्जलिपुटः पश्चात् कुर्याच्चैव प्रदक्षिणम् ॥ १३

नारायणं वा रुद्रं वा ब्रह्माणमथवाऽपि वा ।
आरण्यं मम सूक्तं वा प्राग्भोजनमथापि वा ॥ १४

वीरघ्नमृषभं वाऽपि तथा चाप्यघमर्षणम् ।
गायत्रीं मम देवीं वा सावित्रीं वा जपेत् ततः ॥ १५

शतं वाऽष्टशतं वाऽपि सहस्रमथवा परम् ॥ १५॥

1. च—अर्धषट्कं नास्ति

ततो मध्याह्नकाले वै पायसं यावकं हि वा ।
पाचयित्वा प्रयत्नेन प्रयतस्सुसमाहितः ॥ १६॥

[1]पात्रं ततस्समादाय सौवर्णं राजतं तु वा ।
ताम्रं वा मृन्मयं वाऽपि औदुम्बरमथापि वा ॥ १७॥

वृक्षाणां याज्ञियानां तु पर्णैरार्द्रैरकुत्सितैः ।
पुटकेन तु गुप्तेन चरेद्भैक्षं समाहितः ॥ १८॥

ब्राह्मणानां गृहाणां तु सप्तानां नापरं व्रजेत् ।
गोदोहमात्रं तिष्ठेत्तु वाग्यतस्संयतेन्द्रियः ॥ १९॥

[2]न हसेच्च न वीक्षेच्च नाभिभाषेत वा स्त्रिया ।
दृष्ट्वा मूत्रपुरीषं वा चण्डालं वा रजस्वलाम् ॥ २०॥
पतितं च तथा श्वानम् आदित्यमवलोकयेत् ॥ २१

यो हि पादुकमारुह्य सर्वदा प्रचरेद्द्विजः ।
तं दृष्ट्वा पापकर्माणम् आदित्यमवलोकयेत् ॥ २२

ततस्त्वावसथं प्राप्तो भिक्षां निक्षिप्य भूतले ।
प्रक्षाल्य पादावाजानु हस्तावाकूर्परं पुनः ॥ २३
आचम्य वारिणा तेन वह्निं विप्रांश्च पूजयेत् ॥ २३॥

पञ्च सप्ताथवा कुर्याद् भागान् भैक्षस्य तस्य वै ।
तेषामन्यतमं पिण्डम् आदित्याय निवेदयेत् ॥ २४॥

---

1. अ-क-ख-घ—अर्धचतुष्टयं नास्ति	2. घ—नास्तीदमर्धम्

ब्रह्मणे चाग्नये चैव सोमाय वरुणाय च ।
विश्वेभ्यश्चैव देवेभ्यो दद्यादन्नं यथाक्रमम् ॥ २५॥
अवशिष्टमथैकं तु वक्त्रमात्रं प्रकल्पयेत् ॥ २६
अङ्गुल्यग्रे स्थितं पिण्डं गायत्र्या चाभिमन्त्रयेत् ।
[1]अङ्गुलीभिस्त्रिभिः पिण्डं प्राश्नीयात् प्राङ्मुखश्शुचिः ॥ २७
यथा च वर्धते सोमो ह्रसते च यथा पुनः ।
तथा पिण्डाश्च वर्धन्ते ह्रसन्ते च दिने दिने ॥ २८
त्रिकालं स्नानमस्योक्तं द्विकालमथवा सकृत् ।
ब्रह्मचारी सदा वाऽपि न च वस्त्रं प्रपीडयेत् ॥ २९
स्थानेन दिवसं तिष्ठेद् रात्रौ वीरासनं व्रजेत् ।
भवेत् स्थण्डिलशायी वाऽप्यथवा वृक्षमूलकः ॥ ३०
वल्कलं यदि वा क्षौमं शाणं कार्पासकं तथा ।
आच्छादनं भवेत् तस्य वस्त्रार्थं पाण्डुनन्दन ॥ ३१
एवं चान्द्रायणे पूर्णे मासस्यान्ते प्रयत्नवान् ।
ब्राह्मणान् भोजयेद्भक्त्या दद्याच्चैव तु दक्षिणाम् ॥ ३२
चान्द्रायणेन चीर्णेन यत् कृतं तेन दुष्कृतम् ।
तत् सर्वं तत्क्षणादेव भस्मीभवति काष्ठवत् ॥ ३३
ब्रह्महत्या च गोहत्या सुवर्णस्तैन्यमेव च ।

1. अ—इदमर्धं नास्ति

भ्रूणहत्या सुरापानं गुरोर्दारव्यतिक्रमः ॥ ३४

एवमन्यानि पापानि पातकीयानि यानि च ।
चान्द्रायणेन नश्यन्ति वायुना पांसवो यथा ॥ ३५

अनिर्दशाया गोः क्षीरम् औष्ट्रमाविकमेव च ।
मृतसूतकयोश्चान्नं भुक्त्वा चान्द्रायणं चरेत् ॥ ३६

उपपातकिनश्चान्नं पतितान्नं तथैव च ।
[1]शूद्रस्योच्छेषणं चैव भुक्त्वा चान्द्रायणं चरेत् ॥ ३७

[2]आकाशस्थं तु हस्तस्थम् अधस्त्रस्तं तथैव च ।
परहस्तास्थितं चैव भुक्त्वा चान्द्रायणं चरेत् ॥ ३८

अथाग्रेदिधिषोरन्नं दिधिषूपपतेस्तथा ।
परिवेत्तुस्तथा चान्नं परिवित्तान्नमेव च ॥ ३९

कुण्डान्नं गोलकान्नं च देवलान्नं तथैव च ।
तथा पुरोहितस्यान्नं भुक्त्वा चान्द्रायणं चरेत् ॥ ४०

[3]सुरासवं विषं सर्पिर् लाक्षा लवणमेव च ।
तैलं चापि च विक्रीणन् द्विजश्चान्द्रायणं चरेत् ॥ ४१

[4]एकोद्दिष्टं तु यो भुङ्क्ते जनमध्यगतोऽपि यः ।
भिन्नभाण्डेषु यो भुङ्क्ते द्विजश्चान्द्रायणं चरेत् ॥ ४२

---

1. क—अर्धपञ्चकं नास्ति  2. ख-घ—श्लोकोऽयं नास्ति
3. ग—अर्धद्वयं नास्ति  4. अ—अर्धद्वयं नास्ति

यो भुङ्क्तेऽनुपनीतेन यो भुङ्क्ते च स्त्रिया सह ।
यो भुङ्क्ते कन्यया सार्धं द्विजश्चान्द्रायणं चरेत् ॥ ४३
उच्छिष्टं स्थापयेद्विप्रो यो मोहाद्भोजनान्तरे ।
दद्याद्वा यदि सम्मोहाद् द्विजश्चान्द्रायणं चरेत् ॥ ४४
तुम्बकोशातकं चैव पलाण्डुं गृञ्जनं तथा ।
छत्राकं लशुनं चैव भुक्त्वा चान्द्रायणं चरेत् ॥ ४५
[1]द्विजः पर्युषितं चान्नं पक्वं परगृहागतम् ।
विपक्वं च तथा मांसं भुक्त्वा चान्द्रायणं चरेत् ॥ ४६
उदक्यया शुना वाऽपि चण्डालैर्वा द्विजोत्तमः ।
दृष्टमन्नं तु भुञ्जानो द्विजश्चान्द्रायणं चरेत् ॥ ४७
[2]एतत् पुरा विशुद्ध्यर्थम् ऋषिभिश्चरितव्रतम् ।
पावनं सर्वभूतानां पुण्यं पाण्डव चोदितम् ॥ ४८
एतेन वसवो रुद्राश् चादित्याश्च दिवं गताः ।
एतद्ध्य परं गुह्यं पवित्रं पापनाशनम् ॥ ४९
यथोक्तमेतद्यः कुर्याद् द्विजः पापप्रणाशनम् ।
[3]स दिवं याति पूतात्मा निर्मलादित्यसन्निभः ॥ ५०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥
॥ ९२ ॥ अनुगीतापर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥
[ अस्मिन्नध्याये ५० श्लोकाः ]

---

1. ख-घ—श्लोकोऽयं नास्ति 2. ग—इदमर्धं नास्ति
3. ग—इदमर्धं नास्ति

## ।। अष्टादशाधिकशततमोऽध्यायः ।।

कृष्णेन युधिष्ठिरं प्रति कार्तिकादिद्वादशमासेषु एकभुक्तव्रताचरण-प्रकारनिरूपणपूर्वकं तत्फलकथनम् ॥ १ ॥

वैशम्पायनः—

केशवेनैवमुक्ते तु चान्द्रायणविधिक्रमे ।
अपृच्छत् पुनरन्यांश्च धर्मान् धर्मात्मजो नृप ।। १

युधिष्ठिरः—

सर्वभूतपते श्रीमन् सर्वभूतनमस्कृत ।
सर्वभूतहितं धर्मं सर्वज्ञ कथयस्व मे ।। २

श्रीभगवान्—

यद्दरिद्रजनस्यापि स्वर्ग्यं सुखकरं भवेत् ।
सर्वपापप्रशमनं तच्छृणुष्व युधिष्ठिर ।। ३

कार्तिकाद्यास्तु ये मासा द्वादशैव प्रकीर्तिताः ।
तेष्वेकभुक्तनियमस् सर्वेषामुच्यते मया ।। ४

कार्तिके यस्तु वै मासे नन्दायां संयतेन्द्रियः ।
एकभुक्तेन मद्भक्तो मासमेकं तु वर्तते ।। ५

जलं वा न पिबेन्मासे नान्तरा भोजनात् परम् ।
आदित्यरूपं मां नित्यम् अर्चयन् सुसमाहितः ।। ६

व्रतान्ते भोजयेद्विप्रान् दक्षिणां सम्प्रदाय च ।
क्रोधलोभविनिर्मुक्तस् तस्य पुण्यफलं शृणु ॥ ७

विधिवत् कपिलादाने यत् पुण्यं समुदाहृतम् ।
तत् पुण्यं समनुप्राप्य सूर्यलोके महीयते ॥ ८
ततश्चापि च्युतः कालात् [1]पुरुषेषूपजायते ॥ ८॥

मार्गशीर्षं तु यो मासम् एकभुक्तेन वर्तते ।
कामं क्रोधं च लोभं च परित्यज्य यथाविधि ॥ ९॥

स्नात्वा चादित्यरूपं माम् अर्चयेन्नियतेन्द्रियः ।
जपन्नेव तु गायत्रीं मामिकां वाग्यतश्शुचिः ॥ १०॥

[2]मासे परिसमाप्ते तु भोजयित्वा द्विजाञ्शुचिः ।
तानर्चयति मद्भक्त्या तस्य पुण्यफलं शृणु ॥ ११॥

अग्निहोत्रे कृते पुण्यम् आहिताग्नेश्च यद्भवेत् ।
तत्पुण्यफलमासाद्य यानेनाम्बरशोभिना ॥ १२॥
सप्तर्षिलोके चरति यथाकालं यथासुखम् ॥ १३

ततश्चापि च्युतः कालाद्धरिवर्षेषु जायते ।
तत्र प्रकामं क्रीडित्वा राजा पश्चाद्भविष्यति ॥ १४

पौषमासं क्षिपेदेवम् एकभुक्तेन यो नरः ।
अर्चयन्नेव मां नित्यं मद्गतेनान्तरात्मना ॥ १५

---

1. क-ख—कुरुष्वेषूप च—इलावर्षेषु 2. अ—इदमर्धं नास्ति

अहिंसासत्यनिरतः क्रोधहर्षविवर्जितः ।
एवं युक्तस्य राजेन्द्र शृणु यत् फलमुत्तमम् ॥ १६

विप्रातिथ्यसहस्रेषु यत् पुण्यं समुदाहृतम् ।
तत् पुण्यं समनुप्राप्य शक्रलोके महीयते ॥ १७

[1]अवतीर्णस्ततः कालाद् इलावर्षे तु जायते ।
तत्र स्थित्वा चिरं कालम् अस्मिन् विप्रो भविष्यति ॥ १८

माघमासं तथा यस्तु वर्तते चैकभक्ततः ।
मदर्चनपरो भूत्वा डम्भक्रोधविवर्जितः ॥ १९

मामिकामपि सावित्रीं सन्ध्यायां तु जपेद्बुधः ॥ १९॥

दत्त्वा तु दक्षिणामन्ते भोजयित्वा द्विजानपि ।
नमस्करोति तान् भक्त्या मद्गतेनान्तरात्मना ॥ २०॥

त्रिकालं स्नानयुक्तस्य तस्य पुण्यफलं शृणु ॥ २१

नीलकण्ठप्रयुक्तेन यानेनाम्बरशोभिना ।
पितृलोकं व्रजेच्छ्रीमान् सेव्यमानोऽप्सरोगणैः ॥ २२

तत्र प्रकामं क्रीडित्वा भद्राश्वेषूपजायते ।
ततश्च्युतश्चतुर्वेदी विप्रो भवति भूतले ॥ २३

यः क्षिपेत् फाल्गुनं मासम् एकभक्तो जितेन्द्रियः ।
नमो ब्रह्मण्यदेवायेत्येतन्मन्त्रं जपेत् सदा ॥ २४

1. क-ख — इदमर्धं नास्ति

पायसं भोजयेद्विप्रान् व्रतान्ते संयतेन्द्रियः ।
मदर्चनपरोऽक्रोधस् तस्य पुण्यफलं शृणु ॥ २५

विमानं सारसैर्युक्तम् आरूढः कामगामि च ।
नक्षत्रलोके रमते नक्षत्रसदृशाकृतिः ॥ २६

ततश्चापि च्युतः कालात् केतुमालेषु जायते ।
तत्र प्रकामं क्रीडित्वा मानुषेषु मुनिर्भवेत् ॥ २७

चैत्रमासं तु यो राजन्नेकभक्तेन वर्तते ।
ब्रह्मचारी तु मद्भक्तस् तस्य पुण्यफलं शृणु ॥ २८

यदग्निहोत्रिणः पुण्यं यथोक्तव्रतचारिणः ।
तत्पुण्यफलमासाद्य चन्द्रलोके महीयते ॥ २९

[1]ततोऽवतीर्णो जायेत वर्षे रमणके पुनः ।
भुक्त्वा कामांस्ततस्तस्मिन्निह राजा भविष्यति ॥ ३०

वैशाखे यस्तु वै मासे एकभक्तेन वर्तते ।
द्विजमग्रासने कृत्वा भुञ्जन् भूमौ च वाग्यतः ॥ ३१

नमो ब्रह्मण्यदेवायेत्यर्चयित्वा दिवाकरम् ।
व्रतान्ते भोजयेद्विप्रांस् तस्य पुण्यफलं शृणु ॥ ३२

फलं यद्विधिवत् प्रोक्तम् अग्निष्टोमातिरात्रयोः ।
तत्पुण्यफलमासाद्य देवलोके महीयते ॥ ३३

---

1. क-ख—अर्धाष्टकं नास्ति

ततो हैमवते वर्षे जायते कालपर्ययात् ।
तत्र प्रकामं क्रीडित्वा विप्रः पश्चाद्भविष्यति ॥ ३४

ज्येष्ठमासं तु यो राजन्नेकभक्तेन वर्तते ।
विप्रमग्रासने कृत्वा भूमौ भुञ्जन् यथाविधि ॥ ३५

नमो ब्रह्मण्यदेवायेत्यर्चयन् मां यथाविधि ।
डम्भानृतविनिर्मुक्तस् तस्य पुण्यफलं शृणु ॥ ३६

चीर्णे चान्द्रायणे सम्यग् यत् पुण्यं समुदाहृतम् ।
तत्पुण्यफलमासाद्य देवलोके महीयते ॥ ३७

अथोत्तरकुरुष्वेव जायते निर्गतस्ततः ।
ततश्चापि च्युतः कालाद् इह लोके द्विजो भवेत् ॥ ३८

आषाढमासं यो राजन्नेकभक्तेन वर्तते ।
ब्रह्मचारी जितक्रोधो मदर्चनपरायणः ॥ ३९

विप्रमग्रासने कृत्वा भूमौ भुञ्जञ्जितेन्द्रियः ।
कृत्वा त्रिषवणस्नानम् अष्टाक्षरविधानतः ॥ ४०

व्रतान्ते भोजयेद्विद्वान् पायसेन युधिष्ठिर ।
गुडोदनेन राजेन्द्र तस्य पुण्यफलं शृणु ॥ ४१

कपिलाशतदानस्य यत् पुण्यं पाण्डुनन्दन ।
तत्पुण्यफलमासाद्य देवलोके महीयते ॥ ४२

ततोऽवतीर्णः कालेन शाकद्वीपे प्रजायते ।

ततश्चापि च्युतः कालाद् इह विप्रो भविष्यति ॥ ४३

श्रावणं यः क्षिपेन्मासम् एकभक्तेन संयतः ।
नमो ब्रह्मण्यदेवायेत्युक्त्वा मामर्चयेत् सदा ॥ ४४
विप्रमग्रासने कृत्वा भूमौ भुञ्जन् यथाविधि ॥ ४४॥

पायसेनार्चयन् विप्रान् जितक्रोधो जितेन्द्रियः ।
लोभमोहविनिर्मुक्तस् तस्य पुण्यफलं शृणु ॥ ४५॥

कपिलादस्य यत् पुण्यं विधिवत् तस्य पाण्डव ।
तत् पुण्यं समनुप्राप्य शक्रलोके महीयते ॥ ४६॥

ततश्चापि च्युतः कालात् कुशद्वीपे प्रजायते ।
तत्र प्रकामं क्रीडित्वा विप्रो भवति मानुषे ॥ ४७॥

यस्तु भाद्रपदं मासम् एकभक्तेन वर्तते ।
ब्रह्मचारी जितक्रोधस् सत्यसन्धो जितेन्द्रियः ॥ ४८॥

विप्रमग्रासने कृत्वा पाकभेदविवर्जितः ।
नमो ब्रह्मण्यदेवायेत्युक्त्वाऽस्य चरणौ स्पृशेत् ॥ ४९॥

तिलान् वाऽपि घृतान् वाऽपि व्रतान्ते दक्षिणां ददत् ।
मद्भक्तस्य नरश्रेष्ठ तस्य पुण्यफलं शृणु ॥ ५०॥

यत् फलं विधिवत् प्रोक्तं राजसूयाश्वमेधयोः ।
तत् पुण्यफलमासाद्य शक्रलोके महीयते ॥ ५१॥

ततश्चापि च्युतः कालाज् जायते धनदालये ।

तत्र प्रकामं क्रीडित्वा राजा भवति मानुषे ॥ ५२॥

यश्चाप्याश्वयुजे मासम् एकभक्तेन वर्तते ॥ ५३

[1]मद्गायत्रीं जपेद्भक्त्या मद्गतेनान्तरात्मना ।
द्विसन्ध्यं वा त्रिसन्ध्यं वा शतमष्टोत्तरं तु वा ॥ ५४

नमो ब्रह्मण्यदेवायेत्यसकृन्मां प्रणम्य च ।
[2]विप्रमग्रासने कृत्वा संयतेन्द्रियमानसः ॥ ५५

व्रतान्ते भोजयेद्विप्रांस् तस्य पुण्यफलं शृणु ॥ ५५॥

अश्वमेधस्य यत् पुण्यं विधिवत् पाण्डुनन्दन ।
तत्पुण्यफलमासाद्य मम लोके महीयते ॥ ५६॥

[3]ततश्चापि च्युतः कालाच् छ्वेतद्वीपे प्रजायते ।
तत्र भुक्त्वा महाभोगान् अत्र विप्रवरो भवेत्* ॥ ५७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

॥ ९२ ॥ अनुगीतापर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

[ अस्मिन्नध्याये ५७॥ श्लोकाः ]

---

1. अ—इदमर्धं नास्ति
2. च—कोश एकस्मिन्नेवेदमर्धं दृश्यते ।
3. अ-ग-च—इदमर्धं नास्ति
* च—नात्राध्यायसमाप्तिर्दृश्यते ।

## ॥ एकोनविंशत्यधिकशततमोऽध्यायः ॥

श्रीकृष्णेन युधिष्ठिरं प्रति एकं संवत्सरं एकभक्तव्रतकरणस्य फल-कथनम् ॥ १ ॥

---

युधिष्ठिरः—

एवं संवत्सरं पूर्णम् एकभक्तेन यः क्षिपेत् ।
तस्य पुण्यफलं यद्वै तन्ममाचक्ष्व केशव ॥ १

श्रीभगवान्—

शृणु पाण्डव सत्यं मे वचनं पुण्यमुत्तमम् ।
यदकृत्वाऽथवा कृत्वा नरः पापैः प्रमुच्यते ॥ २

एकभक्तेन वर्तेत नरस्संवत्सरं तु यः ।
ब्रह्मचारी ह्यधश्शायी जितक्रोधो जितेन्द्रियः ॥ ३

शुचिस्स्नानरतो व्यग्रस् सत्यवागनसूयकः ।
अर्चयन्नेव मां नित्यं मद्गतेनान्तरात्मना ॥ ४

सन्ध्ययोस्तु जपेन्नित्यं मद्गायत्रीं समाहितः ।
नमो ब्रह्मण्यदेवायेत्यसकृन्मां प्रणम्य च ॥ ५

विप्रमग्रासने कृत्वा यावकं भैक्ष्यमेव वा ।
भुक्त्वा तु वाग्यतो भूमावाचान्तस्य द्विजन्मनः ॥ ६
नमोऽस्तु वासुदेवायेत्युक्त्वा तु चरणौ स्पृशेत् ॥ ६॥

मासे मासे समाप्ते तु भोजयित्वा द्विजाञ्शुचीन् ।
संवत्सरे ततः पूर्णे दद्यात्तु व्रतदक्षिणाम् ॥ ७॥

नवनीतमयीं गां वा तिलधेनुमथापि वा ।
विप्रहस्तच्युतैस्तोयैस् सहिरण्यैस्समुक्षितः ॥ ८॥

तस्य पुण्यफलं राजन् कथ्यमानं मया शृणु ॥ ९

दशजन्मकृतं पापं ज्ञानतोऽज्ञानतोऽपि वा ।
तद्विनश्यति तस्याशु नात्र कार्या विचारणा ॥* १०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥
॥ ९२ ॥ अनुगीतापर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥
[ अस्मिन्नध्याये १० श्लोकाः ]

## ॥ विंशत्यधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति केशवादिभगवन्मूर्त्युपास्तिपूर्वकं मार्गशीर्षादिद्वादशद्वादशीव्रताचरणफलकथनम् ॥ १ ॥ युधिष्ठिरेण विस्तरेण कृष्णस्तवनम् ॥ २ ॥ पुनः कृष्णेन युधिष्ठिराय एकादश्युपवासपूर्वकं द्वादश्यां भगवत्पूजायाः फलकथनम् ॥ ३ ॥

युधिष्ठिरः—
सर्वेषामुपवासानां यच्छ्रेयस्सुमहत्फलम् ।
यच्च निश्श्रेयसं लोके तद्भवान् वक्तुमर्हति ॥ १

* अ-क-ख-ग-घ—कोशेषु नास्त्यध्यायसमाप्तिर्दृश्यते ।

श्रीभगवान्—

शृणु राजन् मया पूर्वं यथा गीतं तु नारदे ।
तथा ते कथयिष्यामि मद्भक्ताय युधिष्ठिर ॥ २

यस्तु भक्त्या शुचिर्भूत्वा पञ्चम्यां मे नराधिप ।
उपवासव्रतं कुर्यात् त्रिकालं चार्चयंस्तु माम् ॥ ३
सर्वक्रतुफलं लब्ध्वा मम लोके महीयते ॥ ३॥

युधिष्ठिरः—

भगवन् देवदेवेश पञ्चमी नाम का तव ।
तामहं श्रोतुमिच्छामि कथयस्व ममाच्युत ॥ ४॥

श्रीभगवान्—

पर्वद्वयं च द्वादश्यौ श्रवणं च नराधिप ।
मत्पञ्चमीति विख्याता मत्प्रिया च विशेषतः ॥ ५॥

तस्मात्तु ब्राह्मणश्रेष्ठैर् मन्निवेशितबुद्धिभिः ।
उपवासस्तु कर्तव्यो मत्प्रियार्थं युधिष्ठिर ॥ ६॥

द्वादश्यामेव वा कुर्याद् उपवासमशक्नुवन् ।
तेनाहं परमां प्रीतिं यास्यामि नरपुङ्गव ॥ ७॥

अहोरात्रेण द्वादश्यां मार्गशीर्षेण केशवम् ।
उपोष्य पूजयेद्यो मां सोऽश्वमेधफलं लभेत् ॥ ८॥

द्वादश्यां पुष्यमासे तु नाम्ना नारायणं तु माम् ।

उपोष्य पूजयेद्यो मां वाजपेयफलं लभेत् ॥ ९॥

द्वादश्यां माघमासे तु मामुपोष्य तु माधवम् ।
पूजयेद्यस्समाप्नोति राजसूयफलं नृप ॥ १०॥

द्वादश्यां फाल्गुने मासि गोविन्दाख्यमुपोष्य माम् ।
अर्चयेद्यस्समाप्नोति ह्यतिरात्रफलं नृप ॥ ११॥

द्वादश्यां मासि चैत्रे तु मां विष्णुं समुपोष्य यः ।
पूजयन् फलमाप्नोति पौण्डरीकस्य यत् फलम् ॥ १२॥

द्वादश्यां मासि वैशाखे मधुसूदनसंज्ञितम् ।
उपोष्य पूजयेद्यो मां सोऽग्निष्टोमस्य पाण्डव ॥ १३॥

द्वादश्यां ज्येष्ठमासे तु मामुपोष्य त्रिविक्रमम् ।
अर्चयेद्यस्समाप्नोति गवां मेधफलं नृप ॥ १४॥

आषाढे वामनाख्यं मां द्वादश्यां समुपोष्य यः ।
नरमेधस्य स फलं प्राप्नुयान्नरसत्तमः ॥ १५॥

द्वादश्यां श्रावणे मासि श्रीधराख्यमुपोष्य माम् ।
[1]पूजयेद्यस्समाप्नोति पञ्चयज्ञफलं नृप ॥ १६॥

मासि भाद्रपदे यो मां हृषीकेशाख्यमर्चयेत् ।
उपोष्य स समाप्नोति सौत्रामणिफलं नृप ॥ १७॥

द्वादश्यामाश्वयुङ्मासे पद्मनाभमुपोष्य माम् ।

1. ग—अर्धचतुष्टयं नास्ति

अर्चयेद्यस्समाप्नोति गोसहस्रफलं नृप ॥ १८॥

द्वादश्यां कार्तिके मासि मां दामोदरसंज्ञितम् ।
उपोष्य पूजयेद्यस्तु सर्वक्रतुफलं लभेत् ॥ १९॥

केवलेनोपवासेन द्वादश्यां पाण्डुनन्दन ।
यत् फलं पूर्वमुद्दिष्टं तस्यार्धं लभते फलम् ॥ २०॥

श्रावणेऽप्येवमेवं मां योऽर्चयेद्भक्तिमान् नरः ।
मम सालोक्यमाप्नोति नात्र कार्या विचारणा ॥ २१॥

मासे मासे समभ्यर्च्य क्रमशो मामतन्द्रितः ।
पूर्णे संवत्सरे कुर्यात् पुनस्संवत्सरार्चनम् ॥ २२॥

एवं द्वादशवर्षं यो मद्भक्तो मत्परायणः ।
अविघ्नमर्चयानस्तु मम सालोक्यमाप्नुयात् ॥ २३॥

अर्चयेत् प्रीतिमान् यो मां द्वादश्यां वेदसंहिताम् ।
स पूर्वोक्तफलं राजँल्लभते नात्र संशयः ॥ २४॥

गन्धं पुष्पं फलं तोयं पत्रं वा [1]मूलमेव वा ।
द्वादश्यां मम यो दद्यात् ततो नान्योऽस्ति मत्प्रियः ॥ २५॥

एतेन विधिना सर्वे देवाश्शक्रपुरोगमाः ।
मद्भक्ता नरशार्दूल स्वर्गभोगांस्तु भुञ्जते ॥ २६॥

वैशम्पायनः—

एवं वदति देवेशे केशवे पाण्डुनन्दनः ।

1. अ-क-ख-ब—फलमेव वा । ग—जलमेव वा ।

कृताञ्जलिपुटस्स्तोत्रम् इदं भक्त्याऽभ्युवाच ह ॥　२७॥

युधिष्ठिरः—

सर्वलोकेश देवेश हृषीकेश नमोऽस्तु ते ।
सहस्रशिरसे तुभ्यं सहस्राक्ष नमोऽस्तु ते ॥　२८॥

[1]त्रयीमय त्रयीनाथ त्रयीस्तुत नमो नमः ।
यज्ञात्मन् यज्ञसम्भूत यज्ञनाथ नमो नमः ॥　२९॥

चतुर्मूर्ते चतुर्बाहो चतुर्व्यूह नमो नमः ।
लोकात्मँल्लोककृन्नाथ लोकावास नमो नमः ॥　३०॥

सृष्टिसंहारकर्त्रे ते नरसिंह नमो नमः ।
[2]भक्तप्रिय नमस्तेऽस्तु भक्तवत्सल ते नमः ॥　३१॥

ब्रह्मावास नमस्तेऽस्तु ब्रह्मनाथ नमो नमः ॥　३२

रुद्ररूप नमस्तेऽस्तु [3]रुद्रकर्मरताय ते ।
पञ्चयज्ञ नमस्तेऽस्तु सर्वयज्ञ नमो नमः ॥　३३

[4]सृष्टिसंहारकर्त्रे ते रुद्रप्रिय नमोऽस्तु ते ।
कृष्ण प्रिय नमस्तेऽस्तु कृष्ण नाथ नमो नमः ॥　३४

योगावास नमस्तेऽस्तु योगिनाथ नमो नमः ॥　३४॥

---

1. अ-क-ख-घ-च—अर्धचतुष्टयं नास्ति
2. क-ख-घ—नास्तीदमर्धम्
3. क-ख—रुद्ररूपधराय च।
4. क-ख-ग-घ-च—नास्तीदमर्धम्।

हयवक्त्र नमस्तेऽस्तु चक्रपाणे नमो नमः ।
पञ्चभूत नमस्तेऽस्तु पञ्चायुध नमो नमः ॥ ३५॥

वैशम्पायनः—

भक्तिगद्गदया वाचा स्तुवत्येवं युधिष्ठिरे ।
गृहीत्वा केशवो हस्ते प्रीतात्मा तं न्यवारयत् ॥ ३६॥

निवार्य च पुनर्वाचा भक्तिनम्रं युधिष्ठिरम् ।
वक्तुमेव नरश्रेष्ठ धर्मपुत्रं प्रचक्रमे ॥ ३७॥

श्रीभगवान्—

अन्यवत् किमिदं राजन् मां स्तौषि नरपुङ्गव ।
तिष्ठ पृच्छ यथापूर्वं धर्मानेव युधिष्ठिर ॥ ३८॥

युधिष्ठिरः—

भगवंस्त्वत्प्रसादं तु स्मृत्वा स्मृत्वा पुनः पुनः ।
न शान्तिरस्ति देवेश नृत्यतीव च मे मनः ॥ ३९॥

इदं च मम सम्प्रश्नं वक्तुमर्हसि माधव ।
कृष्णपक्षे तु द्वादश्याम् अर्चनीयः कथं भवान् ॥ ४०॥

श्रीभगवान्—

शृणु राजन् यथातत्त्वं तत् पूर्वं कथयामि ते ।
परमं कृष्णद्वादश्याम् अर्चनायां फलं मम ॥ ४१॥

एकादश्यामुपोष्याथ द्वादश्यामर्चयेत्तु माम् ।
विप्रानपि यथालाभं भोजयेद्भक्तिमान् नरः ॥ ४२॥

स गच्छेद्दक्षिणामूर्तिं मां वा नात्र विचारणा ।
चन्द्रसालोक्यमथवा ग्रहनक्षत्रपूजितः ॥ ४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥
॥ ९२ ॥ अनुगीतापर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥
[ अस्मिन्नध्याये ४३॥ श्लोकाः ]

---

## ॥ एकविंशत्यधिकशततमोऽध्यायः ॥

---

कृष्णेन युधिष्ठिरं प्रति विषुवाख्यपुण्यकालस्य महिमानुवर्णनपूर्वकं तत्र दानादिप्रशंसनम् ॥ १ ॥ तथा गायत्रीजपमाहात्म्यकथनम् ॥ २ ॥ अश्वत्थमाहात्म्यकथनम् ॥ ३ ॥ तथा नानाधर्मकथनपूर्वकं शिंशुमाराकृतिनिरूपणम् ॥ ४ ॥ पञ्चगव्यविधानकथनम् ॥ ५ ॥

---

वैशम्पायनः—

केशवेनैवमाख्याते धर्मपुत्रः पुनः प्रभुम् ।
पप्रच्छ दानकालस्य विशेषं च विधिं नृप ॥ १

युधिष्ठिरः—

देव किं फलमाख्यातं दानस्य विषुवेषु च ।
सूर्येन्दूपप्लवे चैव दत्ते दाने च यत् फलम् ॥ २

श्रीभगवान्—

शृणुष्व राजन् विषुवे सोमार्कग्रहणेषु च ।
व्यतीपातेऽयने चैव दानं स्यादक्षयं नृप ॥ ३

राजन् नयनयोर्मध्यं विषुवं सम्प्रचक्षते ॥ ३॥
समे रात्रिदिने तत्र सन्ध्यायां विषुवे नृप ।
ब्रह्माऽहं शङ्करश्चापि तिष्ठामस्सहितास्सकृत् ॥ ४॥
क्रियाकारणकार्याणाम् एकीभावत्वकारणात् ॥ ५
अस्माकमेकीभूतानां निष्कलं तत्पदं परम् ।
तन्मुहूर्तं परं पुण्यं राजन् विषुवसंज्ञितम् ॥ ६
तदेवाद्यक्षरं ब्रह्म परं ब्रह्मेति कीर्तितम् ॥ ६॥
तस्मिन् मुहूर्ते सर्वेऽपि चिन्तयन्तः परं पदम् ॥ ७
देवाश्च पितरो रुद्राः वसवश्चाश्विनौ तथा ।
साध्याश्च विश्वे गन्धर्वास् सिद्धा ब्रह्मर्षयस्तथा ॥ ८
[1]सोमादयो ग्रहाश्चैव सरितस्सागरास्तथा ।
मरुतोऽप्सरसो नागा यक्षराक्षसगुह्यकाः ॥ ९
एते चान्ये च राजेन्द्र विषुवे संयतेन्द्रियाः ।
सोपवासाः प्रयत्नेन भवन्ति ध्यानतत्पराः ॥ १०
अन्नं गावस्तिलान् भूमिं कन्यादानं तथैव च ।
गृहमायतनं धान्यं वाहनं शयनं तथा ॥ ११
यच्चान्यच्च मया प्रोक्तं तत् प्रयच्छ युधिष्ठिर ॥ ११॥
दीयते विषुवेष्वेवं श्रोत्रियेभ्यो विशेषतः ।

---

1. अ—नास्तीदमर्धम् ।

तस्य दानस्य कौन्तेय क्षयो नैवोपपद्यते ॥ १२॥
वर्धतेऽहरहः पुण्यं तद्दानं कोटिसम्मितम् ॥ १३
विषुवे स्नपनं यस्तु मम कुर्याद्धरस्य वा ।
अर्चनां च यथान्यायं तस्य पुण्यफलं शृणु ॥ १४
दशजन्मकृतं पापं तस्य सद्यो विनश्यति ।
दशानामश्वमेधानाम् इष्टानां लभते फलम् ॥ १५
विमानं दिव्यमारूढः कामरूपी यथासुखम् ।
स याति मामकं लोकं रुद्रलोकमथापि वा ॥ १६
तत्रस्थैर्देवगन्धर्वैर् गीयमानो यथासुखम् ।
दिव्यवर्षसहस्राणि कोटिमेकं तु मोदते ॥ १७
ततश्चापि च्युतः कालाद् इह लोके द्विजोत्तमः ।
चतुर्णामपि वेदानां पारगो ब्रह्मविद्भवेत् ॥ १८
चन्द्रसूर्यग्रहे वाऽपि मम वा शङ्करस्य वा ।
गायत्रीं मामिकां वाऽपि जपेद्यश्शङ्करस्य वा ॥ १९
शङ्खतूर्यनिनादैश्च कांस्यघण्टास्वनैरपि ।
कारयेत्तु ध्वनिं भक्त्या तस्य पुण्यफलं शृणु ॥ २०
गान्धर्वैर्होमजप्यैश्च शब्दैरुत्कृष्टनादिभिः ।
दुर्बलोऽपि भवेद्राहुस् सोमश्च बलवान् भवेत् ॥ २१
सूर्येन्दूपप्लवे चैव श्रोत्रियेभ्यः प्रदीयते ।

तत् सहस्रसमं भूत्वा दातारमुपतिष्ठति ॥ २२

महापातकयुक्तोऽपि यद्यपि स्यान्नरो नृप ।
निर्लेपस्तत्क्षणादेव तेन दानेन जायते ॥ २३

चन्द्रसूर्यप्रकाशेन विमानेन विराजता ।
याति सोमपुरं रम्यं सेव्यमानोऽप्सरोगणैः ॥ २४

यावदृक्षाणि तिष्ठन्ति गगने शशिना सह ।
तावत्कालं स राजेन्द्र सोमलोके महीयते ॥ २५

ततश्चापि च्युतः कालाद् इह लोके युधिष्ठिर ।
वेदवेदाङ्गविद्विप्रः कोटीधनपतिर्भवेत् ॥ २६

युधिष्ठिरः—

भगवंस्तव गायत्री जप्यते च कथं नृभिः ।
किं वा तस्य फलं देव ममाचक्ष्व सुरेश्वर ॥ २७

श्रीभगवान्—

द्वादश्यां विषुवे चैव चन्द्रसूर्यग्रहे तथा ।
अयने श्रवणे चैव व्यतीपाते तथैव च ॥ २८

अश्वत्थदर्शने चैव तथा मद्दर्शनेऽपि च ।
जप्त्वा तु मम गायत्रीम् अथवाऽष्टाक्षरं नृप । २९

आर्जितं दुष्कृतं तस्य नाशयेन्नात्र संशयः ॥ २९॥

युधिष्ठिरः—

अश्वत्थदर्शनं चैव किं त्वद्दर्शनसम्मितम् ।

एतत् कथय देवेश परं कौतूहलं हि मे ॥ ३०॥

श्रीभगवान्—

अहमश्वत्थरूपेण पालयामि जगत्त्रयम् ।
अश्वत्थो न स्थितो यत्र नाहं तत्र प्रतिष्ठितः ॥ ३१॥

यत्राहं संस्थितो राजन्नश्वत्थश्चापि तत्र वै ।
यस्त्वेनमर्चयेद्भक्त्या स मां साक्षात् समर्चति ॥ ३२॥

यस्त्वेनं प्रहरेत् कोपान्मामेव प्रहरेत्तु सः ।
तस्मात् प्रदक्षिणं कुर्यान्न च्छिन्द्यादेनमन्वहम् ॥ ३३॥

व्रतस्य पारणं तीर्थं सर्वतीर्थेषु पाण्डव ।
[1]देवशुश्रूषणं तीर्थं गुरुशुश्रूषणं तथा ॥ ३४॥

[2]पुत्रस्य पारणं तीर्थम् आर्जवं तीर्थमुच्यते ॥ ३५

[3]देवशुश्रूषणं तीर्थम् अर्थं ज्ञानस्य पारणम् ।
[4]नराणां तोषणं तीर्थं गार्हस्थ्यं तीर्थमुच्यते ॥ ३६

ब्रह्मचर्यं परं तीर्थं त्रेताग्निस्तीर्थमुच्यते ॥ ३६॥

मूलधर्मं तु विज्ञाय मनस्तत्रावधार्यताम् ।
गच्छ तीर्थानि कौन्तेय धर्मो धर्मेण वर्धते ॥ ३७॥

द्विविधं तीर्थमित्याहुस् स्थावरं जङ्गमं तथा ।

---

1. घ—इतः सार्धं श्लोकषट्कं नास्ति
2. ग—इदमर्धं नास्ति
3. क-ख-च—इदं अर्धद्वयमपि नास्ति　　4. ग—दाराणां ।

स्थावराज्जङ्गमं श्रेष्ठं ततो ज्ञानपरिग्रहः ॥ ३८॥

कर्मणा हि विशुद्धस्य पुरुषस्येह भारत ।
हृदये सर्वतीर्थानि तीर्थभूतस्स उच्यते ॥ ३९॥

गुरुतीर्थं परं ज्ञानम् अतस्तीर्थं न विद्यते ।
ज्ञानं तीर्थं तपस्तीर्थं ब्रह्म तीर्थं सनातनम् ॥ ४०॥

क्षमा तु परमं तीर्थं सर्वतीर्थेषु पाण्डव ।
क्षमावतामयं लोकः परश्चैव क्षमावताम् ॥ ४१॥

मानितोऽमानितो वाऽपि पूजितोऽपूजितोपि वा ।
आक्रुष्टस्तर्जितो वाऽपि क्षमावांस्तीर्थमुच्यते ॥ ४२॥

क्षमा यशः क्षमा दानं क्षमा सत्यं क्षमा तपः ।
क्षमाऽहिंसा क्षमा धर्मः क्षमा चेन्द्रियनिग्रहः ॥ ४३॥

क्षमा दया क्षमा यज्ञः क्षमयैव धृतं जगत् ।
[1]क्षमावान् ब्राह्मणो देवः क्षमावान् ब्राह्मणो वरः ॥ ४४॥

क्षमावान् प्राप्नुयात् स्वर्गं क्षमावान् प्राप्नुयाद्यशः ।
क्षमावान् प्राप्नुयान्मोक्षं तस्मात् तीर्थं स उच्यते ॥ ४५॥

आत्मा नदी भारतपुण्यतीर्थम्
आत्मा तीर्थं सर्वतीर्थप्रधानम् ।
आत्मा यज्ञस्सर्वमात्मन्यथो वै
स्वर्गो मोक्षस्सर्वमात्मन्यधीनम् ॥ ४६॥

1. क-ख-ग-च—इदमर्धं नास्ति

आचारवस्त्रान्तरक्षालितेन
सत्यप्रसन्नक्षमशीतलेन ।
ज्ञानाम्बुना स्नाति हि यो हि नित्यं
किं तस्य भूयस्सलिलेन कृत्यम् ॥ ४७॥

युधिष्ठिरः—
भगवन् सर्वपापघ्नं प्रायश्चित्तमदुष्करम् ।
त्वद्भक्तस्य सुरश्रेष्ठ मम वक्तुं त्वमर्हसि ॥ ४८॥

श्रीभगवान्—
रहस्यमिदमत्यर्थम् अश्राव्यं पापकर्मणाम् ।
अधार्मिकाणामश्राव्यं प्रायश्चित्तं ब्रवीमि ते ॥ ४९॥

पावनं ब्राह्मणं दृष्ट्वा मद्गतेनान्तरात्मना ।
नमो ब्रह्मण्यदेवायेत्यभिवादनमाचरेत् ॥ ५०॥

प्रदक्षिणं च यः कुर्यात् पुनरष्टाक्षरेण तु ।
तेन तुष्टो नरश्रेष्ठ तत् पापं क्षपयाम्यहम् ॥ ५१॥

यत्र कृष्टां वराहस्य मृत्तिकां शिरसा वहन् ।
प्राणायामशतं कृत्वा नरः पापैः प्रमुच्यते ॥ ५२॥

दक्षिणावर्तशङ्खाद्वा कपिलाशृङ्गतोऽपि वा ।
प्राक्स्रोतसं नदीं गत्वा ममायतनसन्निधौ ॥ ५३॥

सलिलेन तु यस्स्नायात् सकृदेव रविग्रहे ।
तस्य यत् सञ्चितं पापं तत्क्षणादेव नश्यति ॥ ५४॥

मस्तकान्निस्सृतैस्तोयैः कपिलाया युधिष्ठिर ।
गोमूत्रेणापि यस्स्नायाद् रोहिण्यां मम वा दिने ॥ ५५॥
विप्रपादच्युतैर्वाऽपि तोयैः पापं प्रणश्यति ॥ ५६

नमस्येद्यस्तु मद्भक्त्या शिंशुमारं प्रजापतिम् ।
चतुर्दशाङ्गसंयुक्तं तस्य पापं प्रणश्यति ॥ ५७

ततश्चतुर्दशाङ्गानि शृणु तस्य नराधिप ।
शिरो धर्मो हनुर्ब्रह्मा पुच्छावुत्तरदक्षिणौ ॥ ५८

हृदयं तु भवेद्विष्णुर् हस्तौ स्यातां तथाऽश्विनौ ।
अत्रिर्मध्यं भवेद्राजँल्लिङ्गं संवत्सरं भवेत् ॥ ५९

मित्रावरुणकौ पादौ पुच्छमूलं हुताशनः ।
ततः पश्चाद्भवेदिन्द्रस् ततः पश्चात् प्रजापतिः ॥ ६०

अभयं च ततः पश्चात् स एव ध्रुवसंज्ञितः ।
एतान्यङ्गानि सर्वाणि शिंशुमारप्रजापतेः ॥ ६१

पिबेत्तु पञ्चगव्यं यः पौर्णमास्यामुपोष्य तु ।
तस्य नश्यति यत् पापं तत् पापं पूर्वसञ्चितम् ॥ ६२

तथैव ब्रह्मकूर्चं तु समन्त्रं तु पृथक् पृथक् ।
मासि मासि पिबेद्यस्तु तस्य पापं प्रणश्यति ॥ ६३

पात्रं च ब्रह्मकूर्चं च शृणु मन्त्रं च भारत ।
पालाशं पद्मपत्रं च ताम्रं वाऽथ हिरण्मयम् ॥ ६४

सादयित्वा तु गृह्णीयात् तत्तु पात्रमुदाहृतम् ॥ ६४॥

गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राविण्णेति वै दधि ॥ ६५॥

तेजोऽसि शुक्रमित्याज्यं देवस्य त्वेति कुशोदकम् ।
आपोहिष्ठेति सङ्गृह्य यवपूर्वं यथाविधि ॥ ६६॥

ब्रह्मणे च यथा हुत्वा समिद्धे च हुताशने ।
आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु ॥ ६७॥

उद्धृत्य प्रणवेनैव पिबेत्तु प्रणवेन तु ।
महताऽपि स पापेन त्वचेवाहिर्विमुच्यते ॥ ६८॥

भद्रं त इति यः पादं पठेदृक्संहितां तदा ।
अन्तर्जले वाऽभ्यादित्ये तस्य पापं प्रणश्यति ॥ ६९॥

मम सूक्तं जपेद्यस्तु नित्यं मद्गतमानसः ।
न स पापेन लिप्येत पद्मपत्रमिवाम्भसा ॥ ७०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आश्वमेधिकपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

॥ ९२ ॥ अनुगीतापर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

[ अस्मिन्नध्याये ७०॥ श्लोकाः ]

---

## ॥ द्वाविंशत्यधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति भगवद्भक्तिसौशील्याद्यभावे ब्राह्मणानामपि अग्निहोत्रस्वाध्यायाध्ययनादिसत्कर्मणामपि वैकल्यस्य शूद्राणामपि भक्त्यादिमतां स्वोचितकिञ्चित्कर्मणामपि साफल्यस्य च कथनम् ॥ १ ॥

युधिष्ठिरः—

कीदृशा ब्राह्मणाः पुण्या भावशुद्धास्सुरेश्वर ।
यत् कर्म सफलं नेति कथयस्व ममानघ ॥ १

श्रीभगवान्—

शृणु पाण्डव तत् सर्वं ब्राह्मणानां यथाक्रमम् ।
सफलं निष्फलं चेति तेषां कर्म ब्रवीमि ते ॥ २

त्रिदण्डधारणं मौनं जटाधारणमुण्डनम् ।
वल्कलाजिनसंवासो व्रतचर्याऽभिषेचनम् ॥ ३

अग्निहोत्रं वने वासस् स्वाध्यायो दानसत्क्रिया ।
सर्वाण्येतानि वै मिथ्या यदि भावो न निर्मलः ॥ ४

अग्निहोत्रं वृथा राजन् वृथा वेदास्तथैव च ।
शीलेन देवास्तुष्यन्ति श्रुतयस्तत्र कारणम् ॥ ५

क्षान्तं दान्तं जितक्रोधं जितात्मानं जितेन्द्रियम् ।
तमग्र्यं ब्राह्मणं मन्ये शेषाश्शूद्रा इति स्मृताः ॥ ६

अग्निहोत्रव्रतपरान् स्वाध्यायनिरतान् शुचीन् ।

उपवासरतान् दान्तांस् तान् देवा ब्राह्मणान् विदुः ॥ ७

न जातिः पूज्यते राजन् गुणाः कल्याणकारणम् ।
चण्डालमपि वृत्तस्थं तं देवा [1]ब्राह्मणं विदुः ॥ ८

मनश्शौचं कर्मशौचं कुलशौचं च भारत ।
शरीरशौचं वाक्छौचं शौचं पञ्चविधं स्मृतम् ॥ ९

पञ्चस्वेतेषु शौचेषु हृदि शौचं विशिष्यते ।
हृदयस्य च शौचेन स्वर्गं गच्छन्ति मानवाः ॥ १०

अग्निहोत्रपरिभ्रष्टः प्रसक्तः क्रयविक्रये ।
वर्णसङ्करकर्ता च ब्राह्मणो वृषलैस्समः ॥ ११

यस्य वेदश्रुतिर्नष्टा कर्षकश्चापि यो द्विजः ।
विकर्मसेवी कौन्तेय स वै वृषल उच्यते ॥ १२

वृषो हि धर्मो विज्ञेयस् तस्य यः कुरुते लयम् ।
वृषलं तं विदुर्देवा निकृष्टं श्वपचादपि ॥ १३

स्तुतिभिर्ब्रह्मपूर्वाभिर् यश्शूद्रं स्तौति मानवः ।
न तु मां स्तौति पापात्मा स तु चण्डाल एव च ॥ १४

श्वदृतौ तु यथा क्षीरं ब्रह्म वै वृषले तथा ।
दुष्टतामेति तत् सर्वं शुना लीढं हविर्यथा ॥ १५

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।

---

1. अ-क-ख-ब-च—उत्तमं ।

धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥ १६

यान्युक्तानि मया सम्यग् विद्यास्थानानि भारत ।
उत्पन्नानि पवित्राणि पावनार्थं तथैव च ॥ १७

तस्मात् तानि न शूद्रस्य स्प्रष्टव्यानि युधिष्ठिर ।
सर्वं च शूद्रसंस्पृष्टम् अपवित्रं न संशयः ॥ १८

लोके त्रीण्यपवित्राणि पञ्चामेध्यानि भारत ।
श्वा च शूद्रश्श्वपाकश्च अपवित्राणि पाण्डव ॥ १९

देवलः कुक्कुटो यूपो ह्युदक्या वृषलीपतिः ।
पञ्चैते स्युरमेध्याश्च स्प्रष्टव्या न कदाचन ॥ २०

स्पृष्ट्वैतानष्ट वै विप्रस् सचेलो जलमाविशेत् ॥ २०॥

[1]मद्भक्तान्शूद्रसामान्याद् अवमन्यन्ति ये नराः ।
नरकेष्वेव तिष्ठन्ति वर्षकोटिं नराधमाः ॥ २१॥

चण्डालमपि मद्भक्तं नावमन्येत बुद्धिमान् ।
अवमत्य पतन्त्येव नरके रौरवे नराः ॥ २२॥

मम मद्भक्तभक्तेषु प्रीतिरभ्याधिका नृप ।
तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः ॥ २३॥

कीटपक्षिमृगाणां च मयि सन्न्यस्तचेतसाम् ।
ऊर्ध्वामेव गतिं विद्धि किं पुनर्ज्ञानिनां नृणाम् ॥ २४॥

---

1. ख—मद्भक्तं शूद्रमन्यं वा अवमन्यन्ति ।
क—मद्भक्तान् शूद्रचण्डालान् अवमन्यन्ति ।

पत्रं वाऽप्यथवा पुष्पं फलं वाऽप्यप एव वा ।
[1]ददाति मम शूद्रोऽपि शिरसा धारयामि तत् ॥ २५॥
विप्रानेवार्चयेद्भक्त्या शूद्रप्रायांश्च मत्प्रियान् ।
तेषां तेनैव रूपेण पूजां गृह्णामि भारत ॥ २६॥
वेदोक्तेनैव मार्गेण सर्वभूतहृदि स्थितम् ।
मामर्चयन्ति ये विप्रा मत्सायुज्यं व्रजन्ति ते॥ २७॥
ब्राह्मणानां हितायैव प्रादुर्भावः कृतो मया ।
प्रादुर्भावाकृतिः काचिद् अर्चनीया युधिष्ठिर ॥ २८॥
आसामन्यतमां मूर्तिं यो मद्भक्त्या समर्चति ।
तेनैव परितुष्टोऽहं भविष्यामि न संशयः ॥ २९॥
मृदा च मणिरत्नैश्च ताम्रेण रजतेन वा ।
[2]कृत्वा प्रतिकृतिं कुर्याद् अर्चनां काञ्चनेन वा ॥ ३०॥
पुण्यं दशगुणं विद्याद् एतेषामुत्तरोत्तरम् ॥ ३१
जयकामोऽर्चयेद्राजा विद्याकामो द्विजोत्तमः ।
वैश्यो वा धनकामो हि शूद्रः पुण्यं फलं स्त्रियः ॥ ३२
सर्वकामास्त्रियो वाऽपि सर्वान् कामानवाप्नुयुः ॥ ३२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥
॥ ९२ ॥ अनुगीतापर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥
[ अस्मिन्नध्याये ३२॥ श्लोकाः ]

---

1. क-ख—इदमर्धं नास्ति    2. ग—इदमर्धं नास्ति

## ॥ त्रयोविंशत्यधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रत्यश्वत्थगोब्राह्मणमहिमप्रशंसनपूर्वकं ब्राह्मण्यभ्रंशकरदुष्कर्मकथनम् ॥ १ ॥

युधिष्ठिरः—

कीदृशानां तु शूद्राणां नानुगृह्णासि चार्चनम् ।
उद्वेगस्तव कस्माद्धि तन्मे ब्रूहि सुरेश्वर ॥ १

श्रीभगवान्—

अव्रतेनाप्यभक्तेन स्पृष्टां शूद्रेण चार्चनाम् ।
तां वर्जयामि राजेन्द्र श्वपाकविहितामिव ॥ २

अहं च शङ्करश्चापि गावो विप्रास्तथैव च ।
अश्वत्थोऽमररूपं च त्रयमेतद्युधिष्ठिर ॥ ३

एतत् त्रयं हि मद्भक्तो नावमन्येत कर्हिचित् ।
अवमानितमेतत्तु दहत्यासप्तमं कुलम् ॥ ४

अश्वत्थो ब्राह्मणा गावो मन्मयास्तारयन्ति हि ।
तस्मादेतत् प्रयत्नेन त्रयं पूजय पाण्डव ॥ ५

युधिष्ठिरः—

ब्राह्मणेनैव देहेन शूद्रत्वं कथमाप्नुयात् ।
ब्रह्म वा नश्यति कथं वक्तुं देव त्वमर्हसि ॥ ६

श्रीभगवान्—

कूपस्नानं तु यो विप्रः कुर्याद्द्वादशवार्षिकम् ।
स तेनैव शरीरेण शूद्रत्वं यात्यसंशयः ॥ ७

यस्तु राजाश्रयेणैव जीवेद्द्वादशवार्षिकम् ।
स शूद्रत्वं व्रजेद्विप्रो वेदानां पारगोऽपि सन् ॥ ८

पत्तने नगरे वाऽपि यो द्वादश समा वसेत् ।
स शूद्रत्वं व्रजेद्विप्रो नात्र कार्या विचारणा ॥ ९

उत्पादयति यः पुत्रं शूद्रायां कामतो द्विजः ।
[1]तस्य कायगतं ब्रह्म सद्य एव विनश्यति ॥ १०

[2]मद्यपस्त्रीमुखं मोहाद् आस्वादयति यो द्विजः ।
तस्य कायगतं ब्रह्म सद्य एव विनश्यति ॥ ११

यस्सोमलतिकां विप्रः केवलं भक्षयेद्वृथा ।
तस्य कायगतं ब्रह्म सद्य एव विनश्यति ॥ १२

[3]मैथुनं कुरुते यस्तु जिह्वायां ब्राह्मणो नृप ।
तस्य कायगतं ब्रह्म सद्य एव विनश्यति ॥ १३

विप्रत्वं दुर्लभं प्राप्य दुर्मार्गैरेवमादिभिः ।
विनाशयन्ति ये तत्तु ताञ्शोचामि युधिष्ठिर ॥ १४

---

1. क—इदमर्धं नास्ति
2. अ—अर्धषट्कं नास्ति ; 3. च—अर्धद्वयं नास्ति

तस्मात् सर्वप्रयत्नेन मत्प्रियो यो युधिष्ठिर ।
जातिभ्रंशकरं कर्म न कुर्यादीदृशं द्विजः ॥ १५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्वमेधिकपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥
॥ ९२ ॥ अनुगीतापर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥
[ अस्मिन्नध्याये १५ श्लोकाः ]

---

## ॥ चतुर्विंशत्यधिकशततमोऽध्यायः ॥

---

कृष्णेन युधिष्ठिरं प्रति पालाशविधिप्रकारकथनम् ॥ १ ॥ तथा तीर्थाटनासमर्थानां तत्प्रतिनिधितीर्थानुवर्णनम् ॥ २ ॥ तथा भगवद्भक्तलक्षणकथनपूर्वकं तत्प्रशंसनम् ॥ ३ ॥ तथा स्वस्य सर्वोत्तमत्वकथनपूर्वकं स्वोक्तधर्मश्रवणस्य फलकथनम् ॥ ४ ॥ ततो युधिष्ठिराद्यामन्त्रणपूर्वकं दारुकोपनीतरथारोहणेन द्वारकां प्रति गमनम् ॥ ५ ॥

---

युधिष्ठिरः—

देशान्तरगते विप्रे संयुक्ते कालधर्मणा ।
शरीरनाशे सम्प्राप्ते कथं प्रेतविकल्पना ॥ १

श्रीभगवान्—

श्रूयतामाहिताग्नेस्तु तथाभूतस्य संस्क्रिया ॥ १॥

पालाशवृन्तैः प्रतिमा कर्तव्या कल्पचोदिता ।
त्रीणि षष्टिशतान्याहुर् अस्थीन्यस्य नराधिप ॥ २॥
तेषां विकल्पना कार्या यथाशास्त्रविनिश्चयम् ॥ ३

अशीत्यर्धं शिरसि च ग्रीवायां दश एव च ।
बाह्वोश्चापि शतं दद्याद् अङ्गुलीषु पुनर्दश ॥　　४

उरसि त्रिंशतं दद्याज् जठरे चापि विंशतिः ।
वृषणे द्वादशार्धं तु शिश्ने चाष्टार्धमेव च ॥　　५

दद्यात्तु शतमूर्वोस्तु षष्ट्यर्धं जानुजङ्घयोः ।
दश दद्याच्चरणयोर् एषा प्रेतस्य निष्कृतिः ॥　　६

युधिष्ठिरः—
विशेषतीर्थं सर्वेषाम् अशक्तानामनुग्रहात् ।
भक्तानां तारणार्थं वै वक्तुमर्हसि धर्मतः ॥　　७

श्रीभगवान्—
प्रवरं सर्वतीर्थानां सत्यं गायन्ति सामगाः ।
सत्यस्य वचनं तीर्थम् अहिंसा तीर्थमुच्यते ॥　　८

तपस्तीर्थं दया तीर्थं शीलं तीर्थं युधिष्ठिर ।
अल्पसन्तोषणं तीर्थं नारी तीर्थं पतिव्रता ॥　　९

सन्तुष्टो ब्राह्मणस्तीर्थं ज्ञानं वा तीर्थमुच्यते ।
मद्भक्तस्सततं तीर्थं शङ्करस्य विशेषतः ॥　　१०

यतयस्तीर्थमित्येवं विद्वांसस्तीर्थमुच्यते ।
शरण्यपुरुषस्तीर्थम् अभयं तीर्थमुच्यते ॥　　११

[1]विद्याविनीतकस्तीर्थं धर्मवक्ता विशेषतः ॥　　११॥

---

1. च—कोश एकस्मिन्नेवेदमर्धं दृश्यते ।

त्रैलोक्येऽस्मिन् निरुद्विग्नो न बिभेमि कुतश्चन ।
न दिवा यदि वा रात्रावुद्वेगश्शूद्रलङ्घनात् ॥ १२॥

न भयं देवदैत्येभ्यो रक्षोभ्यश्चैव मे नृप ।
शूद्रवक्त्राच्च्युतं ब्रह्म भयदं मम सुव्रत ॥ १३॥

तस्मात् सप्रणवं शूद्रो मन्त्रामापि न कीर्तयेत् ।
प्रणवं हि परं लोके ब्रह्म ब्रह्मविदो विदुः ॥ १४॥

द्विजशुश्रूषणं धर्मश्शूद्राणां भक्तितो मयि ।
तेन गच्छन्ति ते स्वर्गं चिन्तयन्तो हि मां सदा ॥ १५॥

द्विजशुश्रूषया शूद्रः परं श्रेयोऽधिगच्छति ।
द्विजशुश्रूषणादन्यन्नास्ति शूद्रस्य निष्कृतिः ॥ १६॥

रागो द्वेषश्च मोहश्च पारुष्यं चानृशंसता ।
शाठ्यं च दीर्घवैरित्वम् अतिमानमनार्जवम् ॥ १७॥

अनृतं चापवादश्च पैशुन्यमतिलोभता ।
[1]हिंसा स्तेयो मृषावादो वञ्चना द्वेषलोभता ॥ १८॥

अबुद्धिता च नास्तिक्यं भयमालस्यमेव च ।
अशौचं चाकृतज्ञत्वं डम्भता स्तम्भ एव च ॥ १९॥

निकृतिश्चाप्यविज्ञानं जातके शूद्रमाविशेत् ॥ २०

दृष्ट्वा पितामहश्शूद्रम् अभिभूतं तु तामसैः ।

---

1. ख—इदमर्धं नास्ति

द्विजशुश्रूषणं धर्मं शूद्राणां तु प्रयुक्तवान् ॥ २१

नश्यन्ति तामसा भावाश् शूद्रस्य द्विजभक्तितः ॥ २१॥

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतं मूर्ध्ना गृह्णामि शूद्रतः ॥ २२॥

अन्त्यजो वाऽपि यः कश्चित् सर्वपापसमन्वितः ।
यदि मां सततं ध्यायेत् सर्वपापैः प्रमुच्यते ॥ २३॥

विद्याविनयसम्पन्ना ब्राह्मणा वेदपारगाः ।
मयि भक्तिं न कुर्वन्ति चण्डालसदृशा हि ते ॥ २४॥

वृथा दत्तं वृथा जप्तं वृथा चेष्टं वृथा हुतम् ।
वृथाऽऽतिथ्यं च तत् तस्य यो न भक्तो मम द्विजः ॥ २५॥

यत् कृतं च हुतं चापि यदिष्टं दत्तमेव च ।
अभक्तिमत्कृतं सर्वं राक्षसा एव भुञ्जते ॥ २६॥

स्थावरे जङ्गमे वाऽपि सर्वभूतेषु पाण्डव ।
समत्वेन यदा कुर्यान्मद्भक्तो मित्रशत्रुषु ॥ २७॥

आनृशंस्यमहिंसा च दमस्सत्यं तथाऽऽर्जवम् ।
अद्रोहश्चैव भूतानां मद्व्रतानां व्रतं नृप ॥ २८॥

नम इत्येव यो ब्रूयान्मद्भक्तं श्रद्धयाऽन्वितः ।
तस्याक्षयो भवेल्लोकश् श्वपाकस्यापि पाण्डव ॥ २९॥

किं पुनर्ये यजन्ते मां [1]याजका विधिपूर्वकम् ।
मद्भक्ता मद्गतप्राणाः कथयन्तश्च मां सदा ॥ ३०॥
[2]बहुवर्षसहस्राणि तपस्तप्स्यति यो नरः ।
नासौ पदमवाप्नोति मद्भक्तैर्यदवाप्यते ॥ ३१॥
मामेव तस्माद्राजेन्द्र ध्याहि नित्यमतन्द्रितः ।
अवाप्स्यसि ततस्सिद्धिं द्रक्ष्यसे च परं पदम् ॥ ३२॥
अपार्थकं प्रभाषन्ते शूद्रा भागवता इति ॥ ३३
न शूद्रा भगवद्भक्ता विप्रा भागवतास्स्मृताः ।
[3]सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने ॥ ३४
द्वादशाक्षरतत्त्वज्ञश् चतुर्वेदविभागवित् ।
अच्छिद्रपञ्चकालज्ञस् स वै भागवतस्स्मृतः ॥ ३५
[4]ऋग्वेदेनैव होता च यजुषाऽध्वर्युरेव च ।
सामवेदेन चोद्गाता पुण्येनाभिष्टुवन्ति माम् ॥ ३६
अथर्वशिरसा चैव नित्यमाथर्वणा द्विजाः ।
स्तुवन्ति सततं ये मां ते वै भागवतास्स्मृताः ॥ ३७
वेदाधीनास्सदा यज्ञा यज्ञाधीनास्तु देवताः ।

---

1. क-ख-च-साधका ।
2. च—वृथा ज्ञानं वृथा स्वाध्यं वृथा योगपरिग्रहः ।
ब्रह्मचर्यं वृथा तस्य यो न भक्तो मयि द्विजः ॥
नाहूयन्ते न पूज्यन्ते न स्थाप्यन्ते कदाचन ।
तेनाग्नयोऽग्निहोत्राणि यो न भक्तो मयि द्विजः ॥ [अधिकः पाठः]
3. अ-ग-ख—नास्तीदमर्धम्
4. क-ख-ख—इतः श्लोकद्वयं नास्ति

देवता ब्राह्मणाधीनास् तस्माद्विप्रास्तु देवताः ॥ ३८

अनाश्रित्योच्छ्रयं नास्ति मुख्यमाश्रयमाश्रयेत् ॥ ३८॥

रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।

ब्रह्मा मामाश्रितो राजन् नाहं कञ्चिदुपाश्रितः ॥ ३९॥

ममाश्रयो न कश्चित्तु सर्वेषामाश्रयो ह्यहम् ॥ ४०

एवमेतन्मया प्रोक्तं रहस्यमिदमुत्तमम् ।

धर्मप्रियस्य ते राजन् नित्यमेवं समाचर ॥ ४१

इदं पवित्रमाख्यानं पुण्यं वेदैश्च सम्मितम् ।

यः पठेन्मामकं धर्मम् अहन्यहनि पाण्डव ॥ ४२

धर्मो विवर्धते तस्य बुद्धिश्चापि प्रसीदति ।

पापक्षयमुपेत्यैवं कल्याणं च विवर्धते ॥ ४३

एतत् पुण्यं पवित्रं च पापनाशनमुत्तमम् ।

श्रोतव्यं श्रद्धया युक्तैश् श्रोत्रियैश्च विशेषतः ॥ ४४

श्रावयेद्यस्त्विदं भक्त्या प्रयतोऽथ शृणोति वा ।

स गच्छेन्मम सायुज्यं नात्र कार्या विचारणा ॥ ४५

यश्चेदं श्रावयेच्छ्राद्धे मद्भक्तो मत्परायणः ।

पितरस्तस्य तृप्यन्ति यावदाभूतसम्प्लवम् ॥ ४६

**वैशम्पायनः—**

श्रुत्वा भागवतान् धर्मान् साक्षाद्विष्णोर्जगद्गुरोः ।

प्रहृष्टमनसो भूत्वा चिन्तयन्तोऽद्भुताः कथाः ॥ ४७

ऋषयः पाण्डवाश्चैव प्रणेमुस्तं जनार्दनम् ॥ ४७॥
पूजयामास गोविन्दं धर्मपुत्रः पुनः पुनः ॥ ४८

देवा ब्रह्मर्षयस्सिद्धा गन्धर्वाप्सरसस्तथा ।
भूता यक्षा ग्रहाश्चैव गुह्यका भुजगास्तथा ॥ ४९

वालखिल्या महात्मानो योगिनस्तत्त्वदर्शिनः ।
तथा भागवताश्चापि पञ्चकालमुपासकाः ॥ ५०
कौतूहलसमायुक्ता भगवद्भक्तिमागताः ॥ ५०॥

श्रुत्वा तु परमं पुण्यं वैष्णवं धर्मशासनम् ।
विमुक्तपापाः पूतास्ते संवृत्तास्तत्क्षणेन तु ॥ ५१॥

प्रणम्य शिरसा विष्णुं प्रतिनन्द्य च ताः कथाः ।
द्रष्टारो द्वारकायां वै वयं सर्वे जगद्गुरुम् ॥ ५२॥

इति प्रहृष्टमनसो ययुर्देवगणैस्सह ।
सर्वे ऋषिगणा राजन् ययुस्स्वं स्वं निवेशनम् ॥ ५३॥

गतेषु तेषु सर्वेषु केशवः केशिहा तदा ।
सस्मार दारुकं राजन् स च सात्यकिना सह ॥ ५४॥
समीपस्थोऽभवत् सूतो याहि देवेति चाब्रवीत् ॥ ५५

ततो विषण्णवदनाः पाण्डवाः पुरुषोत्तमम् ।
अञ्जलिं मूर्ध्नि सन्धाय नेत्रैरश्रुपरिप्लुतैः ॥ ५६
पिबन्तस्सततं कृष्णं नोचुरार्ततराः ५६॥

[1]कृष्णोऽपि भगवान् देवः पृथामामन्त्र्य चार्तवत् ।
धृतराष्ट्रं च गान्धारीं विदुरं द्रौपदीं तथा ॥　५७॥
कृष्णद्वैपायनं व्यासम् ऋषीनन्यांश्च मन्त्रिणः ।
सुभद्रामात्मजयुताम् उत्तरां स्पृश्य पाणिना ॥　५८॥
निर्गत्य वेश्मनस्तस्माद् आरुरोह महारथम् ॥　५९
[2]वाजिभिस्सैन्यसुग्रीवमेघपुष्पवलाहकैः ।
युक्तं तु ध्वजभूतेन पतगेन्द्रेण धीमता ॥　६०
[3]अन्वारुरोह चाप्येनं प्रेम्णा राजा युधिष्ठिरः ।
अपास्य चाशु यन्तारं दारुकं सूतसत्तमम् ॥　६१
अभीशून् प्रतिजग्राह स्वयं कुरुपतिस्तदा ॥　६१॥
उपारुह्यार्जुनश्चापि चामरव्यजनं शुभम् ।
रुक्मदण्डं बृहन्मूर्ध्नि दुधावाशु प्रदक्षिणम् ॥　६२॥
छत्रं शतशलाकं च दिव्यमाल्योपशोभितम् ।
वैडूर्यमणिदण्डं च चामीकरविभूषितम् ॥　६३॥
दधार तरसा भीमश् छत्रं तच्छार्ङ्गधन्वनः ॥　६४
भीमसेनोऽर्जुनश्चैव यमावप्यरिसूदनौ ।
माद्रीपुत्रौ तदा राजन् कृष्णस्याप्यरिसूदनौ ॥　६५
पृष्ठतोऽनुययुः कृष्णं मा शब्द इति हर्षितौ ॥　६५॥
त्रियोजने व्यतीते तु परिष्वज्य च पाण्डवान् ।
विसृज्य कृष्णस्तान् सर्वान् प्रणतान् द्वारकां ययौ ॥　६६॥

---

1. ख—अर्धत्रयं नास्ति　2. अ-च—अर्धद्वयं नास्ति
3. अ—अर्धद्वयं नास्ति

तदा प्रणम्य गोविन्दं तदाप्रभृति पाण्डवाः ।
कपिलाद्यानि दानानि ददुर्धर्मपरायणाः ॥ ६७॥

मधुसूदनवाक्यानि स्मृत्वा स्मृत्वा पुनः पुनः ।
मनसा पूजयामासुर् हृदयस्थानि पाण्डवाः ॥ ६८॥

युधिष्ठिरस्तु धर्मात्मा हृदि कृत्वा जनार्दनम् ।
तद्भक्तस्तन्मना युक्तस् तद्याजी तत्परोऽभवत् ॥ ६९॥

एवमेतत् पुरावृत्तं वैष्णवं धर्मशासनम् ।
मया ते कथितं राजन् पवित्रं पापनाशनम् ॥ ७०॥

तच्छृणुष्व महाराज विष्णुप्रोक्तं कुरूद्वह ।
तेन गच्छसि नान्येन तद्विष्णोः परमं पदम् ॥ ७१॥

**इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्**
**आश्वमेधिकपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥**
**॥ ९२ ॥ अनुगीतापर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥**
**[ अस्मिन्नध्याये ७१॥ श्लोकाः ]**

**॥ अनुगीतापर्वं समाप्तम् ॥ ॥ आश्वमेधिकपर्वं च समाप्तम् ॥ १४ ॥**

॥ अस्मिन्नाश्वमेधिकपर्वणि श्लोकाः ४६१३ ॥* ॥

अतःपरं आश्रमवासिकपर्वं भविष्यति तस्यायमाद्यः श्लोकः ॥

**जनमेजयः—**

राज्यं प्राप्य नरव्याघ्राः पितृपैतामहं महत् ।
कथमासन् महाराजे धृतराष्ट्रे महात्मनि ॥ १

* यद्यप्यनुक्रमणिकाध्यायोक्तरीत्या ४४२० श्लोकैर्भाव्यम्; तथाऽप्यत्र ४६१३॥ श्लोका दृश्यन्ते ।

॥ श्रीः ॥

# ॥ महाभारतम् ॥

---

## ॥ आश्रमवासिकपर्व ॥

(आश्रमवासपर्व)

---

### ॥ प्रथमोऽध्यायः ॥

---

युधिष्ठिरेण राज्यपरिपालनम् ॥ १ ॥ कुन्तीद्रौपद्यादिभिर्गान्धार्यां श्वश्रूवद्वर्तनम् ॥ २ ॥ भीमवर्जमर्जुनादिभिर्युधिष्ठिरशासनेन विशेषतो धृतराष्ट्रानुवर्तनम् ॥ ३ ॥

---

जनमेजयः—

राज्यं प्राप्य नरव्याघ्राः पितृपैतामहं महत् ।
कथमासन् महाराजे धृतराष्ट्रे महात्मनि ॥ १

स हि राजा हतामात्यो हतपुत्रो निराश्रयः ।
कथमासीद्धतैश्वर्यो गान्धारी च यशस्विनी ॥ २

कियन्तं चैव कालं ते पितरो मम पूर्वकाः ।
स्थिता राज्ये महात्मानस् तन्मे व्याख्यातुमर्हसि ॥ ३

वैशम्पायनः—

प्राप्य राज्यं महात्मानः पाण्डवा हतशत्रवः ।
धृतराष्ट्रं पुरस्कृत्य पृथिवीं पर्यपालयन् ॥ ४

धृतराष्ट्रमुपातिष्ठद् विदुरस्सञ्जयस्तथा ।
युयुत्सुश्चैव मेधावी वैश्यापुत्रस्स कौरवः ॥ ५

पाण्डवास्सर्वकार्येषु पृच्छन्ति स्म च तं नृपम् ।
चक्रुस्तेनाभ्यनुज्ञाता वर्षाणि दश पञ्च च ॥ ६

सदाऽभिगम्य ते वीराः पर्युपासत तं नृपम् ।
पादाभिवन्दनं कृत्वा युधिष्ठिरमते स्थिताः ॥ ७
तेन ते मूर्ध्नि चाघ्रातास् सर्वकार्याणि चक्रिरे ॥ ७॥
[1]कुन्ती भोजसुता चैव गान्धारीमन्ववर्तत ।
द्रौपदी च सुभद्रा च याश्चान्याः पाण्डवस्त्रियः ॥ ८॥
सतां वृत्तमवर्तन्त तयोश्श्वश्र्वोर्यथाविधि ॥ ९

शयनानि महार्हाणि वासांस्याभरणानि च ।
सर्वाणि भक्ष्यभोज्यानि विविधानि च सर्वशः ॥ १०

युधिष्ठिरो महाराजो धृतराष्ट्रे ह्युपानयत् ।
तथैव कुन्ती गान्धार्यां गुरुवृत्तिमवर्तत ॥ ११

विदुरस्सञ्जयश्चैव युयुत्सुश्चैव कौरव ।

1. क—तथाविधांश्च तान् दृष्ट्वा धृतराष्ट्रोऽभ्यनन्दत । [अधिकः पाठः]

उपासन्ति स्म तं वृद्धं हतपुत्रं नराधिपम् ॥ १२

स्यालो द्रोणस्य यश्चैको दयितो ब्राह्मणो महान् ।
स च तस्मिन् महेष्वासे कृपस्समभवत् तदा ॥ १३

व्यासश्च भगवान् नित्यं वासं चक्रे नृपेण ह ।
कथां कुर्वन् पुराणर्षिर् देवर्षिर्नृपरक्षसाम् ॥ १४

धर्मयुक्तानि कार्याणि व्यवहारान्वितानि च ।
धृतराष्ट्राभ्यनुज्ञातो विदुरस्तान्यकारयत् ॥ १५

कामतो हि प्रियाण्यस्य कार्याणि सुगुरूण्यपि ।
प्राप्यन्तेऽर्थैस्सुलघुभिः प्रभावाद्विदुरस्य वै ॥ १६

अकरोद्बन्धमोक्षांश्च वध्यानां मोक्षणं तथा ॥ १६॥

न च धर्मात्मजो राजा कदाचित् किञ्चिदब्रवीत् ॥ १७

विहारयात्रासु पुनः कुरुराजो युधिष्ठिरः ।
[1]सर्वान् कामानुपस्थाप्य धृतराष्ट्रे न्यवेदयत् ॥ १८

आरालिकास्सूपकारा रागषाडविकास्तथा ।
उपातिष्ठन्त राजानं धृतराष्ट्रं यथापुरम् ॥ १९

वासांसि सुमहार्हाणि माल्यानि विविधानि च ।

---

1. ख—उवाच च स तान् भ्रातॄन् अमात्यांश्च महीपतिः ॥

इति आश्रमवासपर्वणि प्रथमोऽध्यायः

सर्वान् कामानिति १८ तमश्लोकादारभ्य अध्यायान्ते २७॥ तमपर्यन्त-श्लोकाः खकोशे न सन्ति ॥

उपजह्रुर्यथाकालं धृतराष्ट्रस्य पाण्डवाः ॥ २०

मैरेयकाणि मांसानि पानकानि लघूनि च ।
चित्रान् भक्ष्यविकारांश्च चक्रुरस्य यथापुरम् ॥ २१

[1]ये चापि पृथिवीपालास् समाजग्मुस्समन्ततः ।
उपातिष्ठन्त ते सर्वे कौरवेन्द्रं यथापुरम् ॥ २२

कुन्ती च द्रौपदी चैव सात्वती चैव भामिनी ।
उलूपी नागकन्या च देवी चित्राङ्गदा तथा ॥ २३

धृष्टकेतोश्च भगिनी जरासन्धस्य चात्मजा ।
[2]एताश्चान्याश्च बह्व्यो वै योषितः पुरुषर्षभ ॥ २४
किङ्करास्स्मोपतिष्ठन्ति सर्वास्तास्सुबलात्मजाम् ॥ २४॥

यथा पुत्रवियुक्तोऽयं न किञ्चिद्दुःखमाप्नुयात् ।
इति राजाऽन्वशाद्भ्रातॄन् नित्यमेव युधिष्ठिरः ॥ २५॥

एतत् ते धर्मराजस्य श्रुत्वा वचनमर्थवत् ।
सविशेषमवर्तन्त भीममेकं विना तदा ॥ २६॥

न हि तत् तस्य वीरस्य हृदयादपगच्छति ।
धृतराष्ट्रस्य यद्वृत्तं दुर्बुद्धेर्द्यूतमण्डले ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि प्रथमोऽध्यायः ॥ १ ॥
॥ ९३ ॥ आश्रमवासपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

---

1. ग-ख—नास्त्ययं श्लोकः ।
2. ग—मास्तीदमर्धम् ख—नास्त्ययं श्लोकः ।

## ॥ द्वितीयोऽध्यायः ॥

युधिष्ठिरेण नागराणां धृतराष्ट्रानुवर्तनानुशासनपूर्वकं सह भ्रातृभिरप्रमादेन तत्परितोषणम् ॥ १ ॥

वैशम्पायनः—

[1]एवं सम्पूजितो राजा पाण्डवैराम्बिकासुतः ।
विजहार यथापूर्वम् ऋषिभिः पर्युपस्थितः ॥　　१

ब्रह्मदेयाग्रहारांश्च प्रददौ कुरुसत्तमः ।
तच्च कुन्तीसुतो राजा सर्वमेवान्वमोदत ॥　　२

आनृशंस्यपरो धीमान् प्रीयमाणो युधिष्ठिरः ।
उवाच च स तान् भ्रातॄन् अमात्यांश्च महीपतिः ॥　　३

युधिष्ठिरः—

मया चैव भवद्भिश्च मान्य एव नराधिपः ॥　　३॥

निदेशे धृतराष्ट्रस्य यस्स्थास्यति स मे सुहृत् ।
विपरीतश्च मे शत्रुर् निरस्यश्च भवेन्नरः ॥　　४॥

परिवृत्तेषु चाहस्सु पुत्राणां श्राद्धकर्मणि ।
ददातु राजा वित्तानि यावदस्य चिकीर्षितम् ॥　　५॥

वैशम्पायनः—

ततस्स राजा कौरव्यो धृतराष्ट्रो महामनाः ।

---

1. ख—अर्धषट्कं नास्ति

ब्राह्मणेभ्यो यथार्हेभ्यो ददौ वित्तमनेकशः ॥ ६॥

धर्मराजश्च भीमश्च सव्यसाची यमावपि ।
तत् सर्वमन्ववर्तन्त धृतराष्ट्रव्यपेक्षया ॥ ७॥

कथं नु राजा वृद्धस्सन् पुत्रशोकसमाहतः ।
शोकमस्मत्कृतं प्राप्य न म्रियेतेति चिन्त्य वै ॥ ८॥

यावद्धि कुरुमुख्यस्य जीवपुत्रस्य वै सुखम् ।
तावत् सुखमवाप्नोतु भोगांश्चेति व्यवस्थिताः ॥ ९॥

ततस्ते सहितास्सर्वे भ्रातरः पञ्च पाण्डवाः ।
दानशीलास्तथा तस्थुर् धृतराष्ट्रस्य शासने ॥ १०॥

धृतराष्ट्रस्तु तान् वीरान् विनीतान् विनये स्थितान् ।
शिष्यवृत्तौ स्थितान् नित्यं गुरुवत् तानपश्यत ॥ ११॥

गान्धारी चापि पुत्राणां विविधैश्श्राद्धकर्मभिः ।
आनृण्यमगमत् कामं विप्रेभ्यः प्रतिपाद्य वै ॥ १२॥

एवं धर्मभृतां श्रेष्ठो धर्मराजो युधिष्ठिरः ।
भ्रातृभिस्सहितो धीमान् पूजयामास तं नृपम्* ॥ १३॥

स राजा सुमहातेजा वृद्धः कुरुकुलोद्वहः ।
नापश्यत तदा किञ्चिद् अप्रियं कुरुनन्दनात् ॥ १४॥

वर्तमानेषु सद्वृत्तिं पाण्डवेषु महात्मसु ।

---

* अ-क-ख-ग-घ—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

प्रीतिमानभवद्राजा धृतराष्ट्रोऽम्बिकासुतः ॥　　१५॥

सौबलेयी च गान्धारी पुत्रशोकमपास्य तम् ।
सदैव प्रीतिमत्यासीत् पाण्डवेषु निजेष्विव ॥　　१६॥

प्रियाण्येव तु कौरव्यो नाप्रियाणि कुरूद्वहः ।
वैचित्रवीर्ये नृपतौ समाचरत सर्वदा ॥　　१७॥

यद्यद्ब्रूते च किञ्चित् स धृतराष्ट्रो नराधिपः ।
गुरु वा लघु वा कार्यं गान्धारी वा यशस्विनी ॥　　१८॥

तत् स राजा नरव्याघ्रः पाण्डवानां धुरन्धरः ।
पूजयित्वा वचस्तत्तद् अकार्षीत् परवीरहा ॥　　१९॥

[1]तेन तस्याभवत् प्रीतो वृत्तेन स नराधिपः ॥　　२०
[2]अन्वतप्यत संस्मृत्य पुत्रं मन्दमचेतसम् ॥　　२०॥

सदा च प्रातरुत्थाय कृतजप्यश्शुचिर्नृपः ।
[3]आशास्ते पाण्डुपुत्राणां समरेष्वपराजयम् ॥　　२१॥

ब्राह्मणान् वाचयित्वा च हुत्वा चैव हुताशनम् ।

---

1. क—अर्धद्वयं नास्ति
2. अ—र्या प्रीतिं पाण्डुपुत्रेभ्यस् समवाप महीपतिः ।
तां प्रीतिं परमाधत्त पुत्रेषु च नराधिप ॥　　[अधिकः पाठः]
3. अ-क-ख-ग—अर्धपञ्चकं नास्ति

आयूंषि पाण्डुपुत्राणाम् अनुशास्ते स कौरवः ॥ २२।
स तां प्रीतिं परामाप स्वप्रेभ्यस्स महीपतिः ।
यां प्रीतिं पाण्डुपुत्रेभ्यस् समवाप महीपतिः ॥ २३॥
ब्राह्मणानां च वृद्धानां क्षत्रियाणां च भारत ।
तथा विट्शूद्रसङ्घानाम् अभवत् पाण्डवः प्रियः ॥ २४॥
यच्च किञ्चित् पुरा पापं धृतराष्ट्रसुतैः कृतम् ।
अकृत्वा हृदि तद्राजा तं नृपं सोऽन्ववर्तत ॥ २५॥
यश्च कश्च नरः किञ्चिद् अप्रियं ह्यम्बिकासुते ।
[1]कुरुते द्वेष्यतामेति स कौन्तेयस्य धीमतः ॥ २६॥
न राज्ञो धृतराष्ट्रस्य न च दुर्योधनस्य च ।
अरोचद् दुष्कृतं किञ्चिद् युधिष्ठिरभयान्नृपः ॥ २७॥
तुष्टोऽभूद्धृतराष्ट्रश्च गान्धारी च महायशाः ।
अजातशत्रोर्वृत्तेन न तु भीमस्य पार्थिवः ॥ २८॥
अन्ववर्तत भीमोऽपि [2]निष्टनन् धर्मजं नृपम् ।
धृतराष्ट्रं स सम्प्रेक्ष्य सदा भवति दुर्मनाः ॥ २९॥
राजानमनुगच्छंस्तु धर्मपुत्रं महामतिम् ।
अन्ववर्तत सक्रोधो हृदयेन पराङ्मुखः ॥ ३०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
॥ ९३ ॥ आश्रमवासपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ३०॥ श्लोकाः ]

---

1. ग—अर्धचतुष्टयं नास्ति 2. ग—निष्ठुरं ।

## ॥ तृतीयोऽध्यायः ॥

**भीमसेनपरुषभाषणश्रवणान्निर्वेदमुपगतवता धृतराष्ट्रेण गान्धार्या सह वनगमनाध्यवसायः ॥ १ ॥**

---

**वैशम्पायनः—**

युधिष्ठिरस्य नृपतेर् दुर्योधनपितुस्तदा ।
नान्तरं ददृशू राजन् पुरुषाः प्रणयं प्रति ॥ १

यदा तु कौरवो राजा पुत्रं सस्मार बालिशम् ।
तदा भीममपध्याति हृदयेनाम्बिकासुतः ॥ २

कौरवश्चैव भीमश्च हृदाऽन्योन्यमदूष्यताम् ।
ध्यायन्तौ श्लक्ष्णया वाचा अन्योन्यमभितिष्ठताम् ॥ ३

अप्रकाशं व्यलीकानि कुरुतेऽस्य वृकोदरः ।
आज्ञां प्रत्यहनच्चैव कृतकैः पुरुषैस्सदा ॥ ४

असकृच्चाप्युवाचेदं हतास्ते मन्दचेतसः ॥ ४॥

अथ भीमस्सुहृन्मध्ये बाहुशब्दमथाऽकरोत् ।
संश्रवे धृतराष्ट्रस्य युद्धं संवर्णयन्निव ॥ ५॥

स्मृत्वा दुर्योधनं शत्रुं कर्णदुश्शासनावपि ।
प्रोवाचेदं सुसंरब्धो भीमस्स परुषं वचः ॥ ६॥

**भीमः—**

अन्धस्य नृपतेः पुत्रा मया परिघबाहुना ।
[1]नीता लोकममुं सर्वे नानाशस्त्रास्त्रयोधिनः ॥ ७॥

इमौ पीनौ सुवृत्तौ मे नागराजकरोपमौ ।
यावासाद्य रणे मूढा धार्तराष्ट्राः क्षयं गताः ॥ ८॥

ताविमौ चन्दनेनाक्तौ वन्दनीयौ च मे भुजौ ।
याभ्यां दुर्योधनो निन्ये क्षयं ससुतबान्धवः ॥ ९॥

**वैशम्पायनः—**

एताश्चान्याश्च विविधाश् शल्यभूता जनाधिपः ।
श्रुत्वा निर्वेदमापेदे भीमवाग्बाणचोदितः ॥ १०॥

[2]सा च बुद्धिमती देवी कालपर्यायवेदिनी ।
गान्धारी सर्वधर्मज्ञा तान्यलीकानि शुश्रुवे ॥ ११॥

ततः पञ्चदशे वर्षे समतीते नराधिपः ।
[3]राजा निर्वेदमापेदे भीमवाग्बाणपीडितः ॥ १२॥

[4]सुखासक्तं कृच्छ्रपरं ज्ञात्वा चैव युधिष्ठिरम् ।
तपोयोगात् तपस्तप्तुं मनश्चक्रे महामतिः ॥ १३॥

नान्वबुध्यत तद्राजा कुन्तीपुत्रो युधिष्ठिरः ।

---

1. अ-क-ख-घ—असकृच्चाप्युवाचेदं हतास्ते मन्दचेतसः । [पाठान्तरम् ]
2. ग—इदमर्धद्वयं नास्ति
3. क-ख-ग-घ—अर्धद्वयं नास्ति
4. अ—इदमर्धं नास्ति

श्वेताश्वो वाऽथ कुन्ती वा द्रौपदी वा यशस्विनी ॥　　१४॥

माद्रीपुत्रौ च भीमस्य चित्तज्ञावन्वमोदताम् ।
राज्ञस्तु चित्तं रक्षन्तौ नोचतुस्स्वयमप्रियम् ॥　　१५॥

ततस्समानयत् सर्वं धृतराष्ट्रस्सुहृज्जनम् ।
बाष्पसन्दिग्धमत्यर्थम् इदमाह वचो भृशम् ॥　　१६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

॥ ९३ ॥ आश्रमवासपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[ अस्मिन्नध्याये १६॥ श्लोकाः ]

## ॥ चतुर्थोऽध्यायः ॥

धृतराष्ट्रेण सकलपौरानयनेन तेषु स्वस्य वनगमनाध्यवसायनिवेदनम् ॥१॥ धृतराष्ट्रेण युधिष्ठिरं प्रति स्वस्य वनगमनाभ्यनुज्ञानप्रार्थना ॥२॥

धृतराष्ट्रः—

विदितं भवतामेतद् यथा वृत्तं कुरुक्षयम् ।
ममापराधात् तत् सर्वम् इति ज्ञेयं तु कौरवाः ॥　　१

योऽहं दुष्टमतिं मूर्खं ज्ञातीनां भयवर्धनम् ।
दुर्योधनं कौरवाणाम् आधिपत्येऽभ्यषेचयम् ॥　　२

यच्चाहं वासुदेवस्य वाक्यं नाश्रौषमर्थवत् ।

बध्यतां साध्वयं पापस् सामात्य इति दुर्मतिः ॥ ३
पुत्रस्नेहाभिभूतश्च हितमुक्तो हितैषिणा ॥ ३॥
विदुरेणाथ भीष्मेण द्रोणेन च कृपेण च ।
पदे पदे भगवता व्यासेन च महात्मना । ४॥
सञ्जयेनाथ गान्धार्या तदिदं तप्यते मया ॥ ५
यच्चाहं पाण्डुपुत्रेषु गुणवत्सु महात्मसु ।
न न्यस्तवाञ्श्रियं दीप्तां पितृपैतामहीमिमाम् ॥ ६
पश्यन्नपि विनाशं हि सर्वराज्ञां गदाग्रजः ।
एतच्छ्रेयस्स परमम् अमन्यत जनार्दनः ॥ ७
सोऽहमेतान्यतीतानि दुर्वृत्तान्यात्मनस्सदा ।
हृदये शल्यभूतानि धारयामि सहस्रशः ॥ ८
विशेषतस्तु दह्यामि वर्षे पञ्चदशे हि वै ।
अस्य पापस्य शुद्ध्यर्थं नियतोऽस्मि सुदुर्मतिः ॥ ९
चतुर्थे नियते काले कदाचिदपि चाष्टमे ।
तृष्णापनयनं [1]भुञ्जे गान्धारी वेद तन्मम ॥ १०
करोत्याहारमिति च सर्वः परिजनस्सदा ।
युधिष्ठिरभयाद्वेत्ति भृशं तप्येत पाण्डवः ॥ ११
भूमौ शये जप्यपरो दर्भेष्वजिनसंवृतः ।

---

1. ग—भुङ्क्ते । ख—भुञ्जे गान्धारी चेन्मता मम ।

नियमव्यपदेशेन गान्धारी च यशस्विनी ॥　　१२

हतं पुत्रशतं वीरं सङ्ग्रामेष्वपलायिनम् ।
नानुतप्ये ह्यहं तच्च क्षत्रधर्मं हि तं विदुः ॥　　१३

वैशम्पायनः—

इत्युक्त्वा धर्मराजं सोऽथाभ्यभाषत वीर्यवान् ॥　　१३॥

धृतराष्ट्रः—

भद्रं ते यादवीमातर् वाक्यं चेदं निबोध मे ॥　　१४

सुखमस्म्युषितः पुत्र त्वया सुपरिपालितः ।
मया दानानि दत्तानि श्राद्धानि च पुनः पुनः ॥　　१५

प्रकृष्टं मे वयः पुत्र पुण्यं प्राप्तं यथाबलम् ।
गान्धारी हतपुत्रेयं धैर्येणावेक्षते च माम् ॥　　१६

द्रौपद्यशुभकर्तारस् तव चैश्वर्यहारिणः ।
समतीता नृशंसास्ते धर्मेण निहता युधि ॥　　१७

न तेषु प्रतिकर्तव्यं पश्यामि कुरुनन्दन ।
सर्वे शस्त्रजिताँल्लोकान् गता ह्यभिमुखा हताः ॥　　१८

आत्मनस्तु सतां मुख्य प्रतिकर्तव्यमद्य मे ।
गान्धार्याश्चैव राजेन्द्र तदनुज्ञातुमर्हसि ॥　　१९

त्वं हि धर्मभृतां श्रेष्ठस् सततं धर्मवत्सलः ।
राजा गुरुः प्राणभृतां तस्मादेतद्ब्रवीम्यहम् ॥　　२०

अनुज्ञातस्त्वया वीर संश्रयेयं वनान्यहम् ।
चीरवल्कलभृद्राजन् गान्धार्या सहितोऽनघ ॥ २१

तवाशिषः प्रयुञ्जानो भविष्यामि वनेचरः ।
उचितं नः कुले तात सर्वेषां भरतर्षभ ॥ २२
पुत्रेष्वैश्वर्यमाधाय वयसोऽन्ते वनं नृप ॥ २२॥

[1]तत्राहं वायुभक्षो वा निराहारोऽपि वा वसन् ।
पत्न्या सहानया वीर चरिष्यामि तपः परम् ॥ २३॥

त्वं चापि फलभुक् तात तपसा पार्थिवो ह्यसि ।
फलभाजो हि राजानः कल्याणस्येतरस्य वा ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
॥ ९३ ॥ आश्रमवासपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये २४॥ श्लोकाः ]

---

## ॥ पञ्चमोऽध्यायः ॥

---

युधिष्ठिरेण धृतराष्ट्रानुशोचनपूर्वकं तत्प्रतिषेधने व्यासेन युधिष्ठिर-चोदनाय तत्रागमनम् ॥ १ ॥

---

युधिष्ठिरः—

न मां प्रीणयते राज्यं त्वय्येवं दुःखिते नृप ।
धिङ्मामस्तु सुदुर्बुद्धिं राज्यलुब्धं प्रमादिनम् ॥ १

---

1. क—अर्धचतुष्टयं नास्ति

वने भवन्तं दुःखार्तम् उपवासकृशं नृप ।
यताहारं भूमिशयं नाविन्दं भ्रातृभिस्सह ॥ २

अहोऽस्मि वञ्चितो मूढो भवता गूढबुद्धिना ।
विश्वासयित्वा पूर्वं मां यदि त्वमिदमुक्तवान् ॥ ३

[1]किं मे राज्येन भोगैर्वा किं यज्ञैः किं फलेन वा ।
यस्य मे त्वं महीपाल दुःखान्येवमवाप्नवान् ॥ ४

पीडितं चापि जानामि राज्यमात्मानमेव च ।
अनेन वचसा तेऽद्य दुःखितोऽस्मि जनेश्वर ॥ ५

भवान् पिता भवान् माता भवान् नः परमो गुरुः ।
भवता विप्रहीणा हि क्व नु तिष्ठामहे वयम् ॥ ६

औरसो भवतः पुत्रो युयुत्सुस्तरुणोऽपि सन् ।
अस्तु राजा महाराज यं चान्यं मन्यते भवान् ॥ ७

अहं वनं गमिष्यामि भवान् राज्यं प्रशास्त्विदम् ।
न मामयशसा दग्धं भूयस्त्वं दग्धुमर्हसि ॥ ८

नाहं राजा भवान् राजा भवता परवानहम् ।
कथं गुरुं महाराजम् अनुज्ञातुमिहोत्सहे ॥ ९

न मन्युरिह नः कश्चित् सुयोधनकृते नृप ।
भवितव्यं तथा तद्धि वयं ते चैव मोहिताः ॥ १०

1. ब—अर्धद्वयं नास्ति

वयं हि पुत्रा भवतो यथा दुर्योधनादयः ।
गान्धारी चैव कुन्ती च निर्विशेषे मते मम ॥ ११

यद्येवमपि मां राजन् परित्यज्य गमिष्यसि ।
पृष्ठतस्त्वनुयास्यामि सत्येनात्मानमालभे ॥ १२

इयं हि वसुसम्पूर्णा मही सागरमेखला ।
भवता विप्रहीणस्य न मे प्रीतिकरी भवेत् ॥ १३

भवदीयमिदं सर्वं शिरसा त्वां प्रसादये ।
त्वदधीनाः स्म राजेन्द्र व्येतु ते मानसो ज्वरः ॥ १४

भवितव्यमनुप्राप्तं मन्ये त्वेतज्जनाधिप ।
दिष्ट्या शुश्रूषमाणस्त्वां मोक्ष्यामि मनसो ज्वरम् ॥ १५

धृतराष्ट्रः—

तापस्ये मे मनस्तात वर्तते कुरुनन्दन ।
उचितं हि कुलेऽस्माकम् अरण्यगमनं प्रभो ॥ १६

चिरमस्म्युषितः पुत्र चिरं शुश्रूषितस्त्वया ।
वृद्धं मामभ्यनुज्ञातुं राजन्नर्हसि मा चिरम् ॥ १७

वैशम्पायनः—

एवमुक्त्वा वेपमानं पाण्डुपुत्रं कृताञ्जलिम् ।
उवाच विदुरं राजा धृतराष्ट्रोऽम्बिकासुतः ॥ १८

धृतराष्ट्रः—

सञ्जयं च महामात्रं कृपं चापि महारथम् ।

अनुनेतुमिहेच्छामि भवद्भिः पृथिवीपतिम् ॥ १९

म्लायते हि मनस्तात मुखं च परिशुष्यति ।
वयसा च प्रकृष्टेन व्यायामेनाप्यनेन च ॥ २०

वैशम्पायनः—

इत्युक्त्वा स तु धर्मात्मा वृद्धो राजा कुरूद्वहः ।
गान्धारीं शिश्रिये धीमान् सहसैव गतासुवत् ॥ २१

[1]तं तु दृष्ट्वा तथाऽऽसीनं निश्चेष्टं कुरुपार्थिवम् ।
आर्तिं राजा ययौ तूर्णं कौन्तेयः परवीरहा ॥ २२

युधिष्ठिरः—

यस्य नागसहस्रेण दशसङ्ख्येन वै बलम् ।
सोऽयं नारीं समाश्रित्य शेते राजा गतासुवत् ॥ २३

आयसी प्रतिमा येन भीमसेनस्य वै पुरा ।
चूर्णीकृता बलवता स बलार्थेऽश्रयत् स्त्रियम् ॥ २४

धिगस्तु मामधर्मज्ञं धिग् बुद्धिं धिग् बहुश्रुतम् ।
यत्कृते पृथिवीपालश् शेतेऽयमतथोचितः ॥ २५

अहमप्युपवत्स्यामि यथैवायं गुरुर्मम ।
यदि राजा न भुङ्क्तेऽयं गान्धारी च यशस्विनी ॥ २६

वैशम्पायनः—

ततोऽस्य पाणिना राजा जलशीतेन पाण्डवः ।

1. अ-ख-ग-घ—इदमर्धं नास्ति

उरो मुखं चैव शनैः पर्यमार्जत धर्मवित् ॥ २७

तेन रत्नौषधिमता पुण्येन सुखगन्धिना ।
पाणिस्पर्शेन राज्ञस्तु तथा सुखमवाप ह ॥* २८

धृतराष्ट्रः—

स्पृश मां पाणिना भूयः परिष्वज च पाण्डव ।
जीवामीव हि संस्पर्शात् तव राजीवलोचन ॥ २९

मूर्धानं च तवाघ्रातुम् इच्छामि मनुजाधिप ।
पाणिभ्यां च परिस्प्रष्टुं प्राणेन मम चात्मनि ॥ ३०

अष्टमो ह्यद्य कालोऽयम् आहारस्य कृतस्य मे ।
येनाहं कुरुशार्दूल न शक्नोमि विचेष्टितुम् ॥ ३१

व्यायामश्चायमत्यन्तं कृतस्त्वामभियाचता ।
ततो ग्लानमना राजन् नष्टसंज्ञ इवाभवम् ॥ ३२

तवामृतसुखस्पर्शं हस्तस्पर्शमिमं प्रभो ।
लब्ध्वा सञ्जीवितोऽस्मीति मन्ये कुरुकुलोद्वह ॥ ३३

वैशम्पायनः—

एवमुक्तस्तु कौन्तेयः पित्रा ज्येष्ठेन भारत ।
पस्पर्श सर्वगात्रेषु स्नेहाद्रं तं शनैस्तथा ॥ ३४

उपलभ्य ततः प्राणान् धृतराष्ट्रो महीपतिः ।

---

* अ-क-ख-ग-घ—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

बाहुभ्यां सम्परिष्वज्य मूर्ध्नि चाघ्राय पाण्डवम् † ॥ ३५
विदुरादयश्च ते सर्वे रुरुदुर्दुःखिता भृशम् ।
अतिदुःखात्तु राजानं नोचुः किञ्चन पाण्डवाः ॥ ३६
गान्धारी त्वेव धर्मज्ञा मनसोद्वहती तदा ।
दुःखान्यवारयद्राजन् मैवमित्येव चाब्रवीत् ॥ ३७
इतरास्तु स्त्रियस्सर्वाः कुन्त्या सह सुदुःखिताः ।
नेत्रैस्तास्सास्त्रविक्लेदैः परिवार्य स्थिता भवन् ॥ ३८
तदाऽब्रवीत् पुनर्वाक्यं धृतराष्ट्रो युधिष्ठिरम् ॥ ३८॥

धृतराष्ट्रः—

अनुजानीहि मां राजंस् तपसे भरतर्षभ ॥ ३९
ग्लायते मे मनस्तात भूयो भूयः प्रजल्पतः ।
न मामितः परं पुत्र परिक्लेष्टुमिहार्हसि ॥ ४०

वैशम्पायनः—

तस्मिंस्तु कौरवश्रेष्ठे तथा ब्रुवति पाण्डवम् ।
सर्वेषामवरोधानाम् आर्तनादो महानभूत् ॥ ४१
दृष्ट्वा कृशं विवर्णं च राजानमतथोचितम् ।
उपवासपरिक्लान्तं त्वगस्थिपरिवारितम् ॥ ४२
धर्मपुत्रस्स्वपितरं परिष्वज्य महाभुजः ।
शोकजं बाष्पमुत्सृज्य पुनर्वचनमब्रवीत् ॥ ४३

---

† करोदेत्यध्याहारेणान्वयः ।

युधिष्ठिरः—

न कामये नरश्रेष्ठ जीवितं पृथिवीं तथा ।

यथा तव प्रियं राजंश्चिकीर्षामि प्रयत्नतः ॥ ४४

यदि त्वहमनुग्राह्यो भवतो दयितोऽपि वा ।

क्रियतां तावदाहारस्ततो वेत्स्यामहे परम् ॥ ४५

वैशम्पायनः—

ततोऽब्रवीन्महाराजो धर्मराजं स कौरवः ॥ ४५॥

धृतराष्ट्रः—

अनुज्ञातस्त्वया पुत्र भुञ्जीयेति मतिर्मम ॥ ४६

वैशम्पायनः—

इति ब्रुवति राजेन्द्रे धृतराष्ट्रे युधिष्ठिरम् ।

ऋषिस्सत्यवतीपुत्रो व्यासोऽभ्येत्य वचोऽब्रवीत् ॥ ४७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
॥ ९३ ॥ आश्रमवासपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये ४७ श्लोकाः ]

## ॥ षष्ठोऽध्यायः ॥

व्यासेन युधिष्ठिरं प्रति सहेतूपन्यासं धृतराष्ट्रस्य वनगमनाभ्यनुज्ञानचोदनपूर्वकं स्वाश्रमगमनम् ॥ १ ॥ युधिष्ठिरेण धृतराष्ट्रं प्रति कृच्छ्रेण तदभ्यनुज्ञानाङ्गीकरणम् ॥ २ ॥

व्यासः—

युधिष्ठिर महाबाहो यथाऽऽह कुरुनन्दनः ।

धृतराष्ट्रो महात्मा त्वं तत् कुरुष्वाविचारयन् ॥ १

अयं हि वृद्धो नृपतिर् हतपुत्रो विशेषतः ।
नेदं कृच्छ्रं चिरगतस् सहेदिति मतिर्मम ॥ २

गान्धारी च महाभागा प्राज्ञा करुणवेदिनी ।
पुत्रशोकं महाराज धैर्येणोद्वहते भृशम् ॥ ३

अहमप्येतदेव त्वां ब्रवीमि कुरु मे वचः ।
अनुज्ञां लभतां राजा मा वृथेह मरिष्यति ॥ ४

स्वस्थो भवत्वयं धीमान् वनेषु मधुगन्धिषु ।
राजर्षीणां पुराणानाम् अनुयातु गतिं नृपः ॥ ५

राजर्षीणां हि सर्वेषाम् अन्ते वनमुपाश्रयः ॥ ५॥

वैशम्पायनः—

इत्युक्तस्स ततो राजा व्यासेनाद्भुतकर्मणा ।
प्रत्युवाच महातेजा धर्मराजो महामुनिम् ॥ ६॥

युधिष्ठिरः—

भगवानेव नो मान्यो भगवानेव नो गुरुः ।
भगवानस्य राज्यस्य कुलस्य च परायणम् ॥ ७॥

अहं तु पुत्रो भगवन् पिता राजा गुरुश्च मे ।
निदेशवर्ती च पितुः पुत्रो भवति धर्मतः ॥ ८॥

वैशम्पायनः—

इत्युक्तस्स तु तं प्राह व्यासो धर्मभृतां वरः ।
युधिष्ठिरं महातेजाः पुनरेव विशाम्पते ॥ ९॥

व्यासः—

एवमेतन्महाबाहो यथा वदसि कौरव ।
राजाऽयं वृद्धतां प्राप्तः प्रमाणे परमे स्थितः ॥ १०॥

सोऽयं मयाऽभ्यनुज्ञातस् त्वया च पृथिवीपतिः ।
करोतु स्वमभिप्रायं माऽस्य विघ्नकरो भव ॥ ११॥

एष एव परो धर्मो राजर्षीणां युधिष्ठिर ।
समरे वा भवेन्मृत्युर् वने वा विधिपूर्वकम् ॥ १२॥

पित्राऽपि तव राजेन्द्र पाण्डुना पृथिवीक्षिता ।
शिष्यभूतेन राजाऽयं गुरुवत् पर्युपासितः ॥ १३॥

क्रतुभिर्दक्षिणाभिश्च रत्नपर्वतशोभितैः ।
महद्भिरिष्टं भोगाश्च भुक्ताः पुत्राश्च लालिताः ॥ १४॥

अत्र संस्थं च विपुलं राज्यं विप्रोषिते त्वयि ।
त्रयोदश समा भुक्तं दत्तं च विपुलं वसु ॥ १५॥

त्वया च पुरुषव्याघ्र गुरुशुश्रूषया नृप ।
आराधितस्सभृत्येन गान्धारी च यशस्विनी ॥ १६॥

अनुजानीहि पितरं समयोऽस्य तपोविधौ ।
न मन्युर्विद्यते चास्य सुसूक्ष्मोऽपि युधिष्ठिर ॥ १७॥

वैशम्पायनः—

एतावदुक्त्वा वचनम् अनुज्ञाप्य च पार्थिवम् ।
तथाऽस्त्विति च तेनोक्तः कौन्तेयेन ययौ वनम् ॥ १८॥

गते भगवति व्यासे राजा पाण्डुसुतस्ततः।
प्रोवाच पितरं वृद्धं मन्दं मन्दमिवानतः ॥ १९॥

युधिष्ठिरः—

यथाऽऽह भगवान् व्यासो यच्चापि भवतो मतम् ।
यथाऽऽह च महेष्वासः कृपो विदुर एव च ॥ २०॥

युयुत्सुस्सञ्जयश्चैव तत् कर्तास्म्यहमञ्जसा ॥ २१
सर्वे ते ह्यनुमान्या मे कुलस्यास्य हितैषिणः ॥ २१॥

इदं तु याचे नृपते त्वामहं शिरसा नतः ।
क्रियतां तावदाहारस् ततो गच्छाश्रमं प्रति ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
॥ ९३ ॥ आश्रमवासपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[ अस्मिन्नध्याये २२॥ श्लोकाः ]

## ॥ सप्तमोऽध्यायः ॥

वनं यियासुना धृतराष्ट्रेण युधिष्ठिराय राजनीत्युपदेशः ॥ १ ॥

वैशम्पायनः—

ततो राज्ञाऽभ्यनुज्ञातो धृतराष्ट्रो महामनाः ।
ययौ स्वभवनं राजा गान्धार्याऽनुगतस्तदा ॥ १

[1]मन्दप्राणगतिर्धीमान् कृच्छ्रादिव समुद्धरन् ।
पदातिस्स महीपालो जीर्णो गजपतिर्यथा ॥ २

[2]तमन्वगच्छद्विदुरो विद्वान् सूतश्च सञ्जयः ।
स चैव परमेष्वासः कृपश्शारद्वतस्तदा ॥ ३

[3]प्रविश्य च गृहं राजा कृतपूर्वाह्णिकक्रियः ।
तर्पयित्वा द्विजश्रेष्ठान् आहारमकरोत् तदा ॥ ४

गान्धारी चैव धर्मज्ञा कुन्त्या सह मनस्विनी ।
वधूभिरुपचारेण पूजिताऽभुङ्क्त भारत ॥ ५

कृताहारं कृताहारास् सर्वे ते विदुरादयः ।
पाण्डवाश्च कुरुश्रेष्ठम् उपातिष्ठन्त भारत ॥ ६

ततोऽब्रवीन्महाराजः कुन्तीपुत्रमुपह्वरे ।
निषण्णं पाणिना पृष्ठे संस्पृशन्नम्बिकासुतः ॥ ७

धृतराष्ट्रः—

अप्रमादस्त्वया कार्यस् सर्वथा कुरुनन्दन ।
अष्टाङ्गे राजशार्दूल राज्ये धर्मपुरस्कृते ॥ ८

ननु शक्यं यथा तात रक्षितुं पाण्डुनन्दन ।
राज्यं धर्मं च कौन्तेय विद्वानसि निबोध तत् ॥ ९

विद्यावृद्धान् सदैव त्वम् उपासीथा युधिष्ठिर ।

---

1. ख-घ—अर्धचतुष्टयं नास्ति 2. क—अर्धद्वयं नास्ति
3. ख—इदमर्धं नास्ति

शृणुयास्ते हि यद्ब्रूयुः कुर्याश्चैवाविचारयन् ॥ १०

प्रातरुत्थाय तान् राजन् पूजयित्वा यथाविधि ।
कृच्छ्रकाले समुत्पन्ने पृच्छेथाः कार्यमात्मनः ॥ ११

ते सुसम्मानिता राजंस् त्वया राज्ये हितार्थिना ।
प्रवक्ष्यन्ति हितं तात सर्वं कौरवनन्दन ॥ १२

इन्द्रियाणि च सर्वाणि राज्यवत् परिपालय ।
हिताय वै भविष्यन्ति रक्षितं द्रविणं यथा ॥ १३

अमात्यानुपधातीतान् पितृपैतामहाञ्छुचीन् ।
दान्तान् कर्मसु सर्वेषु मुख्यान् मुख्येषु योजय ॥ १४

साधयेथाश्च सततं चारैरविदितैः परान् ।
परीक्षितैर्बहुविधैस् स्वराष्ट्रेषु परेषु च ॥ १५

पुरं च ते सुगुप्तं स्याद् दृढप्राकारतोरणम् ।
अट्टाट्टालकसम्बाधं षट्पदं सर्वतो दिशम् ॥ १६

तस्य द्वाराणि कार्याणि पर्याप्तानि बृहन्ति च ।
सर्वतस्सुविभक्तानि यन्त्रैरारक्षितानि च ॥ १७

पुरुषैरर्थतत्त्वज्ञैर् विदितैः कुलशीलतः ।
आत्मा च रक्ष्यस्सततं भोजनादिषु भारत ॥ १८
विहारादिषु सर्वेषु माल्यशय्यासनेषु च ॥ १८॥

स्त्रियश्च ते सुगुप्तास्स्युर् वृद्धैराप्तैर्युधिष्ठिर ।

[1]शीलवद्भिः कुलीनैश्च विद्वद्भिश्च युधिष्ठिर ॥ १९॥

मन्त्रिणश्चैव कुर्वीथा द्विजान् विद्याविशारदान् ।
विनीतांश्च कुलीनांश्च धर्मार्थकुशलानृजून् ॥ २०॥

तैस्सार्धं मन्त्रयेथास्त्वं नात्यर्थं बहुभिस्सह ।
समस्तैरपि च व्यस्तैर् व्यपदेशेन केनचित् ॥ २१॥

[2]सुसंवृतं मन्त्रगृहं सौधं चारुह्य मन्त्रयेत् ।
अरण्ये [3]निश्शलाके वा न च रात्रौ कदाचन ॥ २२॥

वानराः पक्षिणश्चैव ये मनुष्यानुकारिणः ।
सर्वे मन्त्रगृहे वर्ज्या ये चापि जडपङ्गवः ॥ २३॥

मन्त्रभेदे च ये दोषा भवन्ति पृथिवीक्षिताम् ॥
न ते शक्यास्समाधातुं कथञ्चिदिति मे मतिः ॥ २४॥

दोषांश्च मन्त्रभेदेषु ब्रूयास्त्वं मन्त्रिमण्डले ।
अभेदे च गुणान् राजन् पुनः पुनररिन्दम ॥ २५॥

पौरजानपदानां च शौचाशौचे युधिष्ठिर ।
[4]यथा स्याद्विदितं राजंस् तथा कार्यं कुरूद्वह* ॥ २६॥

व्यवहाराश्च ते तात नित्यमाप्तैरनुष्ठिताः ।

---

1. क-घ—अर्धमिदं नास्ति
2. ग—अर्धषट्कं नास्ति    3. अ-ग—निशि काले वा ।
4. क-ख-ग—नास्तीदमर्धम् ।
* अ-क-ख-ग-घ—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

योज्यास्तुष्टैर्भृतै राजन् नित्यं चारैरनुष्ठितैः ॥ २७॥
परिमाणं विदित्वा च दण्डं दण्ड्येषु भारत ।
प्रणयेयुर्यथान्यायं पुरुषास्ते युधिष्ठिर ॥ २८॥
आदानरुचयश्चैव चरा ये भीमदर्शनाः ।
उग्रदण्डप्रधानाश्च मिथ्याव्याहारिणस्तथा ॥ २९॥
क्रोष्टारश्चैव लुब्धाश्च हन्तारस्साहसप्रियाः ।
हिंसाविहारभोक्तारो वर्णानां च प्रदूषकाः ॥ ३०॥
हिरण्यदण्ड्या वध्या वा कर्तव्या देशकालतः ॥ ३१
[1]अवरोधभूमौ भृत्यैश्च पानं सह विवर्जयेत् ।
आक्रोशन्त्यनुमत्तास्ते कलत्रं वाऽपि गृह्णते ॥ ३२
जिघांसन्त्यपि शस्त्रेण नष्टाः क्रीडन्ति घोत्कटाः ।
नानाक्षेपा व्याहरन्ति गम्यागम्यं न जानते ॥ ३३
अतिपानेन राजाऽपि सर्वं कोशं विनाशयेत् ।
वितरेद्गायकेभ्यश्च वृथा च द्रव्यसञ्चयम् ॥ ३४
शब्दमात्मनि दोषांश्च पिबेदेकश्च जायया ।
युक्त्या प्रकाशमयति सुवीर्यस्य विवृद्धये ॥ ३५
[2]प्रातरन्यांश्च पश्येथा ये कुर्युः प्रियकर्म ते ।

---

1. अर्धाष्टकं अ-क-ख-ग-घ—कोशेषु नोपलभ्यते । परं तु कक्षाकक्षार-कारैः व्याख्यायते । औत्तराहपाठेषु च नाद्रियते ॥

2. क-ख-ग-घ—इदमर्धं नास्ति

अलङ्कारमथो भोज्यम् अत ऊर्ध्वं समाचर ॥ ३६

पश्येथाश्च ततो योधान् सततं परिहर्षयन् ।
दूतानां च चराणां च प्रदोषस्ते सदा भवेत् ॥ ३७

सदा चापररात्रान्ते भवेत् कार्यविनिर्णयः ।
मध्यरात्रे विहारस्ते मध्याह्ने च सदा भवेत् ॥ ६८

सर्वे त्वात्ययिके कालाः कार्याणां भरतर्षभ ।
तथैव चाचरन् काले तिष्ठेथा भूरिदक्षिणः ॥ ३९

चक्रवत् कर्मणां तात पर्यायो ह्येष नित्यशः ॥ ३९॥

कोशस्य सञ्चये यत्नं कुर्वीथा न्यायतस्सदा ।
विविधस्य महाराज विपरीतं विवर्जयेत् ॥ ४०॥

चारैर्विदित्वा शत्रूंश्च ये ते राज्यान्तरायिणः ।
तानाप्तैः पुरुषैर्दूराद् घातयेथाः परस्परम् ॥ ४१॥

कर्म दृष्ट्वा ततोऽमात्यान् सङ्गृह्णीयाः कुरूद्वह ।
कामयेथाश्च कर्माणि युक्तायुक्तैरनुष्ठितैः ॥ ४२॥

सेनाप्रणेता च भवेत् तव तात दृढव्रतः ।
शूरः क्लेशसहश्चैव प्रियश्च तव मानवः ॥ ४३॥

[1]सर्वे जनपदाश्चैव तव कर्माणि पाण्डव ।
पौरोगवाश्च सभ्याश्च कुर्युर्यानविहारिणः ॥ ४४॥

---

1. अ—इदमर्धं नास्ति

स्वरन्ध्रं पररन्ध्रं च स्वेषु चैव परेषु च ।
उपलक्षयितव्यं ते नित्यमेव युधिष्ठिर ॥　४५॥

देशान्तरस्थाश्च नरा विक्रान्तास्सर्वकर्मसु ।
यात्राभिरनुरूपाभिर् अनुग्राह्या हितास्त्वया ॥　४६॥

गुणानुसम्मतं कार्यं विदुषां राजसत्तम ।
अविचाल्यश्च देशस्स्याद् यथा मेरुर्महागिरिः ॥　४७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

॥ ९३ ॥ आश्रमवासपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[ अस्मिन्नध्याये ४७॥ श्लोकाः ]

---

## ॥ अष्टमोऽध्यायः ॥

धृतराष्ट्रेण युधिष्ठिरं प्रति राजनीतिकथनम् ॥ १ ॥

---

धृतराष्ट्रः—

मण्डलानि च बुध्येथाः परेषामात्मनस्तथा ।
उदासीनगुणानां च मध्यमानां तथैव च ॥　१

चतुर्णां शत्रुजातानां सर्वेषामाततायिनाम् ।
मित्रं चामित्रमित्रं च बोद्धव्यं शत्रुकर्शन ॥　२

तथाऽमात्या जनपदा दुर्गाणि विविधानि च ।

कुरुश्रेष्ठ भवन्त्येषां यथादेशं यथास्वकम् ॥ ३

ते च द्वादश कौन्तेय राजानो विविधात्मकाः ।
मन्त्रप्रधानाश्च गुणाष् षष्टिर्द्वादश च स्मृताः ॥ ४

एतन्मण्डलमित्याहुर् आचार्या नीतिकोविदाः ।
अत्र षाड्गुण्यमायत्तं युधिष्ठिर निबोध तत् ॥ ५

वृद्धिक्षयौ च [1]विज्ञेयौ स्थानं च कुरुनन्दन ।
द्विसप्तत्या महाबाहो ततष्षाड्गुण्यचारिणा ॥ ६

यथा स्वपक्षो बलवान् परपक्षस्तथाऽवरः ।
विगृह्य शत्रून् कौन्तेय यायात् क्षितिपतिस्तदा ॥ ७

यदा स्वपक्षस्त्ववरस् तदा सन्धिं समाश्रयेः ।
द्रव्याणां सञ्चये चैव यत्नः कार्यस्तदा भवेत् ॥ ८

[2]यदा समर्थो यानाय नचिरेण च भारत ।
तदा सर्वं विधातव्यं स्थाने चैव विधायकः ॥ ९

भूमिरल्पफला देया विपरीतस्य भारत ॥ ९॥

हिरण्यरूप्यभूयिष्ठम् अमित्रं क्षीणकोशवत् ।
विपरीतं न गृह्णीयात् स्वयं सन्धिविशारदः ॥ १०॥

सख्यार्थं राजपुत्रं वा लिप्सेथा भरतर्षभ ।
विपरीते कृते देयः पुत्रः कस्याञ्चिदापदि ॥ ११॥

---

1. ग—विज्ञेयौ यत्नः कार्यस्तदा भवेत् । मध्ये अर्धपञ्चकं नास्ति
2. अ-क—समर्थं चैव जनयन्नचिरेण ख-म—स्वमर्थं चैव जनयन्

तस्य प्रमोक्षे यत्नं च कुर्यास्सोपायमात्मवत् ।
प्रकृतीनां च कौन्तेय राजा दीनान् विभावयेत् ॥　१२॥
क्रमेण युगपद्वद्धं व्यसनानां बलाबलम् ।
पीडनं स्तम्भनं चैव कोशभङ्गस्तथैव च ॥　१३॥
कार्यं यत्नेन शत्रूणां स्वराष्ट्रं रक्षता स्वयम् ॥　१४
न च हिंस्योऽभ्युपगतस् सामन्तो वृद्धिमिच्छता ।
कौन्तेय तद्धितं ते स्यात् पृथिवीं विजिगीषतः ॥　१५
गुणाभेदेन वै योगं गच्छेथास्सह मन्त्रिभिः ।
आत्मसात्करणे नित्यं पालनानि गृहे तथा ॥　१६
दुर्बलाश्चैव सततं नावष्टभ्या बलीयसा ।
तिष्ठेथा राजशार्दूल वैतसीं वृत्तिमाश्रितः ॥　१७
यद्येवमभियायास्त्वं बलवान् दुर्बलं नृप ।
सामादिभिरुपायैस्तं क्रमेण विनिवर्तय ॥　१८
अशक्नुवंस्तु युद्धाय निष्पतेस्सह मन्त्रिभिः ।
कोशेन पौरैर्दण्डेन ये चान्ये प्रियकारिणः ॥　१९
असम्भवे तु सर्वस्य यथा मुख्येन निष्पतेत् ।
क्रमेणानेन मोक्षस्स्याच्छरीरमपि केवलम् ॥　२०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
॥ ९३ ॥ आश्रमवासपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[ अस्मिन्नध्याये २० श्लोकाः ]

## ॥ नवमोऽध्यायः ॥

### धृतराष्ट्रेण युधिष्ठिरं प्रति राजनीतिकथनम् ॥ १ ॥

धृतराष्ट्रः—

सन्धिविग्रहमप्यत्र पश्येथा राजसत्तम ।
द्वियोनिं त्रिविधोपायं बहुकल्पं युधिष्ठिर ॥ १

राजेन्द्र पर्युपासीथा नीत्वा द्विविधमात्मना ।
तुष्टपुष्टजनश्शत्रुर् अर्थवानिति च स्मरेत् ॥ २

पर्युपासनकाले तु विपरीतं विधीयते ।
आमर्दकाले राजेन्द्र व्यवसायस्ततोऽपरः ॥ ३

वमनं भेदनं चैव शत्रूणां कारयेत् ततः ।
कर्षणं भीषणं चैव युद्धे चैव बहुक्षयम् ॥ ४

प्रयास्यमानस्तु पुनस् त्रिविधं परिचिन्तयेत् ।
आत्मनश्चैव शत्रोश्च शक्तिं शास्त्रविशारदः ॥ ५

उत्साहप्रभुशक्तिभ्यां मन्त्रशक्त्या च भारत ।
उपपन्नो नृपो यायाद् विपरीतमतोऽन्यथा ॥ ६

आददीत बलं राजा मौलं मित्रबलं तथा ।
अटवीबलं भृतं चैव तथा श्रेणीबलं च यत् ॥ ७

बन्धुमित्रबलं राजन् मौलेन च विशिष्यते ।

श्रेणीबलं प्राकृतं च तुल्यं तेनैव भारत ॥ ८

चोराटविबलं चैव परस्परबलं नृप ।
विज्ञेयं बलकालेषु राज्ञा काल उपस्थिते ॥ ९

आपदश्चैव बोद्धव्या बहुरूपा नराधिप ।
भवन्ति राजन् कौरव्य यास्ताः प्रथमतश्शृणु ॥ १०

विकल्पा बहवो राजन्नापदां पाण्डुनन्दन ।
सामादिभिरुपन्यस्य गमयेत् तान् नृपस्सदा ॥ ११

यात्रां यायाद्बलैर्युक्तो राजा षड्भिः परन्तप ।
संयुक्तो देशकालाभ्यां बलैरात्मगुणैस्तथा ॥ १२

तुष्टपुष्टबलो राजा यायाद्वृद्ध्युदये धृतः ।
आहूतश्चाप्यथो यायाद् विवृतेन हि पार्थिव ॥ १३

अन्वागतां वाजिरथप्रधानो
महावृक्षां संवृतः कूलरोधाम् ।
पदातिना तैर्बहुकर्दमां च
स्थूलाश्मकां तोयवतीं च यायात् ॥ १४

अथोपपत्त्या शकटं वज्रं चक्रं च भारत ।
उशना वेद यच्छास्त्रं तत्रैतद्विहितं विभो ॥ १५

साधयित्वा परबलं कृत्वा च बलमर्षणम् ।
स्वभूमौ योजयेद्युद्धं परभूमौ तथैव च ॥ १६

लब्धं प्रशमयेद्राजा निक्षिपेद् धनिनो नरान् ।
ज्ञात्वा सुविषयं तं च सामादिभिरुपक्रमात् ॥ १७

सर्वमेतन्महाराज शरीरं धारयेदिह ।
प्रेत्यैव चेह कर्तव्यम् आत्मनिःश्रेयसं परम् ॥ १८

एवं कुर्वञ्शुभाचारो लोकेऽस्मिञ्शृणु ते नृप ।
प्रेत्य स्वर्गं तथाऽऽप्नोति प्रजा धर्मेण पालयन् ॥ १९

एवं त्वया कुरुश्रेष्ठ वर्तितव्यं प्रजासु वै ।
उभयोर्लोकयोस्तात प्राप्तये नित्यमेव च ॥ २०

भीष्मेण पूर्वमुक्तोऽसि कृष्णेन विदुरेण च ।
मयाऽप्यवश्यं वक्तव्यं प्रीत्या स्नेहेन चाभिभो ॥ २१

एतत् सर्वं यथान्यायं कुर्वीथा भूरिदक्षिणः ।
प्रियं प्रजानां धर्मज्ञ स्वर्गं सुखमवाप्स्यसि ॥ २२

अश्वमेधसहस्रेण यो यजेत् पृथिवीपतिः ।
पालयेद्वाऽपि धर्मेण प्रजास्तुल्यं फलं लभेत् ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आश्रमवासिकपर्वणि नवमोऽध्यायः ॥ ९ ॥

॥ ९३ ॥ आश्रमवासपर्वणि नवमोऽध्यायः ॥ ९ ॥

[ अस्मिन्नध्याये २३ श्लोकाः ]

---

## ॥ दशमोऽध्यायः ॥

धृतराष्ट्रेण युधिष्ठिरात् सकलपौरजनानयनेन स्वस्य वनजिगमिषा-निवेदनपूर्वकं तान् प्रति तदभ्यनुज्ञानप्रार्थना ॥ १ ॥

युधिष्ठिरः—

एवमेतत् करिष्यामि यथाऽऽत्थ पृथिवीपते ।
भूयश्चैवानुशास्योऽहं भवता पार्थिवर्षभ ॥ १

भीष्मे स्वर्गमनुप्राप्ते गते च मधुसूदने ।
विदुरे सञ्जये चैव कोऽन्यो मां वक्तुमर्हति ॥ २
यस्तु मामनुशास्त्येवं भवानद्य हिते स्थितः ।
कर्तास्मि तन्महीपाल निर्वृतो भव भारत ॥ ३

वैशम्पायनः—

एवमुक्तस्स राजर्षिर् धर्मराजेन भारत ।
कौन्तेयं समनुज्ञातुम् इयेष भरतर्षभ ॥ ४

धृतराष्ट्रः—

पुत्र विश्राम्यतां तावन्ममापि बलवाञ्छ्रमः ॥ ४॥

वैशम्पायनः—

इत्युक्त्वा प्राविशद्राजा गान्धार्या भवनं तदा ॥ ५

तमासनगतं देवी गान्धारी धर्मचारिणी ।
उवाच काले कालज्ञा प्रजापतिसमं पतिम् ॥ ६

गान्धारी—

अनुज्ञातस्स्वयं तेन व्यासेनापि महर्षिणा ।
युधिष्ठिरस्यानुमते कदाऽरण्यं गमिष्यसि ॥ ७

धृतराष्ट्रः—

गान्धार्यहमनुज्ञातस् स्वयं पित्रा महात्मना ।
युधिष्ठिरस्यानुमतेर् गन्तास्मि नचिरादिव ॥ ८

अहं तु तव पुत्राणां तेषां दुर्द्यूतदेविनाम् ।
सर्वेषां दातुमिच्छामि प्रेत्यभावानुगं वसु ॥ ९
सर्वप्रकृतिसान्निध्यं कारयित्वा स्ववेश्मनि ॥ ९॥

वैशम्पायनः—

इत्युक्त्वा प्रेषयामास धर्मराजाय पार्थिव ।
स च तद्वचनात् सर्वं समानिन्ये महीपतिः ॥ १०॥

ततो निष्क्रम्य नृपतिस् तस्मादन्तःपुरात् तदा ।
सर्वं सुहृज्जनं चैव सर्वाः प्रकृतयस्तथा ॥ ११॥

समवेतांश्च तान् सर्वान् पौरजानपदानथ ।
ब्राह्मणांश्च महीपालान् नानादेशसमागतान् ॥ १२॥

ततः प्राह महातेजा धृतराष्ट्रो महीपतिः ॥ १३

क्षत्रियाश्चैव वैश्याश्च शूद्राश्चैव समागताः ॥ १४

भवन्तः कुरवश्चैव बहुकालं सहोषिताः ।
परस्परस्य सुहृदः परस्परहिते रताः ॥ १५

यदिदानीमहं ब्रूयाम् अस्मिन् काल उपस्थिते ।
तथा भवद्भिः कर्तव्यम् अविचार्य वचो मम ॥ १६

अरण्यगमने बुद्धिं गान्धारीसहितस्य मे ।
व्यासस्यानुमते राज्ञस् तथा कुन्तीसुतस्य च ॥ १७
भवन्तोऽप्यनुजानन्तु मा वो भूयाद्विचारणा ॥ १७॥

अस्माकं भवतां चैव येयं प्रीतिर्हि शाश्वती ।
न चान्येष्वपि देशेषु राज्ञामिति मतिर्मम ॥ १८॥

श्रान्तोऽस्मि वयसाऽनेन तथा पुत्रैर्विनाकृतः ।
उपवासकृशश्चास्मि गान्धारीसहितोऽनघः ॥ १९॥

युधिष्ठिरगते राज्ये प्राप्तश्चास्मि फलं महत् ।
मन्ये दुर्योधनैश्वर्याद् विशिष्टं बहुभिर्गुणैः ॥ २०॥

मम त्वन्धस्य वृद्धस्य हतपुत्रस्य का गतिः ।
ऋते वनं महाभागास् तदनुज्ञातुमर्हथ ॥ २१॥

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा सर्वे ते कुरुजाङ्गलाः ।
बाष्पसन्दिग्धवचना रुरुदुर्भरतर्षभ ॥ २२॥

तांस्त्वविब्रुवतः किञ्चिद् दुःखशोकपरायणान् ।
पुनरेव महाराजो धृतराष्ट्रोऽब्रवीदिदम् ॥ २३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि दशमोऽध्यायः ॥ १० ॥

॥ ९३ ॥ आश्रमवासपर्वणि दशमोऽध्यायः ॥ १० ॥

[ अस्मिन्नध्याये २३॥ श्लोकाः ]

---

## ॥ एकादशोऽध्यायः ॥

---

धृतराष्ट्रेण पौरान् प्रति दुर्योधनपक्षपातेन स्वकृतापनयक्षमापणम् ॥ १ ॥ तथा युधिष्ठिरस्य तेषु न्यासतया समर्पणपूर्वकं स्वस्य वनगमनाभ्यनुज्ञानप्रार्थना ॥ २ ॥

---

धृतराष्ट्रः—

शन्तनुः पालयामास यथावत् पृथिवीमिमाम् ।
तथा विचित्रवीर्यश्च भीष्मेण परिपालितः ॥ १
पालयामास वस्तातो विदितं वो न संशयः ॥ १॥
तथा च पाण्डुर्भ्राता मे दयितो भवतामभूत् ।
स चापि पालयामास यथावत् तच्च वेत्थ ह ॥ २॥
अनन्तरं हि पितरम् अनुजातो युधिष्ठिरः ।
नात्र किञ्चिन्मृषा जातु भवितेति मतिर्मम ॥ ३॥
यच्च दुर्योधनेनेदं भुक्तं राज्यमकण्टकम् ।

अपि तत्र न वो मन्दो दुर्बुद्धिरपराद्धवान् ॥ ४॥

तस्यापराधाद्दुर्बुद्धेर् अभिमानान्महीक्षिताम् ।
विमर्दस्सुमहानासीद् अनयश्चैव मत्कृते ॥ ५॥

घातिताः कौरवेयाश्च पृथिवी च विनाशिता ॥ ६

तन्मया साधु वाऽपीदं यदि वाऽसाधु वै कृतम् ।
तद्वो हृदि न कर्तव्यम् अनुज्ञातुमिहार्हथ ॥ ७

वृद्धोऽयं हतपुत्रोऽयं दुःखितोऽयं जनाधिपः ।
पूर्वराज्ञां च पुत्रोऽयम् इति कृत्वाऽनुजानत ॥ ८

इयं च कृपणा वृद्धा हतपुत्रा तपस्विनी ।
गान्धारी पुत्रशोकार्ता तुल्यं याचति वो मया॥ ९

हतपुत्राविमौ वृद्धौ विदित्वा दुःखितौ तथा ।
अनुजानीत भद्रं वो व्रजामि शरणं च वः ॥ १०

अयं च कौरवो राजा कुन्तीपुत्रो युधिष्ठिरः ।
सर्वैर्भवद्भिर्द्रष्टव्यस् समेषु विषमेषु च ॥ ११
न जातु विषमं चैव गमिष्यति कदाचन ॥ ११॥

चत्वारस्सचिवा यस्य भ्रातरो विपुलौजसः ।
लोकपालोपमा ह्येते धर्माधर्मार्थदर्शिनः ॥ १२॥

चतुर्णां लोकपालानां मध्ये विपरिवर्तते ।
ब्रह्मेव भगवान् देवस् सर्वभूतजगत्पतिः ॥ १३॥

एवमेव महाबाहुर् भीमार्जुनयमैर्वृतः ।
युधिष्ठिरो महातेजा भवतः पालयिष्यति ॥ १४॥

अवश्यमेव वक्तव्यम् इति कृत्वा ब्रवीमि वः ।
एष न्यासो मया दत्तस् सर्वेषां वो युधिष्ठिरः ॥ १५॥
भवन्तो ह्यस्य धीरस्य न्यासभूता मया कृताः ॥ १६

[1]यद्येवं तैः कृतं किञ्चिद् व्यलीकं वा सुतैर्मम ।
यद्यन्येन मदीयेन तदनुज्ञातुमर्हथ ॥ १७

भवद्भिर्हि न मे मन्युः कृतपूर्वः कदाचन ।
अत्यन्तगुरुभक्तानाम् एषोऽञ्जलिरिदं नमः ॥ १८

तेषामपि विबुद्धीनां लुब्धानां कामचारिणाम् ।
कृते याचामि वस्सर्वान् गान्धारीसहितो द्विजाः ॥ १९

वैशम्पायनः—

इत्युक्तास्तेन राज्ञा ते पौरजानपदा जनाः ।
[2]नोचुर्बाष्पकलाः किञ्चिद् वीक्षाञ्चक्रुः परस्परम् ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि एकादशोऽध्यायः ॥ ११ ॥

॥ ९३ ॥ आश्रमवासपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[ अस्मिन्नध्याये २० श्लोकाः ]

---

1. ख—इदमर्धं नास्ति
2. क—वृद्धेन राज्ञा कौरव्य नष्टसंज्ञा इवाभवन् । [ अधिकः पाठः ]

## ॥ द्वादशोऽध्यायः ॥

पौरजनैर्ब्राह्मणमुखेन धृतराष्ट्रं प्रति समाश्वासनपूर्वकं कृष्णेन वनगमनाभ्यनुज्ञानम् ॥ १

वैशम्पायनः—

एवमुक्तास्तु ते तेन पौरजानपदा जनाः ।
वृद्धेन राज्ञा कौरव्य नष्टसंज्ञा इवाभवन् ॥ १

तूष्णीम्भूतांस्ततस्तांस्तु बाष्पकण्ठान् महीपतिः ।
धृतराष्ट्रो महीपालः पुनरेवाभ्यभाषत ॥ २

धृतराष्ट्रः—

वृद्धया हतपुत्र्या च धर्मपत्न्या सहानया ।
विलपन्तं बहुविधं कृपणं चैव सत्तमाः ॥ ३

पित्रा चैवाभ्यनुज्ञातं कृष्णद्वैपायनेन वै ।
वनवासाय धर्मज्ञा धर्मज्ञेन नृपेण च ॥ ४

सोऽहं पुनः पुनर्याचे शिरसा च नतोऽनघाः ।
गान्धारीसहितं तस्मात् समनुज्ञातुमर्हथ ॥ ५

वैशम्पायनः—

श्रुत्वा तु कुरुराजस्य वाक्यानि करुणानि ते ।
रुरुदुस्सर्वतो राजन् समेताः कुरुजाङ्गलाः ॥ ६

उत्तरीयैः करैश्चापि सञ्छाद्य वदनानि ते ।

कुरवश्शोकसन्तप्ता मुहूर्तं पितृमातृवत् ॥ ७

हृदयैश्शून्यभूतैस्ते धृतराष्ट्रप्रवासजम् ।
[1]दुःखं सन्धारयन्ति स्म नष्टसंज्ञास्समाहिताः ॥ ८

ते विनीय तमायासं कुरुराजवियोगजम् ।
शनैश्शनैस्तदाऽन्योन्यम् अब्रुवन् स्वमतान्युत ॥ ९

ततस्सञ्चिन्त्य ते सर्वे वाक्यान्यथ समासतः ।
एकस्मिन् ब्राह्मणे कार्यम् आवेश्योचुर्नराधिपम् ॥ १०

ततस्स्वे चरणे वृद्धस् सम्मतोऽर्थविशारदः ।
शाकल्यो बह्वृचो राजन् वक्तुं समुपचक्रमे ॥ ११

अनुमान्य महाराजं सदस्समनुभाष्य च ।
विप्रः प्रगल्भो मेधावी स राजानमुवाच ह ॥ १२

शाकल्यः—

राजन् वाक्यं जनस्यास्य मयि सर्वं समर्पितम् ।
वक्ष्यामि तदहं वीर तज्जुषस्व नराधिप ॥ १३

यथा वदसि राजेन्द्र सर्वमेतत् तथा विभो ।
[2]नात्र मिथ्या वचः किञ्चित् सुहृदश्च परस्परम् ॥ १४

न जात्वस्य तु वंशस्य राज्ञां कश्चित् कदाचन ।
राजाऽऽसीद्यः प्रजापालः प्रजानां न प्रियोऽभवत् ॥ १५

---

1. ख—अर्धचतुष्टयं नास्ति
2. ग—इत आरभ्य पञ्चाशश्लोकपर्यन्तश्लोका न दृश्यन्ते

पितृवन्मातृवच्चैव भवन्तः पालयन्ति नः ।
न च दुर्योधनः किञ्चिद् अयुक्तं कृतवान् नृप ॥    १६

प्रियाणि कुर्वन् सर्वेषाम् अनुवृत्त्यर्थमुद्यतः ।
यथाऽब्रवीत्तु धर्मज्ञो मुनिस्सत्यवतीसुतः ॥    १७

तथा कुरु महाराज स हि नः परमो गुरुः ॥    १७॥

त्यक्ता वयं तु भवता दुःखशोकपरायणाः ।
भविष्यामश्चिरं राजन् भवद्गुणशतैर्हृताः ॥    १८॥

यथा शन्तनुना गुप्ता राज्ञा चित्राङ्गदेन च ।
भीष्मवीर्योपगूढेन पित्रा च तव पार्थिव ॥    १९॥

भवद्बुद्धियुजा चैव पाण्डुना पृथिवीक्षिता ।
तथा दुर्योधनेनापि राज्ञा स्म परिपालिताः ॥    २०॥

न नस्सोऽण्वपि पुत्रस्ते व्यलीकं कृतवान् नृप ॥    २१

पितरीव सुविश्वस्तास् तस्मिन्नपि नराधिपे ।
वयमास्म यथा सम्यग् भवतो विदितं तथा ॥    २२

तथा वर्षसहस्राणि कुन्तीपुत्रेण धीमता ।
पाल्यमाना धृतिमता सुखं विन्दामहे नृप ॥    २३

राजर्षीणां पुराणानां भवतां पुण्यकर्मणाम् ।
कुरुसंवरणादीनां भरतस्य च धीमतः ॥    २४

वृत्तं समनुयात्येष धर्मात्मा भूरिदक्षिणः ॥    २४॥

नात्र वाच्यं महाराज सुसूक्ष्ममपि विद्यते ॥ २५

उषितास्स्म सुखं नित्यं भवता परिपालिताः ।
सुसूक्ष्मं च व्यलीकं ते सपुत्रस्य न विद्यते ॥ २६

यत्तु ज्ञातिविमर्देऽस्मिन्नात्थ दुर्योधनं प्रति ।
भवन्तमनुनेष्यामि तत्रापि कुरुनन्दन ॥ २७

न तद्दुर्योधनकृतं न च तद्भवता कृतम् ।
न कर्णसौबलाभ्यां च कुरवो यत् क्षयं गताः ॥ २८

दैवं तत्तु विजानीमो यन्न शक्यं प्रबाधितुम् ।
दैवं पुरुषकारेण न शक्यमपि बाधितुम् ॥ २९

अक्षौहिण्यो महाराज दशाष्टौ च समागताः ।
अष्टादशाहेन हता दशभिर्योधपुङ्गवैः ॥ ३०

भीष्मद्रोणकृपै राजन् कर्णेन च महात्मना ।
युयुधानेन वीरेण धृष्टद्युम्नेन चाहवे ॥ ३१

चतुर्भिः पाण्डुपुत्रैश्च भीमार्जुनयमैर्नृप ।
जनक्षयोऽयं नृपते कृतो दैवबलात्कृतैः ॥ ३२

[1]अवश्यमेव सङ्ग्रामे क्षत्रियेण विशेषतः ।
कर्तव्यं निधनं लोके क्षत्रेण हतबन्धुना ॥ ३३

यैरियं पुरुषव्याघ्रैर् विद्याबाहुबलान्वितैः ।

---

1. क—अर्धश्लोकं नास्ति

पृथिवी निहता सर्वा सरथा सहयद्विपा ॥ ३४

[1]न च राजाऽपराध्नोति पुत्रस्तव महामनाः ।
न भवान् न च ते भृत्या न कर्णो न च सौबलः ॥ ३५

यद्विनष्टाः कुरुक्षेत्रे राजानश्च सहस्रशः ।
सर्वे दैवकृते यद्वै कोऽत्र किं वक्तुमर्हति ॥ ३६

गुरुर्मतो भवानस्य कृत्स्नस्य जगतः प्रभुः ।
धर्मात्मानमतस्तुभ्यम् अनुजानीमहे सुतम् ॥ ३७

लभतां वीरलोकं स ससहायो नराधिपः ।
द्विजाग्र्यैस्समनुज्ञातस् त्रिदिवे मोदतां सुखम् ॥ ३८

प्राप्स्यते च भवान् पुण्यं धर्मेण सततं स्थितः ।
वेद धर्मं महाबाहो लौक्यं वैदिकमेव च ॥ ३९

दृष्टापदानाश्चास्माभिः पाण्डवाः पुरुषर्षभाः ।
समर्थास्त्रिदिवस्यापि पालने किं पुनः क्षितेः ॥ ४०

अनुवत्स्यन्ति कौरव्यस् समेषु विषमेषु च ।
प्रजाः कुरुकुलश्रेष्ठ पाण्डवाञ्शीलभूषणान् ॥ ४१

ब्रह्मदेयाग्रहारांश्च परिहारांश्च पार्थिवः ।
पूर्वराजनिसर्गांश्च पालयत्येव पाण्डवः ॥ ४२

दीर्घदर्शी कृतप्रज्ञस् सदा वैश्रवणो यथा ।

---

1. ख-घ—अर्धचतुष्टयं नास्ति

अक्षुद्रसचिवश्चायं कुन्तीपुत्रो महामनाः ॥ ४३

अप्यमित्रे दयावांश्च शुचिश्च भरतर्षभ ।
ऋजुः पश्यति मेधावी पुत्रवत् पाति नस्सदा ॥ ४४

विप्रियं च जनस्यास्य संसर्गाद् धर्मजस्य वै ।
न करिष्यन्ति राजर्षे तथा भीमार्जुनादयः ॥ ४५

मन्दा मृदुषु कौरव्यास् तीक्ष्णेष्वाशीविषोपमाः ।
वीर्यवन्तो महात्मानः पौराणां च हिते रताः ॥ ४६

न कुन्ती न च पाञ्चाली न चोलूपी न सात्वती ।
अस्मिञ्जने करिष्यन्ति प्रतिकूलानि कर्हिचित् ॥ ४७

भवत्कृतमिदं स्नेहं युधिष्ठिरविवर्धितम् ।
न पृष्ठतः करिष्यन्ति पौरजानपदा जनाः ॥ ४८

अधर्मिष्ठानपि सतः कुन्तीपुत्रा महारथाः ।
मानवान् पालयिष्यन्ति भूत्वा धर्मपरायणाः ॥ ४९

स राजन् मानसं दुःखम् अपनीय युधिष्ठिरात् ।
कुरु कार्याणि धर्म्याणि नमस्ते भरतर्षभ ॥ ५०

वैशम्पायनः—

तस्य तद्वचनं धर्म्यम् अनुमान्य गुणोत्तरम् ।
साधु साध्विति सर्वस्स जनः प्रतिगृहीतवान् ॥ ५१

धृतराष्ट्रस्तु तद्वाक्यम् अभिपूज्य पुनः पुनः ।

विसर्जयामास तदा सर्वास्तु प्रकृतीश्शनैः ॥ ५२

स तैस्सम्पूजितो राजा शिवेनावेक्षितस्तदा ।
प्राञ्जलिः पूजयामास तं जनं भरतर्षभ ॥ ५३

ततो विवेश भवनं गान्धारीसहितो नृपः ।
आगतायां च शर्वर्यां सुखं शेते नराधिपः ॥ ५४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
॥ ९३ ॥ आश्रमवासपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[ अस्मिन्नध्याये ५४ श्लोकाः ॥

---

## ॥ त्रयोदशोऽध्यायः ॥

---

धृतराष्ट्रेण भीष्मदुर्योधनादीनां श्राद्धदानाय विदुरमुखाद्युधिष्ठिरं प्रति धनयाचनम् ॥ १ ॥ तच्छ्रवणेन विमनायमाने भीमे तद्भावज्ञेनार्जुनेन तं प्रति द्रव्ययाचने भीमेन धृतराष्ट्रापनयानुस्मारणपूर्वकं तदनङ्गीकरणम् ॥ २ ॥

---

वैशम्पायनः—

व्युषितायां रजन्यां तु धृतराष्ट्रोऽम्बिकासुतः ।
[1]विदुरं प्रेषयामास युधिष्ठिरनिवेशनम् ॥ १

स गत्वा राजवचनाद् उवाचाच्युतमीश्वरम् ।
युधिष्ठिरं महातेजास् सर्वबुद्धिमतां वरः ॥ २

---

1. ख—अर्धचतुष्टयं नास्ति

विदुरः—

धृतराष्ट्रो महातेजा वनवासाय दीक्षितः ।
गमिष्यति वनं राजा कार्तिकीमागतामिमाम् ॥ ३

स त्वां कुरुकुलश्रेष्ठ किञ्चिदर्थमभीप्सति ।
श्राद्धमिच्छति दातुं स गाङ्गेयस्य महात्मनः ॥ ४

द्रोणस्य सोमदत्तस्य बाह्लीकस्य च धीमतः ।
पुत्राणां चैव सर्वेषां ये चान्ये सुहृदो हताः ॥ ५
यदि वाऽप्यनुजानीषे सैन्धवापशदस्य च ॥ ५॥

वैशम्पायनः—

एतच्छ्रुत्वा तु वचनं विदुरस्य युधिष्ठिरः ।
हृष्टस्सम्पूजयामास गुडाकेशश्च पाण्डवः ॥ ६॥

न तु भीमो दृढक्रोधस् तद्वचो जगृहे तदा ।
विदुरस्य महातेजा दुर्योधनकृतं स्मरन् ॥ ७॥

अभिप्रायं विदित्वा तु भीमसेनस्य फल्गुनः ।
किरीटी किञ्चिदानम्य भीमं वचनमब्रवीत् ॥ ८॥

अर्जुनः—

भीम राजा पिता वृद्धो वनवासाय दीक्षितः ।
दातुमिच्छति सर्वेषां सुहृदामौर्ध्वदैहिकम् ॥ ९॥

भवता निर्जितं वित्तं दातुमिच्छति कौरवः ।

भीष्मादीनां महाबाहो तदनुज्ञातुमर्हसि ॥ १०॥

दिष्ट्या त्वद्य महाबाहो धृतराष्ट्रः प्रयाचति ।
याचितोऽयं पुराऽस्माभिः पश्य कालस्य पर्ययम् ॥ ११॥

योऽसौ पृथिव्याः कृत्स्नाया भर्ता भूत्वा नराधिपः ।
परैर्विनिहतामात्यो वनं गन्तुमभीप्सति ॥ १२॥

मा तेऽन्यत् पुरुषव्याघ्र दानाद्भवतु दर्शनम् ।
अयशस्यमतोऽन्यत् स्याद् अधर्मश्च महाभुज ॥ १३॥

राजानमुपतिष्ठस्व ज्येष्ठं भ्रातरमीश्वरम् ।
अर्हस्त्वमसि दातुं वै नादातुं भरतर्षभ ॥ १४॥

वैशम्पायनः—

एवं ब्रुवाणं कौन्तेयं धर्मराजोऽभ्यपूजयत् ।
भीमसेनस्तु सक्रोधम् उवाच विजयं तदा ॥ १५॥

भीमः—

वयं भीष्मस्य कुर्मो हि प्रेतकार्याणि फल्गुन ।
सोमदत्तस्य नृपतेर् भूरिश्रवस एव च ॥ १६॥

बाह्लीकस्य च राजर्षेर् द्रोणस्य च महात्मनः ।
अन्येषां चैव सुहृदां कुन्ती कर्णाय दास्यति ॥ १७॥

श्राद्धानि पुरुषव्याघ्र मा दात् कौरवको नृपः ।
एवं ते वर्ततां बुद्धिर् मा वो नन्दन्तु शत्रवः ॥ १८॥

कष्टात् कष्टतरं यान्तु सर्वे दुर्योधनादयः ।
यैरियं पृथिवी सर्वा घातिता कुलपांसनैः ॥ १९॥

कुतस्त्वमद्य विस्मृत्य वैरं द्वादशवार्षिकम् ।
अज्ञातवासगमनं द्रौपदीशोकवर्धनम् ॥ २०॥

क्व तदा धृतराष्ट्रस्य स्नेहोऽस्मास्वभवत् तथा ।
कृष्णाजिनोपसंवीतो हृताभरणभूषणः ॥ २१॥

सार्धं पाञ्चालपुत्र्या त्वं राजानमुपजग्मिवान् ॥ २२

क्व तदा द्रोणभीष्मौ तौ सोमदत्तोऽपि वाऽभवत् ।
यत्र द्वादश वर्षाणि वने वन्येन जीवसि ॥ २३

न तदा त्वा पिता ज्येष्ठः पितृत्वेनाभिवीक्षति ॥ २३॥

किं नु तद्विस्मृतं तेऽद्य यदेष कुलपांसनः ।
दुर्वृत्तो विदुरं प्राह द्यूते किं जितमित्युत ॥ २४॥

वैशम्पायनः—

तमेवंवादिनं राजा कुन्तीपुत्रो युधिष्ठिरः ।
उवाच भ्रातरं धीमान् जोषमास्स्वेति भर्त्सयन् ॥ २५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

॥ ९३ ॥ आश्रमवासपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

[ अस्मिन्नध्याये २५॥ श्लोकाः ]

---

## ॥ चतुर्दशोऽध्यायः ॥

भीमे दुर्योधनादिभ्यः श्राद्धदानाय धनदानमरोचयति सति युधिष्ठिरेण विदुरं प्रति धृतराष्ट्रे निजगृहकोशाद्धनदाननिवेदनकथनम् ॥ १ ॥

---

अर्जुनः—

भीम ज्येष्ठो गुरुर्मे त्वं नातोऽन्यद्वक्तुमुत्सहे ।
धृतराष्ट्रोऽपि राजर्षिस् सर्वथा मानमर्हति ॥ १

न स्मरन्त्यपराद्धानि स्मरन्ति सुकृतानि च ।
असम्भिन्नार्थमर्यादास् साधवः पुरुषोत्तमाः ॥ २

युधिष्ठिरः—

इदं मद्वचनात् क्षत्तः कौरवं ब्रूहि पार्थिवम् ।
यावदिच्छति पुत्राणां दातुं तावद्ददाम्यहम् ॥ ३

भीष्मादीनां तु सर्वेषां सुहृदामुपकारिणाम् ।
मम कोशादिविभवे मा भूद्भीमस्सुदुर्मनाः ॥ ४

वैशम्पायनः—

इत्युक्त्वा धर्मराजस्तम् अर्जुनं प्रत्यपूजयत् ।
भीमसेनः कटाक्षेण वीक्षाञ्चक्रे धनञ्जयम् ॥ ५

ततस्स विदुरं धीमान् वाक्यमाह युधिष्ठिरः ॥ ५॥

युधिष्ठिरः—

न भीमसेने कोपं स नृपतिः कर्तुमर्हति ॥ ६

परिक्लिष्टो हि भीमस्तु हिमवातातपादिभिः ।

दुःखैर्बहुविधैर्धीमान् अरण्ये विदितं तव ॥ ७

किं तु मद्वचनाद्ब्रूहि राजानं भरतर्षभम् ।
यद्यदिच्छति यावच्च गृह्यतां मे गृहादिति ॥ ८

यन्मात्सर्यमयं भीमः करोति भृशदुःखितः ।
न तन्मनसि कर्तव्यम् इति वाच्यस्स पार्थिवः ॥ ९

यन्ममास्ति धनं किञ्चिद् अर्जुनस्य च वेश्मनि ।
तस्य स्वामी महाराज इति वाच्यश्च पार्थिवः ॥ १०

ददातु राजा विप्रेभ्यो यथेष्टं क्रियतामिति ।
पुत्राणां सुतरां चैव गच्छत्वानृण्यमद्य सः ॥ ११

[1]इदं चापि शरीरं मे तत्रायत्तं जनाधिप ।
धनानि चेति विद्धि त्वं क्षत्तर्नास्त्यत्र संशयः ॥ १२

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
॥ ९३ ॥ आश्रमवासपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[ अस्मिन्नध्याये १२ श्लोकाः ]

---

## ॥ पञ्चदशोऽध्यायः ॥

विदुरेण धृतराष्ट्रं प्रति युधिष्ठिरेण भीष्मादीनां श्राद्धदानाय धनदानाङ्गीकरणनिवेदनम् ॥ १ ॥

---

वैशम्पायनः—

एवमुक्तस्तु राज्ञा स विदुरो बुद्धिसत्तमः ।
धृतराष्ट्रमुपेत्यैवं वाक्यमाह यथार्थवत् १

---

1. ब—अर्धद्वयं नास्ति

विदुरः—

उक्तो युधिष्ठिरो राजा भवद्वचनमादितः ।
स च संश्रुत्य वाक्यं ते प्रशशंस महीपतिः ॥ २

बीभत्सुश्च महातेजा निवेदयति ते गृहान् ।
वसु तच्च गृहे यच्च प्राणानपि च केवलान् ॥ ३

धर्मराजस्तु पुत्रस्ते राज्यं प्राणान् धनानि च ।
अनुजानाति राजर्षे यच्चान्यदपि किञ्चन ॥ ४

भीमस्तु सर्वदुःखानि संस्मृत्य बहुलान्युत ।
कृच्छ्रादिव महाबाहुर् अनुजज्ञे विनिश्श्वसन् ॥ ५

स राज्ञा धर्मशीलेन भ्रात्रा बीभत्सुना तथा ।
अनुनीतो महाबाहुस् सौहृदे स्थापितोऽपि च ॥ ६

न च मन्युस्त्वया कार्य इति त्वां प्राह धर्मराट् ।
संस्मृत्य भीमस्तद्वैरं यदन्यायवदाचरेत् ॥ ७

एवम्प्रायो हि धर्मोऽयं क्षत्रियाणां नराधिप ।
युद्धेन क्षत्रधर्मेण निरतोऽयं वृकोदरः ॥ ८

वृकोदरकृते चाहम् अर्जुनश्च पुनः पुनः ।
प्रसादयाव नृपते भवान् प्रभुरिहास्ति यः ॥ ९

प्रददातु भवान् वित्तं यावदिच्छति पार्थिव ।
त्वमीश्वरो नो राज्यस्य प्राणानां चैव भारत ॥ १०

ब्रह्मदेयाग्रहारांश्च पुत्राणां चौर्ध्वदेहिकम् ।
इतो रत्नानि गाश्चैव दासीदासमजाविकम् ॥ ११
अर्चयित्वा कुरुश्रेष्ठो ब्राह्मणेभ्यः प्रयच्छतु ।
दीनान्धकृपणेभ्यश्च तत्र तत्र नृपाज्ञया ॥ १२
बह्वन्नरसपानाढ्यं सर्वं विदुर कारय ।
गवां निपानान्यन्यच्च विविधं पुण्यकर्म यत् ॥ १३
इति मामब्रवीद्राजा पार्थश्चैव धनञ्जयः ।
यदत्रानन्तरं कार्यं तद्भवान् वक्तुमर्हति ॥ १४

वैशम्पायनः—

इत्युक्तो विदुरेणाथ धृतराष्ट्रोऽभिनन्द्य तम् ।
मनश्चक्रे महादाने कार्तिक्यां जनमेजय ॥ १५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
॥ ९३ ॥ आश्रमवासपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[ अस्मिन्नध्याये १५ श्लोकाः ]

## ॥ षोडशोऽध्यायः ॥

धृतराष्ट्रेण भीष्मदुर्योधनाद्युद्देश्यकश्राद्धे धनवस्त्रादिना ब्राह्मणादि-सन्तर्पणम् ॥ १ ॥

वैशम्पायनः—

विदुरेणैवमुक्तस्तु धृतराष्ट्रो जनाधिपः ।
प्रीतिमानभवद्राजा राज्ञो जिष्णोश्च कर्मणा ॥ १

ततोऽभिरूपान् भीष्माय ब्राह्मणानृषिसत्तमान् ।
पुत्रार्थे सुहृदां चैव स समीक्ष्य सहस्रशः ॥ २

कारयित्वाऽन्नपानानि यानान्याच्छादनानि च ।
सुवर्णमणिरत्नानि दासीदासपरिच्छदान् ॥ ३

कम्बलानि च रत्नानि ग्रामान् क्षेत्राण्यजाविकान् ।
अलङ्कारानथाश्वांश्च काम्याश्चैव वरस्त्रियः ॥ ४
आदिश्यादिश्य विप्रेभ्यो स ददौ नृपसत्तमः ॥ ४॥

द्रोणं सङ्कीर्त्य भीष्मं च सोमदत्तं च बाह्लिकम् ।
दुर्योधनं च राजानं पुत्रांश्चैव पृथक् पृथक् ॥ ५॥

जयद्रथपुरोगाणां सुहृदां चैव सर्वशः ।
[1]स श्राद्धयज्ञो ववृते बहुगोपशुदक्षिणः ॥ ६॥
अनेकधनरत्नौघो युधिष्ठिरमते तदा ॥ ७

अनिशं यत्र पुरुषा गणका लेखकास्तथा ।
युधिष्ठिरस्य वचनाद् आपृच्छन्ति स्म तं नृपम् ॥ ८
आज्ञापय त्वमेतेभ्यः प्रदेयं दीयतामिति ॥ ८॥
तदुपस्थितमेवात्र वचनान्ते प्रदृश्यते ॥ ९

शते देये दशशतं सहस्रे चायुतं तथा ।
दीयते वचनाद्राज्ञः कुन्तीपुत्रस्य धीमतः ॥ १०

---

1. ख-घ—दश श्लोका न सन्ति

एवं स वसुधाराभिर् वर्षमाणो नृपाम्बुदः ।
तर्पयामास विप्रांस्तान् वर्षाद् भूमिमिवाम्बुदः ॥ ११

ततोऽनन्तरमेवात्र सर्ववर्णान् महामतिः ।
अन्नपानरसौघेण प्लावयामास पार्थिवः ॥ १२

सवस्त्रौघेन रत्नौघो मृदङ्गनिनदध्वनिः ।
गवाश्वमहिषावर्तो नानारत्नमहाकरः ॥ १३

ग्रामाग्रहारकुल्याढ्यो मणिहेमजलार्णवः ।
जगत् सम्प्लावयामास धृतराष्ट्रोडुपो ध्रुवम् ॥ १४

एवं स पुत्रपौत्राणां पितॄणामात्मनस्तदा ॥ १४॥
गान्धार्यपि महाराज प्रददौ चौर्ध्वदेहिकम् ॥ १५

परिश्रान्तो यदासीत् स ददद्दानान्यनेकशः ।
ततो निवर्तयामास दानयज्ञं कुरूद्वहः ॥ १६

एवं स राजा कौरव्यश् चक्रे दानमहोत्सवम् ।
नटनर्तप्रगीताढ्यं बह्वन्नरसदक्षिणम् ॥ १७

दशाहमेव दानानि दत्त्वा राजाऽम्बिकासुतः ।
बभूव पुत्रपौत्राणाम् अनृणो भरतर्षभ ॥ १८

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि षोडशोऽध्यायः ॥ १६ ॥
॥ ९३ ॥ आश्रमवासपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[ अस्मिन्नध्याये १८ श्लोकाः ]

## ॥ सप्तदशोऽध्यायः ॥

धृतराष्ट्रेण कुन्तीस्कन्धावसक्तहस्तया गान्धार्या अंसावलम्बनेन सशोकैः पौरैर्युधिष्ठिरादिभिश्चानुगम्यमानेन सता वनं प्रति प्रस्थानम् ॥१॥

वैशम्पायनः—

ततः प्रभाते राजा स धृतराष्ट्रोऽम्बिकासुतः ।
आदाय पाण्डवान् वीरान् वनवासे कृतक्षणः ॥ १

गान्धारीसहितो धीमान् अभिनन्द्य यथाविधि ।
कार्तिक्यां कारयित्वेष्टिं ब्राह्मणैर्वेदपारगैः ॥ २

अग्निहोत्रं पुरस्कृत्य वल्कलाजिनसंवृतः ।
वधूपरिवृतो राजा निर्ययौ भवनात् ततः ॥ ३

ततस्स्त्रियः कौरवपाण्डवानां
याश्चाप्यन्याः कौरवराजवंश्याः ।
तासां नादः प्रादुरासीत् तदानीं
वैचित्रवीर्ये नृपतौ प्रयाते ॥ ४

[1]ततो लाजैस्सुमनोभिश्च राजा
विचित्राभिस्तद्गृहं पूरयित्वा ।
संयोज्यार्थैर्भृत्यजनं च सर्वं
समुत्सृज्य प्रययौ कौरवेयः ॥ ५

ततो राजा प्राञ्जलिर्वेपमानो
युधिष्ठिरस्सस्वरं बाष्पकण्ठः ।

---

1. ञ—श्लोकोऽयं नास्ति

विनद्योच्चैर्हा महाराज साधो
क्व गन्तासीत्यपतत् तत्र भूमौ ॥ ६

ततोऽर्जुनस्तीव्रदुःखाभितप्तो
मुहुर्मुहुर्निश्श्वसन् भारताग्र्यः ।
युधिष्ठिरं मैवमित्येवमुक्त्वा
प्रगृह्याथो दीनतरो बभूव ॥ ७

वृकोदरः फल्गुनश्चैव वीरौ
माद्रीपुत्रौ विदुरस्सञ्जयश्च ।
वैश्यापुत्रस्सहितो गौतमेन
धौम्यो विप्राश्चान्वयुर्बाष्पकण्ठाः ॥ ८

कुन्ती गान्धारीमनुभर्तृ व्रजन्तीं
स्कन्धासक्तं हस्तमथोद्वहन्ती ।
राजा गान्धारीस्कन्धदेशेऽवसज्य
पाणिं ययौ धृतराष्ट्रः प्रतीतः ॥ ९

तथा कृष्णा द्रौपदी यादवी च
बालापत्या चोत्तरा कौरवी च ।
चित्राङ्गदा याश्च काश्चित् कुरूणां
सार्धं राज्ञा प्रस्थितास्ता वधूभिः ॥ १०

तासां नादो रुदतीनां तदाऽऽसीद्
राजन् दुःखात् कुररीणामिवोच्चैः ।

ततो निष्पेतुर्ब्राह्मणक्षत्रियाणां
विट्शूद्राणां चैव नार्यस्समन्तात् ॥ ११

तन्निर्याणे दुःखितः पौरवर्गो
गजाह्वयेऽतीव बभूव राजन् ।
यथापूर्वं गच्छतां पाण्डवानां
द्यूते राजन् कौरवाणां सभायाम् ॥ १२

या नापश्यच्चन्द्रमा नैव सूर्यो
रामाः काश्चित् तास्तु तस्मिन् नरेन्द्रे ।
महावनं गच्छति कौरवेन्द्रे
शोकेनार्ता राजमार्गं प्रपेदुः ॥ १३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
॥ ९३ ॥ आश्रमवासपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[ अस्मिन्नध्याये १३ श्लोकाः ]

---

## ॥ अष्टादशोऽध्यायः ॥

---

धृतराष्ट्रस्य वनप्रस्थानसमये विदुरसञ्जयाभ्यामपि वनवासाय तेन सह प्रस्थानम् ॥ १ ॥ तथा कुन्त्याऽपि युधिष्ठिरादिभिर्बहुधा प्रार्थनाभिः प्रतिषेधनेऽपि तत्समाश्वासनपूर्वकं गान्धार्या सह वनं प्रति प्रस्थानम् ॥ २ ॥

---

वैशम्पायनः—

ततः प्रासादहर्म्येषु वसुधायां च पार्थिव ।
स्त्रीणां च पुरुषाणां च सुमहान् निस्स्वनोऽभवत् ॥ १

स राजा राजमार्गेण नृनारीसङ्कुलेन च ।
कथञ्चिन्निर्ययौ धीमान् वेपमानः कृताञ्जलिः ॥ २

स वर्धमानद्वारेण निर्ययौ गजसाह्वयात् ।
विसर्जयामास तदा तं जनौघं मुहुर्मुहुः ॥ ३

राज्ञा सह वनं गन्तुं विदुरो धृतनिश्चयः ।
सञ्जयश्च महामात्रस् सूतो गावल्गणिस्तथा ॥ ४

कृपं निवर्तयामास युयुत्सुं च महारथम् ।
धृतराष्ट्रो महाराज कुन्तीपुत्रं युधिष्ठिरम् ॥ ५

निवृत्ते पौरवर्गे तु राजा सान्तःपुरस्तदा ।
धृतराष्ट्राभ्यनुज्ञातो निवर्तितुमियेष सः ॥ ६

सोऽब्रवीन्मातरं कुन्तीम् उपेत्य भरतर्षभ ॥ ६॥

युधिष्ठिरः—

अहं राजानमन्विष्ये भवती विनिवर्तताम् ।
वधूपरिवृता राज्ञि नगरं गन्तुमर्हसि ॥ ७॥

राजा यात्वेष धर्मात्मा तपसे धृतनिश्चयः ॥ ८

वैशम्पायनः—

इत्युक्ता धर्मराजेन बाष्पव्याकुललोचना ।
जगादैवं तदा कुन्ती गान्धारीं परिगृह्य ह ॥ ९

कुन्ती—

सहदेवे महाराज मा प्रमादं कृथाः क्वचित् ।

एष मामनुरक्तो हि राजंस्त्वां चैव सर्वदा ॥ १०

कर्णं स्मरेथास्सततं सङ्ग्रामेष्वपलायिनम् ।
अवकीर्णो हि स मया वीरो दुष्प्रज्ञया तदा ॥ ११

आयसं हृदयं नूनं मन्दाया मम पुत्रक ।
यत् सूर्यजमपश्यन्त्याश् शतशो यन्न दीर्यते ॥ १२

एवं कृते तु किं शक्यं मया कर्तुमरिन्दम ।
मम दोषोऽयमत्यर्थं [1]ख्यापितो यन्न सूर्यजः ॥ १३

तन्निमित्तं महाबाहो दानं दद्यास्त्वमुत्तमम् ।
सदैव भ्रातृभिस्सार्धं अग्रजस्यारिमर्दन ॥ १४

[2]द्रौपद्याश्च प्रिये नित्यं स्थातव्यमरिकर्शन ॥ १४॥

भीमसेनार्जुनौ चैव नकुलश्च कुरूद्वह ।
समाधेयास्त्वया धीमंस् त्वं ह्येव कुलधूर्गतः ॥ १५॥

श्वश्रूश्वशुरयोः पादौ शुश्रूषन्ती वने त्वहम् ।
गान्धारीसहिता वत्स्ये तापसी मलपङ्किनी ॥ १६॥

वैशम्पायनः—

एवमुक्तस्स धर्मात्मा भ्रातृभिस्सहितो वशी ।
विषादमगमत् तीव्रं न च किञ्चिदुवाच ताम् ॥ १७॥

---

1. ख-ग-घ—ख्यापितोऽयं स सूर्यजः ।
2. अ-ख—इदमर्धं नास्ति

स मुहूर्तमिव ध्यात्वा धर्मराजो युधिष्ठिरः ।
उवाच मातरं दीनश्चिन्ताशोकपरायणः ॥ १८॥

युधिष्ठिरः—

किमिदं ते व्यवसितं नैव त्वं वक्तुमर्हसि ।
न त्वामभ्यनुजानामि प्रसादं कर्तुमर्हसि ॥ १९॥

व्यरोचयः पुराऽस्माकम् उत्साहं शुभदर्शने ।
विदुलाया वचोभिस्त्वं नास्मान् सन्त्यक्तुमर्हसि ॥ २०॥

[1]निहत्य पृथिवीपालान् राज्यं प्राप्तमिदं मया ।
तव प्रज्ञामुपश्रुत्य वासुदेवान्नरर्षभात् ॥ २१॥

क सा बुद्धिरियं चाद्य भवत्या या श्रुता मया ।
क्षत्रधर्मे स्थितं त्यक्त्वा न प्रयातुमिहार्हसि ॥ २२॥

अस्मानुत्सृज्य राज्यं च स्नुषां चेमां यशस्विनीम् ।
कथं वत्स्यासि शून्येषु वनेष्वम्ब प्रसीद मे ॥ २३॥

वैशम्पायनः—

इति बाष्पकला वाचः कुन्ती पुत्रस्य शृण्वती ।
जगामैवाश्रुपूर्णाक्षी भीमस्तामिदमब्रवीत् ॥ २४॥

भीमः—

यदा राज्यमिदं कुन्ति भोक्तव्यं पुत्रसाद्गतम् ।
प्राप्तव्या दानधर्माश्च यथेयं ते कुतो मतिः ॥ २५॥

---

1. ब—अर्धचतुष्टयं नास्ति

किं वयं कारिताः पूर्वं भवत्या पृथिवीक्षयम् ।
कस्य हेतोः परित्यज्य राज्यं गन्तुमिहार्हसि ॥　　२६॥

वनात् तस्मात् किमानीता भवत्या बालका वयम् ।
दुःखशोकसमाविष्टौ माद्रीपुत्राविमौ तदा ॥　　२७॥

प्रसीद मातर्मा गास्त्वं वनमद्य यशस्विनि ।
श्रियं यौधिष्ठिरीं तावद् भुङ्क्ष्व पार्थबलार्जिताम् ॥　　२८॥

वैशम्पायनः—

इति सा निश्चितैवाथ वनवासकृतक्षणा ।
लालप्यतां बहुविधं पुत्राणां नाकरोद्वचः ॥　　२९॥

द्रौपदी चान्वयाच्छ्वश्रूं विषण्णवदना तदा ।
वनवासाय गच्छन्तीं रुदन्ती भद्रया सह ॥　　३०॥

सा पुत्रान् रुदतस्सर्वान् मुहुर्मुहुरुदीक्षती ।
जगामैव महाभागा वनाय धृतनिश्चया ॥　　३१॥

अन्वयुः पाण्डवास्तत्र सभृत्यान्तःपुरास्तदा ।
ततः प्रमृज्य साऽश्रूणि पुत्रान् वचनमब्रवीत् ॥　　३२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
॥ ९३ ॥ आश्रमवासपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
[ अस्मिन्नध्याये ३२॥ श्लोकाः ]

---

## ॥ एकोनविंशोऽध्यायः ॥

कुन्त्या स्वस्य वनगमनाध्यवसायेन विषीदतो युधिष्ठिरादीन् प्रति सहेतूपन्यासं समाश्वासनम् ॥ १ ॥

कुन्ती—

एवमेतन्महाबाहो यथा वदसि पाण्डव ।
कृतमुद्धर्षणं पूर्वं मया वस्सीदतां नृप ॥ १

द्यूतापहृतराज्यानां पतितानां सुखादपि ।
ज्ञातिभिः परिभूतानां कृतमुद्धरणं मया ॥ २

कथं पाण्डोर्न नश्येद्धि सन्ततिः पुरुषर्षभ ।
यशश्च वो न नश्येद्धि इति चोद्धरणं कृतम् ॥ ३

[1]यूयमिन्द्रसमास्सर्वे देवतुल्यपराक्रमाः ।
मा परेषां मुखप्रेक्षास् स्युरित्येवं कृतं मया ॥ ४

कथं धर्मभृतां श्रेष्ठो राजा त्वं वासवोपमः ।
पुनर्वनं न गच्छेथा इति चोद्धरणं कृतम् ॥ ५

[2]नागायुतसमप्राणः ख्यातविक्रमपौरुषः ।
नायं भीमोऽत्ययं गच्छेद् इति चोद्धरणं कृतम् ॥ ६

भीमसेनादवरजस् तथाऽयं वासवोपमः ।

---

1. क-ख-ग-घ—अर्धचतुष्टयं नास्ति
2. अ—अर्धषट्कं नास्ति

विजयो नावसीदेत इति चोद्धरणं कृतम् ।। ७

नकुलस्सहदेवश्च तथेमौ गुरुवर्तिनौ ।
क्षुधा कथं न सीदेताम् इति चोद्धरणं कृतम् ।। ८

[1]इयं च बृहती श्यामा श्रीमत्यायतलोचना ।
[2]तथा सभातले क्लिष्टा मा भूदिति च तत् कृतम् ।। ९

पश्यन्त्या मे तथा हीमां वेपन्तीं कदलीमिव ।
स्त्रीधर्मिणीमनिन्द्याङ्गीं तथा द्यूतपराजिताम् ।। १०

दुश्शासनस्तां मौर्ख्यात्तु दासीवत् पर्यकर्षत ।। १०।।
तदैव विदितं मह्यं परिभूतमिदं कुलम् ।। ११

विषण्णाः कुरवश्चैव तदा मे श्वशुरादयः ।
यदैषा नाथमिच्छन्ती प्रालपत् कुररी यथा ।। १२

केशपक्षे परामृष्टा पापेन हतबुद्धिना ।
यदा दुश्शासनेनैषा तदा मुह्याम्यहं नृप ।। १३

युष्मत्तेजोविवृद्ध्यर्थं मया ह्युद्धरणं कृतम् ।
[3]तदानीं विदुलावाक्यैर् इति तद्वित्त पुत्रकाः ।। १४

कथं न राजवंशोऽयं नश्येत् प्राप्य सुतान् मम ।
पाण्डोरिति मया पुत्रास् तस्मादुद्धरणं कृतम् ।। १५

---

1. ख—अर्धद्वयं नास्ति 2. ग—इदमर्धं नास्ति
3. अ-क—अर्धत्रयं नास्ति

न तस्य पुत्राः पौत्रा वा कुत एव स पार्थिवः ।
लभते सुकृताँल्लोकान् यस्माद्वंशः प्रणश्यति ॥ १६

भुक्तं राज्यफलं तात भर्तुर्मे विपुलं पुरा ।
महादानानि दत्तानि पीतास्सोमा यथाविधि ॥ १७

साऽहं नात्मफलार्थं वै वासुदेवमचूचुदम् ।
विदुलायाः प्रलापैस्तैः प्लावनार्थं तु तत् कृतम् ॥ १८

नाहं राज्यफलं पुत्राः कामये भर्तृवर्जितम् ।
पतिलोकानहं पुण्यान् कामये तपसा विभो ॥ १९

श्वश्रूश्वशुरयोः कृत्वा शुश्रूषां वनवासिनोः ।
तपसा शोषयिष्यामि युधिष्ठिर कलेबरम् ॥ २०

निवर्तस्व कुरुश्रेष्ठ भीमसेनादिभिस्सह ।
धर्मे ते धीयतां बुद्धिर् मनसो महदस्तु ते ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

॥ ९३ ॥ आश्रमवासपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

[ अस्मिन्नध्याये २१ श्लोकाः ]

---

## ॥ विंशोऽध्यायः ॥

कुन्त्या कृच्छ्रेण प्रतिनिवर्तितैर्युधिष्ठिरादिभिः कृच्छ्रात् पुनर्नगरं प्रत्यागमनम् ॥ १ ॥ धृतराष्ट्रेण विदुरादिभिस्सह वनमेत्य गङ्गातीरे सन्ध्योपास्त्यादिना रात्रियापनम् ॥ २ ॥

वैशम्पायनः—

कुन्त्यास्तु वचनं श्रुत्वा पाण्डवा राजसत्तम ।
व्रीडितास्सन्न्यवर्तन्त पाञ्चाल्या सह भारत ॥ १

ततश्शब्दो महानासीत् सर्वेषामेव भारत ।
अन्तःपुराणां रुदतां दृष्ट्वा कुन्तीं तथा गताम् ॥ २

प्रदक्षिणमुपावृत्त्य राजानं पाण्डवास्तदा ।
अभिवाद्य निवर्तन्त पृथां तामनिवर्त्य ते ॥ ३

तामब्रवीन्महाराजो धृतराष्ट्रोऽम्बिकासुतः ।
गान्धारीं विदुरं चैव समाभाष्य निगृह्य च ॥ ४

धृतराष्ट्रः—

युधिष्ठिरस्य जननी देवी साऽपि निवर्त्यताम् ।
तथा युधिष्ठिरः प्राह तत् सर्वं सत्यमेव हि ॥ ५

पुत्रैश्वर्यं महदिदम् अपहाय महाफलम् ।
का गच्छेत वनं दुर्गं पुत्रानुत्सृज्य मूढवत् ॥ ६

राज्यस्थया तपश्चर्तुं नानाव्रतकृतं महत् ।
अनया शक्यमद्येह श्रूयतां च वचो मम ॥ ७

गान्धारि परितुष्टोऽस्मि वध्वाश्शुश्रूषणेन वै ।
तस्मात् त्वमेनां धर्मज्ञे समनुज्ञातुमर्हसि ॥ ८

वैशम्पायनः—

इत्युक्ता सौबलेयी तु राज्ञा कुन्तीमुवाच ह ।
तत्सर्वं राजवचनं स्वं च वाक्यं विशेषवत् ॥ ९

न च सा वनवासाय देवी कृतमतिस्तदा ।
शक्ता ह्युपावर्तयितुं कुन्ती धर्मपरा सती ॥ १०

तस्यास्तु तं स्थिरं ज्ञात्वा व्यवसायं कुरुस्त्रियः ।
निवृत्ताश्च कुरुश्रेष्ठ दृष्ट्वा प्ररुरुदुस्तदा ॥ ११

उपावृत्तेषु पार्थेषु सर्वेष्वन्तःपुरेषु च ।
ययौ राजा महाप्राज्ञो धृतराष्ट्रो वनं तदा ॥ १२

पाण्डवा अपि दीनास्ते दुःखशोकपरायणाः ।
यानैस्स्त्रीसहितास्सर्वे पुरं प्रविविशुस्तदा ॥ १३

तदहृष्टमिवाकूजं गतोत्सवमिवाभवत् ।
नगरं हास्तिनपुरं सस्त्रीवृद्धकुमारकम् ॥ १४

सर्वे चासन् निरुत्साहाः पाण्डवा जातमन्यवः ।
कुन्त्या हीनास्सुदुःखार्ता वत्सा इव निवारिताः ॥ १५

धृतराष्ट्रस्तु तेनाह्ना गत्वा सुमहदन्तरम् ।
ततो भागीरथीतीरे निवासमकरोत् प्रभुः ॥ १६

प्रादुष्कृता यथान्यायम् अग्नयो वेदपारगैः ।

व्यराजन्त द्विजश्रेष्ठैस् तत्र तत्र तपोधनैः ॥ १७
प्रादुष्कृताग्निरभवत् स च वृद्धो नराधिपः ॥ १७॥
स राजाऽग्नीन् पर्युपास्य हुत्वा च विधिवत् तदा ।
सन्ध्यागतसहस्रांशुम् उपातिष्ठत भारत ॥ १८॥
विदुरस्सञ्जयश्चैव राज्ञश्शय्यां कुशैस्ततः ।
चक्रतुः कुरुवीरस्य गान्धार्याश्चाविदूरतः ॥ १९॥
गान्धार्यास्सन्निकर्षे तु निषसाद कुशेष्वथ ।
युधिष्ठिरस्य जननी कुन्ती साधुव्रते स्थिता ॥ २०॥
तेषां संश्रवणे चापि निषेदुर्विदुरादयः ।
याजकाश्च यथोद्देशं द्विजा ये चानुयायिनः ॥ २१॥
प्राधीतद्विजमुख्या सा सम्प्रज्वलितपावका ।
बभूव तेषां रजनी ब्राह्मीव प्रीतिवर्धनी ॥ २२॥
ततो रात्र्यां व्यतीतायां कृतपूर्वाह्णिकक्रियाः ।
हुत्वाऽग्निं विधिवत् सर्वे प्रययुस्ते यथाक्रमम् ॥ २३॥
उदङ्मुखा निरीक्षन्त उपवासपरायणाः ॥ २४
स तेषामतिदुःखोऽभून्निवासः प्रथमेऽहनि ।
शोचतां वदतां चापि पौरजानपदानपि ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि विंशोऽध्यायः ॥ २० ॥
॥ ९३ ॥ आश्रमवासपर्वणि विंशोऽध्यायः ॥ २० ॥
[ अस्मिन्नध्याये २५ श्लोकाः ]

---

## ॥ एकविंशोऽध्यायः ॥

धृतराष्ट्रेण विदुरादिभिस्सह गङ्गातीरात् कुरुक्षेत्रमेत्य तत्र शतयूपाश्रमे व्यासाज्ञया तदुपदिष्टविधिना तपश्चरणम् ॥ १ ॥

वैशम्पायनः—

ततो भागीरथीतीरे मध्ये पुण्यजनोचिते ।
निवासमकरोद्राजा विदुरस्य मते स्थितः ॥ १

तत्रैनं पर्युपातिष्ठन् ब्राह्मणा राष्ट्रवासिनः ।
क्षत्रविट्शूद्रसङ्घाश्च बहवो भरतर्षभ ॥ २

स तैः परिवृतो राजा कथाभिरभिनन्द्य तान् ।
अनुजज्ञे सशिष्यान् वै विधिवत् प्रतिपूज्य च ॥ ३

सायाह्ने स महीपालस् ततो गङ्गामुपेत्य च ।
चकार विधिवच्छौचं गान्धारी च यशस्विनी ॥ ४

तथैवान्ये पृथक् सर्वे तीर्थेष्वाप्लुत्य भारत ।
चक्रुस्सर्वाः क्रियास्तत्र पुरुषा विदुरादयः ॥ ५

कृतशौचं ततो वृद्धं श्वशुरं कुन्तिभोजजा ।
गान्धारीं च पृथा राजन् गङ्गातीरमुपानयत् ॥ ६

राज्ञस्तु याजकैस्तत्र कृतो वेदीपरिस्तरः ।
जुहाव तत्र वह्नीन् स नृपतिस्सत्यसङ्गरः ॥ ७

ततो भागीरथीतीरात् कुरुक्षेत्रं जगाम सः ।
सानुगो नृपतिर्विद्वान् नियतस्संयतेन्द्रियः ॥ ८

तत्राश्रमपदं श्रीमान् अभिगम्य स पार्थिवः ।
आससादाथ राजर्षिं शतयूपं मनीषिणम् ॥ ९

स हि राजा महानासीत् केकयेषु परन्तपः ।
स्वपुत्रं मनुजैश्वर्ये निवेश्य वनमाविशत् ॥ १०

तेनासौ सहितो राजा ययौ व्यासाश्रमं तदा ।
तत्रैवं विधिवद्राजन् प्रत्यगृह्णात् कुरूद्वहम् ॥ ११

स दीक्षां तत्र सम्प्राप्य राजा कौरवनन्दनः ।
शतयूपाश्रमे तस्मिन् निवासमकरोत् तदा ॥ १२

तस्मै सर्वं विधिं राजन्नाचख्यौ स नृपस्तदा ।
आरण्यकं महाराज व्यासस्यानुमते तदा ॥ १३

एवं स तपसा राजा धृतराष्ट्रो महामनाः ।
योजयामास चात्मानं तांश्चाप्यनुचरांस्तदा ॥ १४

तथैव देवी गान्धारी वल्कलाजिनवासिनी ।
कुन्त्या सह महाराज समानव्रतचारिणी ॥ १५

कर्मणा मनसा वाचा चक्षुषा चापि ते नृप ।
सन्नियम्येन्द्रियग्रामम् आस्थिताः परमं तपः ॥ १६

त्वगस्थिशेषः परिशुष्कमांसो
जटाजिनी वल्कलसंवृताङ्गः ।
[1]स पार्थिवस्तत्र तपश्चचार
राजर्षिवत् तीव्रमपेतमोहः ॥ १७

क्षत्ता च धर्मार्थविदग्र्यबुद्धिस्
ससञ्जयस्तं नृपतिं सदारम् ।
उपाचरद्घोरतपा महात्मा
तदा कृशो वल्कलचीरवासाः ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
॥ ९३ ॥ आश्रमवासपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[ अस्मिन्नध्याये १८ श्लोकाः ]

---

## ॥ द्वाविंशोऽध्यायः ॥

नारदपर्वतादिभिर्धृतराष्ट्रादिदिदृक्षया शतयूपाश्रमं प्रत्यागमनम् ॥ १ ॥ नारदेन धृतराष्ट्रं प्रति तत्तपोवनस्य सहस्रचित्यादिराजर्षीणां स्वर्गप्रापकत्वमहिमोक्तिपूर्वकं विदुरादिभिस्सह तस्यापि भविष्यत्सिद्धिप्रदत्वकथनम् ॥ २ ॥

---

वैशम्पायनः—
ततस्तस्मिन् मुनिश्रेष्ठा राजानं द्रष्टुमभ्ययुः ।
नारदः पर्वतश्चैव देवलश्च महातपाः ॥ १

---

1. ख—सार्धश्लोको न दृश्यते ।

द्वैपायनस्सशिष्यश्च सिद्धाश्चान्ये महर्षयः ।
शतयूपश्च राजर्षिर् वृद्धः परमधार्मिकः ॥ २

तेषां कुन्ती महाराज पूजां चक्रे यथाविधि ।
तस्यास्ते तुष्टुवुस्सर्वे तापसाः परिचर्यया ॥ ३

तत्र धर्म्याः कथास्तात चक्रुस्ते परमर्षयः ।
रमयन्तो महात्मानं धृतराष्ट्रं जनाधिपम् ॥ ४

कथान्तरे तु कस्मिंश्चिद् देवर्षिर्नारदस्तदा ।
कथामिमामकथयत् सर्वप्रत्यक्षदर्शिवान् ॥ ५

नारदः—

पुरा प्रजापतिसमो राजाऽऽसीदकुतोभयः ।
सहस्रचित्य इत्युक्तश् शतयूपपितामहः ॥ ६

[1]स पुत्रे राज्यमासज्ज्य ज्येष्ठे परमधार्मिके ।
[2]वनं विवेश धर्मात्मा शतचित्यो महीपतिः ॥ ७

स गत्वा तपसः पारं दीप्तस्स पृथिवीपतिः ।
पुरन्दरस्य संस्थानं प्रतिपेदे महामनाः ॥ ८

दृष्टपूर्वस्स बहुशो राजा सम्पतता मया ।
महेन्द्रसदने राजा तपसा दग्धकिल्बिषः ॥ ९

तथा शैलालयो राजा भगदत्तपितामहः ।

1. अ-ख—इदमर्धं नास्ति 2. अ—अर्धसप्तकं नास्ति

तपोबलेनैव नृपो महेन्द्रसदनं गतः ॥ १०

[1]तथा पृषध्रो नामासीद् राजा वज्रधरोपमः ।
स चापि तपसा लेभे नाकपृष्ठमितो गतः ॥ ११

अस्मिन्नरण्ये नृपतिर् मान्धातुरनघात्मजः ।
पुरुकुत्सस्तपस्सिद्धिं महतीं समवाप्तवान् ॥ १२

भार्या समभवद्यस्य नर्मदा सरितां वरा ।
सोऽस्मिन्नरण्ये नृपतिस् तपस्तप्त्वा दिवं गतः ॥ १३

शशलोमा च राजाऽऽसीद् राजन् परमधार्मिकः ।
स चाप्यस्मिन् वने तप्त्वा ततो दिवमवाप्तवान् ॥ १४

द्वैपायनप्रसादाच्च त्वमपीदं तपोवनम् ।
राजन्नवाप्य दुष्प्रापां सिद्धिमग्र्यां गमिष्यसि ॥ १५

त्वं चापि राजेन्द्र तथा तपसोऽन्ते श्रिया वृतः ।
गान्धारीसहितो गन्ता गतिं तेषां महात्मनाम् ॥ १६

पाण्डुस्स्मरति नित्यं च बलहन्तुस्समीपतः ।
त्वां सदैव महीपालस् स त्वा श्रेयसि योक्ष्यते ॥ १७

तव शुश्रूषया चैव गान्धार्याश्च यशस्विनी ।
भर्तुस्सलोकतां कुन्ती गमिष्यति वधूस्तव ॥ १८

---

1. क-ख-च—तथा प्रवृद्धो । ग—तथा वृषमृधे नाम ।

युधिष्ठिरस्य जननी स हि धर्मस्सनातनः ॥ १८॥
वयमेवं प्रपश्यामो नृपते दिव्यचक्षुषा ॥ १९
प्रवेक्ष्यति स्वमात्मानं विदुरस्तु युधिष्ठिरम् ।
सञ्जयस्तदनुध्यानात् सूतस्स्वर्गमवाप्स्यति ॥ २०

वैशम्पायनः—

एतच्छ्रुत्वा कौरवेन्द्रो महात्मा
सहैव पत्न्या प्रीतिमान् प्रत्यगृह्णात् ।
विद्वान् वाक्यं नारदस्य प्रशस्य
चक्रे पूजां चातुलां नारदाय ॥ २१

तदा सर्वे नारदं विप्रसङ्घास्
सम्पूजयामासुरतीव राजन् ।
राज्ञः प्रीता धृतराष्ट्रस्य ते वै
पुनःपुनस्सम्प्रहृष्टास्तदानीम् ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि द्वाविंशोऽध्यायः ॥ २२॥

॥ ९३ ॥ आश्रमवासपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

[ अस्मिन्नध्याये २२ श्लोकाः ]

---

## ॥ त्रयोविंशोऽध्यायः ॥

शतयूपपृष्टेन नारदेन तं प्रति धृतराष्ट्रस्य वर्षत्रयादूर्ध्वं गान्धार्या सह कुबेरलोकप्राप्तिकथनम् ॥ १ ॥

---

वैशम्पायनः—

नारदस्य तु तद्वाक्यं प्रशशंसुर्द्विजोत्तमाः ।
शतयूपस्तु राजर्षिर् नारदं वाक्यमब्रवीत् ॥ १

शतयूपः—

अहो भगवता राज्ञः प्रीतिरस्य विवर्धिता ।
सर्वस्य च जनस्यास्य मम चैव महाद्युते ॥ २

अस्ति काचिद्विवक्षा तु मम तां गदतश्शृणु ।
धृतराष्ट्रं प्रति नृपं देवर्षे लोकपूजितम् ॥ ३

लोकवृत्तान्ततत्त्वज्ञो भवान् दिव्येन चक्षुषा ।
युक्तः पश्यतु देवर्षे गतयो विविधा नृणाम् ॥ ४

उक्तवान् नृपतीशांस्त्वं महेन्द्रसमलोकगान् ।
न त्वस्य नृपतेर्लोकाः कथितास्ते महामुने ॥ ५

स्थानमस्य क्षितिपतेश् श्रोतुमिच्छाम्यहं विभो ।
त्वत्तः कीदृक् कदा चेति तन्ममाचक्ष्व पृच्छतः ॥ ६

वैशम्पायनः—

इत्युक्तो नारदस्तेन वाक्यं सर्वमनोनुगम् ।

व्याजहार सतां मध्ये दिव्यदर्शी महातपाः ॥ ७

नारदः—

यदृच्छया शक्रसदो गत्वा शक्रं शचीपतिम् ।
दृष्टवानस्मि राजेन्द्र तत्र पाण्डुं नृपं तदा ॥ ८

तत्रेयं धृतराष्ट्रस्य कथा समभवन्नृप ।
[1]तपसो दुश्चरस्यास्य यदयं तप्स्यते नृपः ॥ ९

तत्राहमिदमश्रौषं शक्रस्य वदतो दिवि ।
वर्षाणि त्रीणि शिष्टानि राज्ञोऽस्य परमायुषः ॥ १०

ततः कुबेरभवनं गान्धारीसहितो नृपः ।
विहर्ता धृतराष्ट्रोऽयं राजराजाभिपूजितः ॥ ११

कामगेन विमानेन दिव्याभरणभूषितः ।
ऋषिपुत्रो महाभागस् तपसा दग्धकिल्बिषः ॥ १२

सञ्चरिष्यति लोकांश्च देवगन्धर्वरक्षसाम् ।
स्वच्छन्देनेति धर्मात्मा व्यासस्य तु तपोबलात् ॥ १३

देवगुह्यमिदं प्रीत्या मया वः कथितं महत् ।
भवन्तो हि श्रुतधनास् तपसा दग्धकिल्बिषाः ॥ १४

वैशम्पायनः—

इति ते तस्य तच्छ्रुत्वा देवर्षेर्मधुरं वचः ।

---

1. ख-घ—इदमर्धं नास्ति

[1]सर्वे सुमनसः प्रीता बभूवुस्स च पार्थिवः ॥ १५

एवं कथाभिरन्वास्य धृतराष्ट्रं मनीषिणम् ।
विप्रजग्मुर्यथाकामं ते सिद्धगतिमास्थिताः ॥ १६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ ९३ ॥ आश्रमवासपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

[ अस्मिन्नध्याये १६ श्लोकाः ]

---

## ॥ चतुर्विंशोऽध्यायः ॥

युधिष्ठिरादिभिः कुन्तीधृतराष्ट्रादीनां प्रव्रजनशोकेनाभिमन्युप्रभृतिबन्धुजनानुस्मरणशोकेन च स्वस्वव्यापारेष्वप्यनादरणम् ॥ १ ॥

---

वैशम्पायनः—

एवं गते कौरवेन्द्रे दुःखशोकसमाहताः ।
बभूवुः पाण्डवा राजन् मातृशोकेन चार्दिताः ॥ १

तथा पौरजनास्सर्वे शोचन्तस्तं नराधिपम् ॥ १॥
तत्र तत्र कथा ह्यासन् द्विजानां कौरवान् प्रति ॥ २

द्विजाः—

कथं नु राजा वृद्धस्स वने वसति निर्जने ।
गान्धारी च महाभागा सा च कुन्ती पृथा कथम् ॥ ३

सुखार्हस्स हि राजर्षिर् असुखी तन्महावनम् ।

---

1. अ—इदमर्धं नास्ति

किमवस्थस्समासाद्य प्रज्ञाचक्षुर्महामनाः ॥ ४

सुदुष्करं कृतवती कुन्ती पुत्रानपास्य सा ।
राज्यश्रियं च सन्त्यज्य वनवासमरोचयत् ॥ ५

विदुरः किमवस्थश्च भ्रातुश्शुश्रूषुरात्मवान् ।
स च गावल्गणिर्धीमान् भर्तृपिण्डानुपालकः ॥ ६

वैशम्पायनः—

आकुमारं च पौरास्ते चिन्ताशोकपरायणाः ।
तत्र तत्र कथाश्चक्रुस् समासाद्य परस्परम् ॥ ७

पाण्डवाश्चापि ते सर्वे भृशं शोकपरायणाः ।
शोचन्तो मातरं वृद्धाम् ऊषुर्नातिचिरं पुरे ॥ ८

तथैव वृद्धं पितरं हतपुत्रं जनेश्वरम् ।
गान्धारीं च महाभागां विदुरं च महामतिम् ॥ ९

तेषां भोगेष्वभूत् प्रीतिर् न तांश्चिन्तयतां तदा ।
न राज्ये न च नारीषु न वेदाध्ययने तथा ॥ १०

परं निर्वेदमगमंश् चिन्तयन्तो नराधिपम् ।
तं च ज्ञातिवधं घोरं संस्मरन्तः पुनः पुनः ॥ ११

अभिमन्योश्च बालस्य विनाशं रणमूर्धनि ।
कर्णस्य च महाबाहोस् सङ्ग्रामेष्वपलायिनः ॥ १२

तथैव द्रौपदेयानाम् अन्येषां सुहृदामपि ।

वधं संस्मृत्य ते वीरा नातिप्रमनसोऽभवन् ॥ १३

हतप्रवीरां पृथिवीं हतरत्नां च भारत ।

सदैव चिन्तयन्तस्ते न निद्रामुपलेभिरे ॥ १४

द्रौपदी हतपुत्रा च सुभद्रा चैव भामिनी ।

नातिप्रीतियुते देव्यौ तदाऽऽस्तामप्रहृष्टवत् ॥ १५

वैराट्यास्तु सुतं दृष्ट्वा पितरं ते परीक्षितम् ।

धारयन्ति स्म ते प्राणांस् तव पूर्वपितामहाः ॥ १६

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

॥ ९३ ॥ आश्रमवासपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

[ अस्मिन्नध्याये १६ श्लोकाः ]

---

## ॥ पञ्चविंशोऽध्यायः ॥

---

युधिष्ठिरेण वनस्थकुन्तीधृतराष्ट्रादिदिदृक्षया द्रौपद्यादिभिः पौरैर्भ्रातृभिश्च सह वनं प्रति प्रस्थानम् ॥ १ ॥

---

वैशम्पायनः—

[1]एवं ते पुरुषव्याघ्राः पाण्डवा मातृनन्दनाः ।

स्मरन्तो मातरं वीरा बभूवुर्भृशदुःखिताः ॥ १

---

1. अ-ब—इदमर्धं नास्ति

ये राजकार्येषु पुरा नामाद्यन्त कचिन्नृप ।
ते राजकार्याणि तदा नाकार्षुर्मनसा पुरे ॥ २

आविष्टा इव शोकेन नाभ्यनन्दन्त किञ्चन ।
सम्भाष्यमाणा अपि ते न किञ्चित् प्रत्यपूजयन् ॥ ३

ते स्म वीरा दुराधर्षा गाम्भीर्ये सागरोपमाः ।
शोकोपहतविज्ञाना नष्टसंज्ञा इवाभवन् ॥ ४

अनुस्मरन्तो जननीं ततस्ते कुरुनन्दनाः ॥ ४॥

पाण्डवाः—

कथं नु वृद्धमिथुनं वहत्यद्य पृथा कृशा ॥ ५

कथं च स महीपालो हतपुत्रो निराश्रयः ।
पत्न्या सह वसत्येको वने श्वापदसेविते ॥ ६

सा च देवी महाभागा गान्धारी हतबान्धवा ।
पतिमन्धं कथं वृद्धम् अन्वेति विजने वने ॥ ७

वैशम्पायनः—

एवं तेषां कथयताम् औत्सुक्यमभवत् तदा ।
गमने चाभवद्बुद्धिर् धृतराष्ट्रदिदृक्षया ॥ ८

सहदेवस्तु राजानं प्रणिपत्येदमब्रवीत् ॥ ८॥

सहदेवः—

अहो नु भवतो दृष्टं हृदयं गमनं प्रति ॥ ९

न हि त्वा गौरवेणाहम् अशकं वक्तुमात्मना ।
गमनं प्रति राजेन्द्र तदिदं प्रत्युपस्थितम् ॥ १०

दिष्ट्या द्रक्ष्यामि तां कुन्तीं वर्तमानां तपस्विनीम् ।
जटिलां तापसीं वृद्धां कुशकाशपरिक्षताम् ॥ ११

प्रासादहर्म्यसंवृद्धाम् अत्यन्तसुखभागिनीम् ।
कदा नु जननीं श्रान्तां द्रक्ष्यामि भृशदुःखिताम् ॥ १२

अनित्याः खलु मर्त्यानां गतयो भरतर्षभ ।
कुन्ती राजसुता यत्र वसत्यसुखिनी वने ॥ १३

वैशम्पायनः—

सहदेववचश्श्रुत्वा द्रौपदी योषितां वरा ।
उवाच देवी राजानम् अभिपूज्याभिनन्द्य च ॥ १४

द्रौपदी—

द्रक्ष्यामि तां कदा देवीं यदि जीवति सा पृथा ।
जीवन्त्या ह्यद्य नः प्रीतिर् भविष्यति नराधिप ॥ १५

एषा तेऽस्तु मतिर्नित्यं धर्मे ते रमतां मनः ।
योऽद्य त्वमस्मान् राजेन्द्र श्रेयसा योजयिष्यसि ॥ १६

अग्रपादस्थितमिदं विद्धि राजन् वधूजनम् ।
काङ्क्षितं दर्शनं कुन्त्या गान्धार्याश्श्वशुरस्य च ॥ १७

वैशम्पायनः—

इत्युक्तस्स नृपो देव्या पाञ्चाल्या भरतर्षभ ।
सेनाध्यक्षान् समानाय्य सर्वानिदमथाब्रवीत् ॥ १८

युधिष्ठिरः—

निर्यापयत सेनां मे प्रभूतरथकुञ्जराम् ।

द्रक्ष्यामो वनवासस्थं धृतराष्ट्रं महीपतिम् ॥　　१९

वैशम्पायनः—

अध्यक्षांश्चाब्रवीद्राजा यानानि विविधानि मे ।
सज्जीक्रियन्तां सर्वाणि शिबिकाश्च सहस्रशः ॥　　२०

शकटापणवेशाश्च कोशाश्शिल्पिन एव च ।
निर्यान्तु कोशपालाश्च कुरुक्षेत्राश्रमं प्रति ॥　　२१

यश्च पौरजनः कश्चिद् द्रष्टुमिच्छति पार्थिवम् ।
अनावृतस्सुविहितस् स च यातु सुरक्षितः ॥　　२२

सूदाः पौरोगवाश्चैव सर्वं चैव महानसम् ।
विविधं भक्ष्यभोज्यं च शकटैरुह्यतां मम ॥　　२३

प्रयाणं घुष्यतामद्य श्वोभूत इति मा चिरम् ।
क्रियतां पथि चाप्यत्र वेश्मानि विविधानि च ॥　　२४

एवमाज्ञाप्य राजा स भ्रातृभिस्सह पाण्डवः ।
श्वोभूते निर्ययौ राजा सस्त्रीबालपुरस्कृतः ॥　　२५

स बहिर्दिवसानेव जनौघं परिपालयन् ।
न्यवसन्नृपतिः पञ्च ततोऽगच्छद्वनं प्रति ॥　　२६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आश्रमवासिकपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

॥ ९३ ॥ आश्रमवासपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

[ अस्मिन्नध्याये २६ श्लोकाः ]

---

## ॥ षड्विंशोऽध्यायः ॥

युधिष्ठिरेण नानायानारूढैः पौरैर्भ्रातृभिश्च सह धृतराष्ट्रादिदिदृक्षया शतयूपाश्रमवनप्रवेशः ॥ १ ॥

वैशम्पायनः—

तत आज्ञापयामास सेनां भरतसत्तमः ।
अर्जुनप्रमुखैर्गुप्तां लोकपालोपमैर्नरैः ॥ १

योगो योग इति प्रीत्या ततश्शब्दो महानभूत् ।
क्रोशतां सादिनां तत्र युज्यतां युज्यतामिति ॥ २

केचिद्यानैर्जना जग्मुः केचिदश्वैर्मनोजवैः ।
रथैश्च [1]नगराकारैः प्रदीप्तज्वलनोपमैः ॥ ३

गजेन्द्रैर्गर्जितैः केचित् केचिदुष्ट्रैर्नराधिप ।
पदातयश्च पुरुषाः नखरप्रासयोधिनः ॥ ४

[2]पौरजानपदाश्चैव यानैर्बहुविधैस्तथा ।
अन्वयुः कुरुराजानं धृतराष्ट्रदिदृक्षया ॥ ५

स चापि राजवचनाद् आचार्यो गौतमः कृपः ।
सेनामादाय सेनानीः प्रययावाश्रमं प्रति ॥ ६

ततो द्विजैर्वृतश्श्रीमान् कुरुराजो युधिष्ठिरः ।
संस्तूयमानो मुनिभिस् सूतमागधवन्दिभिः ॥ ७

---

1. ग—कनकाकारैः ।  2. ग—इदमर्धं नास्ति

पाण्डरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
रथानीकेन महता निर्ययौ कुरुनन्दनः ॥　　८

गजैश्चाचलसङ्काशैर् भीमकर्मा महाभुजः ।
सज्जयन्त्रायुधोपेतैः प्रययौ मारुतात्मजः ॥　　९

माद्रीपुत्रावपि तथा हयारोहौ सुसंवृतौ ।
जग्मतुश्शीघ्रगमनौ सन्नद्धकवचध्वजौ ॥　　१०

अर्जुनश्च महातेजा रथेनादित्यवर्चसा ।
वशी श्वेतैर्हयैर्दिव्यैर् युक्तेनान्वगमन्नृपम् ॥　　११

द्रौपदीप्रमुखाश्चापि स्त्रीसङ्घाश्शिबिकागताः ।
स्त्र्यध्यक्षगुप्ताः प्रययुर् विसृजन्तोऽमितं वसु ॥　　१२

समृद्धरथनागाश्वं वेणुवीणानुनादितम् ।
शुशुभे पाण्डवं सैन्यं तत् तदा भरतर्षभ ॥　　१३

नदीतीरेषु रम्येषु सरस्सु च विशाम्पते ।
वासं कृत्वा क्रमेणाथ जग्मुस्ते कुरुपुङ्गवाः ॥　　१४

युयुत्सुश्च महातेजा धौम्यश्चैव पुरोहितः ।
युधिष्ठिरस्य वचनात् पुरगुप्तिं प्रचक्रतुः ॥　　१५

ततो युधिष्ठिरो राजा कुरुक्षेत्रमवातरत् ।
क्रमेणोत्तीर्य यमुनां नदीं परमपावनीम् ॥　　१६

स ददर्शाश्रमं दूराद् राजर्षेस्तस्य धीमतः ।

शतयूपस्य कौरव्य धृतराष्ट्रस्य चैव हि ॥ १७

ततः प्रमुदितस्सर्वो जनस्तद्वनमञ्जसा ।
विवेश सुमहानादैर् आपूर्य भरतर्षभ ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

॥ ९३ ॥ आश्रमवासपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

[ अस्मिन्नध्याये १८ श्लोकाः ]

---

## ॥ सप्तविंशोऽध्यायः ॥

युधिष्ठिरादिभिः शतयूपाश्रमे धृतराष्ट्रादीनुपेत्य स्वस्वनामकीर्तनपूर्वकं तत्पादाभिवादनम् ॥ १ ॥ धृतराष्ट्रेण स्वावस्थादर्शनेन शोचतां तेषां समाश्वासनम् ॥ २ ॥

---

वैशम्पायनः—

ततस्ते पाण्डवा दूराद् अवतीर्य पदातयः ।
अभिजग्मुर्नरपतेर् आश्रमं विनयान्विताः ॥ १

[1]स च सेनाजनस्सर्वो ये च राष्ट्रनिवासिनः ।
स्त्रियश्च कुरुमुख्यानां पद्भिरेवान्वयुस्तदा ॥ २

तत्राश्रममुपाजग्मुर् धृतराष्ट्रस्य पाण्डवाः ।
शून्यं मृगगणाकीर्णं कदलीवनशोभितम् ॥ ३

---

1. ब—अर्धद्वयं नास्ति

ततस्तत्र समाजग्मुस् तापसा विविधव्रताः ।
पाण्डवानागतान् द्रष्टुं कौतूहलसमन्विताः ॥ ४

तानपृच्छत् ततो राजा क्वासौ कौरववंशभृत् ।
पिता ज्येष्ठो गतोऽस्माकम् इति बाष्पपरिप्लुतः ॥ ५

तमूचुस्ते ततो वाक्यं यमुनामवगाहितुम् ।
पुष्पाणामुदकुम्भस्य चार्थे गत इति प्रभो ॥ ६

तैराख्यातेन मार्गेण ततस्ते प्रययुस्तदा ।
ददृशुश्चाविदूरे तान् सर्वानथ पदातयः ॥ ७

ततस्ते सत्वरा जग्मुः पितुर्दर्शनकाङ्क्षिणः ।
सहदेवस्तु वेगेन प्राधावद्यत्र सा पृथा ॥ ८

सस्वरं प्रारुदद् धीमान् मातुः पादावुपस्पृशन् ।
सा तु बाष्पाकुलमुखी तं ददर्श प्रियं सुतम् ॥ ९

बाहुभ्यां सम्परिष्वज्य समुन्नाम्य च भारत ।
गान्धार्याः कथयामास सहदेवमुपस्थितम् ॥ १०

अनन्तरं च राजानं भीमसेनमथार्जुनम् ।
नकुलं च पृथा दृष्ट्वा त्वरमाणोपचक्रमे ॥ ११

सा ह्यग्रे गच्छति तयोर् दम्पत्योर्हतपुत्रयोः ।
कर्षन्ती तौ ततस्ते तां दृष्ट्वैव न्यपतन् भुवि ॥ १२

तयोस्तु पादयो राजन् न्यपतन् हतपुत्रयोः ॥ १२॥

तान् राजा स्वरयोगेन स्पर्शेन च महामनाः ।
प्रत्यभिज्ञाय मेधावी समाश्वासयत प्रभुः ॥ १३॥

ततस्ते बाष्पमुत्सृज्य गान्धारीसहितं नृपम् ।
उपतस्थुर्महात्मानो मातरं च यथाविधि ॥ १४॥

सर्वेषां तोयकलशान् जगृहुस्ते स्वयं तथा ।
पाण्डवा लब्धसंज्ञास्ते मात्रा चाश्वासिता भृशम् ॥ १५॥

ततो नार्यो नृसिंहानां स च योधजनस्तथा ।
पौरजानपदाश्चैव ददृशुस्तं नराधिपम् ॥ १६॥

निवेदयामास ततो जनं तं गोत्रनामतः ।
युधिष्ठिरो नरपतिस् स चैनान् प्रत्यपूजयत् ॥ १७॥

स तैः परिवृतो मेने हर्षबाष्पाविलेक्षणः ।
राजाऽऽत्मानं गृहगतं पुरेव गजसाह्वये ॥ १८॥

अभिवादितो वधूभिश्च कृष्णाद्याभिस्स पार्थिवः ।
गान्धारीसहितो धीमान् कुन्त्या च प्रत्यनन्दत ॥ १९॥

ततस्त्वाश्रममागच्छत् सिद्धचारणसेवितम् ।
दिदृक्षुभिस्समाकीर्णं नभस्तारागणैरिव ॥ २०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

॥ ९२ ॥ आश्रमवासपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

[ अस्मिन्नध्याये २०॥ श्लोकाः ]

---

## ॥ अष्टाविंशोऽध्यायः ॥

सञ्जयेन तापसान् प्रति युधिष्ठिरादीनां द्रौपद्यादिस्त्रीणां चाङ्गुलि-निर्देशेन नामनिर्देशः ॥ १ ॥

---

वैशम्पायनः—

स तैस्सह नरव्याघ्रैर् भ्रातृभिर्भरतर्षभ ।
राजा रुचिरपद्माक्षैर् आसाञ्चक्रे तदाश्रमे ॥ १

तापसैश्च महाभागैर् नानादेशसमागतैः ।
द्रष्टुं कुरुपतेः पुत्रान् पाण्डवान् पृथुवक्षसः ॥ २

[1]तेऽब्रुवञ्ज्ञातुमिच्छामः कतमोऽत्र युधिष्ठिरः ।
भीमार्जुनयमाश्चैव द्रौपदी सा यशस्विनी ॥ ३

तानाचख्यौ तदा सूतस् तेषां नाम प्रधानतः ।
सञ्जयो द्रौपदीं चैव सर्वाश्च भरतस्त्रियः ॥ ४

सञ्जयः—

य एष जाम्बूनदशुद्धगौर-
तनुर्महासिंह इव प्रवृद्धः ।
प्रचण्डघोणः पृथुदीर्घनेत्रस्
ताम्रायताक्षः कुरुराज एषः ॥ ५

---

1. व—अर्धद्वयं नास्ति

अयं बृहन्मत्तगजेन्द्रगामी
　　विशुद्धचामीकरराशिगौरः ।
पीनायतांसो गुरुदीर्घबाहुर्
　　वृकोदरः पश्यत पश्यतैनम् ॥　　६

य एष पार्श्वेऽस्य महाधनुष्मान्
　　श्यामो युवा वारणयूथपाभः ।
सिंहोन्नतांसो गजखेलगामी
　　पद्मायताक्षोऽर्जुन एष वीरः ॥　　७

कुन्तीसमीपे पुरुषोत्तमौ तु
　　यमाविमौ विष्णुमहेन्द्रकल्पौ ।
मनुष्यलोके वपुषा समोऽस्ति
　　ययोर्न रूपे न बले न शीले ॥　　८

इयं पुनः पद्मदलायताक्षी
　　मध्यं वयः किञ्चिदिव स्पृशन्ती ।
नीलोत्पलाभा पुरदेवतेव
　　कृष्णा स्थिता मूर्तिमतीव लक्ष्मीः ॥　　९

अस्यास्तु पार्श्वे कनकोपमत्वग्
　　एषा स्थिता मूर्तिमतीव गौरी ।
सत्ये स्थितैषा भगिनी द्विजाग्र्याश्
　　चक्रायुधस्याप्रतिमस्य तस्य ॥　　१०

इयं च जाम्बूनदशुद्धगौरी
पार्थस्य भार्या भुजगेन्द्रकन्या ।
चित्राङ्गदा चैव नरेन्द्रकन्या
यैषा सवर्णाऽऽर्द्रमधूकपुष्पैः ॥ ११

इयं स्वसा राजचमूपतेस्तु
प्रबुद्धनीलोत्पलदामवर्णा ।
पस्पर्ध कृष्णेन नृपस्सदा यो
वृकोदरस्यैष परिग्रहोऽग्र्यः ॥ १२

इयं च राज्ञो मगधाधिपस्य
सुता जरासन्ध इति श्रुतस्य ।
यवीयसो माद्रवतीसुतस्य
भार्या मता चम्पकदामगौरी ॥ १३

इन्दीवरश्यामतनुस्स्थिता तु
यैषा पराऽऽसन्नतरोर्लतेव ।
भार्या मता माद्रवतीसुतस्य
याऽसौ विशुद्धाम्बुजपत्रनेत्रा ॥ १४

इयं तु निष्टप्तसुवर्णगौरी
राज्ञो विराटस्य सुता सपुत्रा ।
भार्याऽभिमन्योर्निहतो रणे यो
द्रोणादिभिस्तैर्विरथो रथस्थैः ॥ १५

एतास्तु सीमन्तशिरोरुहा याश्
शुक्लोत्तरीया नरराजकन्याः ।
राज्ञोऽस्य वृद्धस्य परं शताख्यास्
स्नुषा नृवीराहतपुत्रनाथाः ॥ १६

एता यथामुख्यमुदाहृता वो
ब्रह्मण्यभावादृजुबुद्धिसत्वात् ।
सर्वे भवन्तोऽपि तपोबलाढ्याः
क्षान्ताश्च दान्ताश्च कुलोद्गताश्च ॥ १७

वैशम्पायनः—

एवं स राजा कुरुवृद्धवर्यस्
समागतस्तैर्नरदेवपुत्रैः ।
पप्रच्छ चैनान् कुशलं तदानीं
गतेषु सर्वेष्वथ तापसेषु ॥ १८

योधेषु चाप्याश्रममण्डलं त-
न्मत्वा निविष्टेषु विमुच्य पार्थान् ।
स्त्रीबालवृद्धांश्च सुसन्निविष्टान्
यथार्हतस्तान् कुशलं ह्यपृच्छत् ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
॥ ९३ ॥ आश्रमवासपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
[ अस्मिन्नध्याये १९ श्लोकाः ]

## ॥ एकोनत्रिंशोऽध्यायः ॥

धृतराष्ट्रयुधिष्ठिराभ्यां परस्परकुशलप्रश्नादिपूर्वकं संलापः ॥ १ ॥ युधिष्ठिरेण धृतराष्ट्रं प्रति विदुरः क्वेति प्रश्ने तत्रत्येन केनचिद्यदृच्छया धृतराष्ट्रमुपसर्पतो जनावलोकनेन प्रतिनिवर्तमानस्य च तस्य प्रदर्शनम् ॥ २ ॥ ततो युधिष्ठिरेणानुधावनेन तत्समीपगमनम् ॥ ३ ॥ ततो विदुरस्य योगात् स्वशरीरत्यागेन युधिष्ठिरशरीरे प्रवेशः ॥ ४ ॥ युधिष्ठिरेण धृतराष्ट्रादिषु तदद्भुतनिवेदनम् ॥ ५ ॥

---

धृतराष्ट्रः—

युधिष्ठिर महाबाहो कच्चित् तात कुशल्यसि ।
सहितो भ्रातृभिस्सर्वैः पौरजानपदैस्तथा ॥ १

ये च त्वामनुजीवन्ति कच्चित् तेऽपि निरामयाः ।
सचिवा भृत्यवर्गाश्च गुरवश्चैव ते विभो ॥ २

कच्चिद्वर्तसि पौराणीं वृत्तिं राजर्षिसेविताम् ।
कच्चिद्दायाननुच्छिद्य कोशस्तेऽभिप्रपूर्यते ॥ ३

अरिमध्यस्थमित्रेषु वर्तसे चानुरूपतः ।
ब्राह्मणानग्रहारैर्वा यथावदनुपश्यसि ॥ ४

कच्चित् ते परितुष्यन्ति शीलेन भरतर्षभ ।
शत्रवोऽपि कुतः पौरा भृत्या वा स्वजनोऽपि वा ॥ ५

कच्चिदर्चसि राजेन्द्र श्रद्धावान् पितृदेवताः ।

अतिथींश्चान्नपानेन कच्चिदर्चसि भारत ॥ ६

कच्चिन्न विषये विप्रास् स्वकर्मनिरतास्तव ।
[1]क्षत्रिया वैश्यवर्णा वा शूद्रा वाऽपि कुटुम्बिनः ॥ ७

कच्चित् स्त्रीबालवृद्धं ते न शोचति न याचति ।
जामयः पूजिताः कच्चित् तव गेहे च पार्थिव ॥ ८

कच्चिद्राजर्षिवंशोऽयं त्वामासाद्य नराधिप ।
यथोचितं महाराज यशसो नावसीदति ॥ ९

वैशम्पायनः—

इत्येवंवादिनं सन्तं न्यायवत् प्रत्यभाषत ।
कुशलप्रश्नसंयुक्तं कुशलो वाक्यमब्रवीत् ॥ १०

युधिष्ठिरः—

अपि ते वर्धते राजंस् तपो मन्द्रश्रमश्च ते ॥ १०॥

अपि मज्जननी चेयं शुश्रूषुर्विगतक्लमा ।
अप्यस्यास्सफलो राजन् वनवासो भविष्यति ॥ ११॥

इयं च माता ज्येष्ठा मे शीतवाताध्वकर्शिता ।
घोरेण तपसा युक्ता देवी कच्चिन्न शोचति ॥ १२॥

गतान् पुत्रान् महावीर्यान् क्षत्रधर्मपरायणान् ॥ १३
नापध्यायति वा कच्चिद् अस्मान् पापकृतस्सदा ॥ १३॥

---

1. ग—अर्धपद्यकं नास्ति

क चासौ विदुरो राजन् नैनं पश्यामहे वयम् ।
सञ्जयः कुशली चापि कच्चित् तपसि च स्थिरः ॥*   १४॥

वैशम्पायनः—

इत्युक्तः प्रत्युवाचैनं धृतराष्ट्रो जनाधिपः ॥   १५

धृतराष्ट्रः—

कुशली विदुरः पुत्र तपो घोरं समास्थितः ॥   १५॥

वायुभक्षो निराहारः कृशो धमनिसन्ततः ॥   १६
कदाचिद्दृश्यते विप्रैश् शून्येऽस्मिन् कानने क्वचित् ॥   १६॥

वैशम्पायनः—

इत्येवं वदतस्तस्य [1]जटादिग्धमुखः कृशः ।
दिग्वासा मलदिग्धाङ्गो वनरेणुसमुक्षितः ॥   १७॥

दूरादालक्षितः क्षत्ता तत्राख्यातो महीपते ।
[2]विदुरस्त्वेष धर्मात्मा जनं दृष्ट्वा निवर्तते ॥   १८॥

निवर्तमानं सहसा जनं दृष्ट्वाऽऽश्रमं प्रति ।
तमन्वधावन्नृपतिर् एक एव युधिष्ठिरः ॥   १९॥

प्रविशन्तं वनं घोरं लक्ष्यालक्ष्यं कचित् कचित् ॥   २०

भो भो विदुर राजाऽहं दयितस्ते युधिष्ठिरः ।

---

* क-ग—अत्रैवाध्यायसमाप्तिर्दृश्यते ।

1. क-ग—जटीदग्धमुखः कृशः । घ—जटीमुण्डामुखाकृतिः ।

2. अ-क-ख—इदमर्धं नास्ति

इति ब्रुवन् नरपतिर् यत्नात् तमनुजग्मिवान् ॥ २१

ततो विविक्त एकान्ते तस्थौ बुद्धिमतां वरः ।
विदुरो वृक्षमाश्रित्य कश्चित् तस्मिन् वनान्तरे ॥ २२

तं राजा क्षीणभूयिष्ठम् आकृतीमात्रसूचितम् ।
अभिजज्ञे महाबुद्धिं महाबुद्धिर्युधिष्ठिरः ॥ २३

युधिष्ठिरोऽहमस्मीति वाक्यमुक्त्वाऽग्रतस्स्थितः ।
विदुरस्याश्रमे राजा स च प्रत्याह संज्ञया ॥ २४

ततस्सोऽनिमिषो भूत्वा राजानं समुदैक्षत ।
संयोज्य विदुरस्तस्मिन् दृष्ट्या दृष्टिं समाहितः ॥ २५

विवेश विदुरो धीमान् गात्रैर्गात्राणि चैव हि ।
प्राणान् प्राणेषु च दधद् इन्द्रियाणीन्द्रियेषु च ॥ २६

स योगबलमास्थाय विवेश नृपतेस्तनुम् ।
विदुरो धर्मराजस्य तेजसा प्रज्वलन्निव ॥ २७

विदुरस्य शरीरं तु तथैव स्तब्धलोचनम् ।
वृक्षाश्रितं तदा राजा ददर्श गतचेतनम् ॥ २८

बलस्थमपि चात्मानं मेने बहुगुणं तदा ।
धर्मराजो महाराजस् तं च सस्मार पाण्डवः ॥ २९

पौराणमात्मनस्सर्वं भविष्यं च नराधिप ।
योगधर्मं महातेजा व्यासेन कथितं तथा ॥ ३०

धर्मराजस्तु तत्रैनं सञ्चस्कारयिषुस्तदा ।
दग्धुकामोऽभवद्विद्वान् अथाकाशे वचोऽब्रवीत् ॥ ३१

वाक्--

भो भो राजन् न दग्धव्यम् एतद्विदुरसंज्ञकम् ।
कलेवरमिहैतत् ते नैष धर्मस्सनातनः ॥ ३२

लोकवैलक्षणो नाम भविष्यत्यस्य पार्थिव ।
[1]यतिधर्ममवाप्तोऽसौ न शोच्यो भरतर्षभ ॥ ३३

वैशम्पायनः—

इत्युक्तो धर्मराजस्तु विनिवृत्य महामनाः ।
राज्ञो वैचित्रवीर्यस्य तत् सर्वं प्रत्यवेदयत् ॥ ३४

ततस्स राजा धृतिमान् स च सर्वो जनस्तदा ।
भीमसेनादयश्चैव परं विस्मयमागताः ॥ ३५

तच्छ्रुत्वा प्रीतिमान् राजन् भूत्वा धर्मजमब्रवीत् । ३५॥

धृतराष्ट्रः—

आपो मूलं फलं चैव ममैव प्रतिगृह्यताम् ।
यदन्नो हि नरो राजंस् तदन्नोऽस्यातिथिर्मतः ॥ ३६॥

वैशम्पायनः—

इत्युक्तस्स तथेत्येव प्राह धर्मात्मजो नृपम् ।
फलमूलं च बुभुजे राज्ञा दत्तं सहानुजः ॥ ३७॥

---

1. ख—अर्धचतुष्टयं नास्ति

ततस्ते वृक्षमूलेषु कृतवासपरिग्रहाः ।
तां रात्रिं न्यवसन् सर्वे फलमूलकृतव्रताः ॥ ३८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम् आश्रमवासिकपर्वणि एकोनत्रिंशोऽध्यायः॥ २९ ॥

॥ ९३ ॥ आश्रमवासपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

[ अस्मिन्नध्याये ३८॥ श्लोकाः ]

## ॥ त्रिंशोऽध्यायः ॥

युधिष्ठिरेण धृतराष्ट्राभ्यनुज्ञया भ्रात्रादिभिस्सह महर्षीणामाश्रमदर्शनम् ॥ १ ॥ शतयूपादिभिः सशिष्येण व्यासेन च युधिष्ठिरादिभिः परिवृतस्य धृतराष्ट्रस्याश्रमं प्रत्यागमनम् ॥ २ ॥

वैशम्पायनः—

एवं सा रजनी तेषाम् आश्रमे पुण्यकर्मणाम् ।
शिवा नक्षत्रविद्योता व्यतियाता कुरूद्वह ॥ १

तत्र तत्र कथाश्चासंस् तेषां धर्मार्थलक्षणाः ।
विचित्रपदसञ्चारा नानाश्रुतिभिरन्विताः ॥ २

पाण्डवास्त्वभितो मातुर् धरण्यां सुषुपुस्तदा ।
उत्सृज्य सुमहार्हाणि शयनानि नराधिप ॥ ३

यदाहारोऽभवद्राजा धृतराष्ट्रो महामनाः ।
तदाहारा नृवीरास्ते न्यवसंस्तां निशां तदा ॥ ४

व्यतीतायां तु शर्वर्यां कृतपौर्वाह्णिकक्रियः ।
भ्रातृभिस्सह कौन्तेयो ददर्शाश्रममण्डलम् ॥ ५

सान्तःपुरपरीवारस् सभृत्यस्सपुरस्सरः ।
यथासुखं यथोद्देशं धृतराष्ट्राभ्यनुज्ञया ॥ ६

ददर्श तत्र वेदीस्स सम्प्रज्वलितपावकाः ।
कृताभिषेकैर्मुनिभिर् हुताग्निभिरुपस्थिताः ॥ ७

वानेयपुष्पनिकरैर् आज्यधूमोत्करैरपि ।
ब्राह्मेण वपुषा युक्ता युक्ता मुनिजनस्य ताः ॥ ८

मृगयूथैरनुद्विग्नैस् तत्र तत्र समाश्रितैः ।
अशङ्कितैः पक्षिगणैः प्रगीतैरिव च प्रभो ॥ ९

केकाभिर्नीलकण्ठानां दात्यूहानां च कूजितैः ।
कोकिलानां चित्ररवैश् शुभैश्श्रुतिमनोहरैः ॥ १०

प्राधीतद्विजघोषैश्च क्वचित् क्वचिदलङ्कृतम् ।
फलमूलसमुद्वाहैर् महद्भिश्चोपशोभितम् ॥ ११

ततस्स राजा प्रददौ तापसार्थमुदाहृतान् ।
कलशान् काञ्चनान् राजंस् तथैवौदुम्बराण्यपि ॥ १२

अजिनानि प्रवेणीश्च स्रुक्स्रुवं च महीपतिः ।
कमण्डलूंस्तथा स्थालीं पिठराणि च भारत ॥ १३

भाजनानि च लौहानि पात्रीश्च विविधास्तथा ।

यद्यदिच्छति यावच्च यदन्यदपि काङ्क्षितम् ॥ १४

[1]एवं स राजा धर्मात्मा परीत्याश्रममण्डलम् ।
वसु विश्राण्य तत् सर्वं पुनरायान्महीपतिः ॥ १५

कृताह्निकं च राजानं धृतराष्ट्रं महीपतिम् ।
ददर्शासीनमव्यग्रं गान्धारीसहितं तदा ॥ १६

मातरं चाविदूरस्थां शिष्यवत् प्रणतां स्थिताम् ।
कुन्तीं ददर्श धर्मात्मा सततं धर्मचारिणीम् ॥ १७

स तमभ्यर्च्य राजानं नाम संश्राव्य चात्मनः ।
निषीदेत्यभ्यनुज्ञातो बृस्यामुपविवेश ह ॥ १८

भीमसेनादयश्चैव पाण्डवा कौरवर्षभ ।
अभिवाद्योपसङ्गृह्य निषेदुः पार्थिवाज्ञया ॥ १९

स तैः परिवृतो राजा शुशुभेऽतीव कौरवः ।
बिभ्रद्ब्राह्मीं श्रियं दीप्तां देवैरिव बृहस्पतिः ॥ २०

तेषु तत्रोपविष्टेषु समाजग्मुर्महर्षयः ।
शतयूपप्रभृतयः कुरुक्षेत्रनिवासिनः ॥ २१

व्यासश्च भगवान् विप्रो देवर्षिगणपूजितः ।
वृतश्शिष्यैर्महाराज दर्शयामास तं नृपम् ॥ २२

---

1. ग—एवं स राजा धर्मात्मा सततं धर्मचारिणीम् ।
इति विद्यते । मध्ये अर्धपञ्चकं नास्ति ।

ततस्स राजा कौरव्यः कुन्तीपुत्रश्च धर्मराट् ।
भीमसेनादयश्चैव समुत्थायाभ्यपूजयन् ॥ २३

समागतस्ततो व्यासश् शतयूपादिभिस्तदा ।
धृतराष्ट्रं महीपालम् आस्यतामित्यभाषत ॥ २४

नवं तु विष्टरं कौशं कृष्णाजिनकुशोत्तरम् ।
प्रतिपेदे तदा व्यासस् तदर्थमुपकल्पितम् ॥ २५

ते च सर्वे द्विजश्रेष्ठा विष्टरेषु समन्ततः ।
द्वैपायनाभ्यनुज्ञाता निषेदुर्विपुलौजसः ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

॥ ९३ ॥ आश्रमवासपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

[ अस्मिन्नध्याये २६ श्लोकाः ]

---

## ॥ एकत्रिंशोऽध्यायः ॥

---

व्यासेन धृतराष्ट्रं प्रति कुशलादिप्रश्नपूर्वकं विदुरस्य वास्तवस्वरूपादिप्रतिपादनम् ॥ १ ॥ तथा इतरमहर्षिदुष्कर धृतराष्ट्राभीष्टाश्चर्यकर्मकरणप्रतिज्ञानम् ॥ २ ॥

---

वैशम्पायनः—

तथा समुपविष्टेषु पाण्डवेषु महात्मसु ।
व्यासस्सत्यवतीपुत्रः प्रोवाचामन्त्र्य पार्थिवम् ॥ १

व्यासः—

धृतराष्ट्र महाबाहो कच्चित् ते वर्धते तपः ।
कच्चिन्मनस्ते प्रीणाति वनवासे नराधिप ॥ २

कच्चिद्धृदि न ते शोको राजन् पुत्रविनाशजः ।
कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि तवानघ ॥ ३

कच्चिद्बुद्धिं दृढां कृत्वा चरस्यारण्यकं विधिम् ।
कच्चिद्वधूश्च गान्धारी न शोकेनाभिभूयते ॥ ४

महाप्राज्ञी बुद्धिमती देवी धर्मार्थदर्शिनी ।
आगमापायतत्त्वज्ञा कच्चिदेषा न शोचति ॥ ५

कच्चित् कुन्ती महाभागा शुश्रूषुरनहङ्कृता ।
या परित्यज्य राज्यं स्वं गुरुशुश्रूषणे रता ॥ ६

कच्चिद्धर्मसुतो राजा त्वया प्रीत्याऽभिनन्दितः ।
भीमार्जुनयमाश्चैव कच्चिदेतेऽपि सान्त्विताः ॥ ७

कच्चिन्नन्दसि दृष्ट्वैतान् कच्चित् ते निर्मलं मनः ।
कच्चिद्विशुद्धभावोऽसि जातज्ञानो नराधिप ॥ ८

एतद्धि त्रितयं श्रेष्ठं सर्वभूतेषु भारत ।
[1]निर्वैरता महाराज सत्यमद्रोह एव च ॥ ९

कच्चित् ते नानुतापोऽस्ति वनवासेन भारत ।

1. ख—अर्धचतुष्टयं नास्ति

स्वदते वन्यमन्नं वा मुनिवासांसि वा विभो ॥ १०

विदितं चापि मे राजन् विदुरस्य महात्मनः ।
गमनं विधिना येन धर्मस्य सुमहात्मनः ॥ ११

माण्डव्यशापाद्धि स वै धर्मो विदुरतां गतः ।
महाबुद्धिर्महायोगी महात्मा स महामनाः ॥ १२

बृहस्पतिर्वा देवेषु शुक्रो वाऽप्यसुरेषु यः ।
न तथा बुद्धिसम्पन्नो यथा स पुरुषर्षभः ॥ १३

तपोबलव्ययं कृत्वा सुमहच्चिरसम्भृतम् ।
माण्डव्येनर्षिणा धर्मो ह्यभिभूतस्सनातनः ॥ १४

नियोगाद्ब्रह्मणः पूर्वं मया स्वेन बलेन च ।
वैचित्रवीर्यके क्षेत्रे जातस्स सुमहामतिः ॥ १५

भ्राता तव महात्मा च देवदेवस्सनातनः ।
[1]धारणाच्छ्रेयसो ध्यानाद् यं धर्मं कवयो विदुः ॥ १६

सत्येन वर्धते यो हि दमेन नियमेन च ।
अहिंसया च दानेन तपसा च सनातनः ॥ १७

येन योगबलाज्जातः कुरुराजो युधिष्ठिरः ।
धर्म इत्येव नृपते प्राज्ञेनामितबुद्धिना ॥ १८

यथा ह्यग्निर्यथा वायुर् यथाऽऽपः पृथिवी यथा ।

---

1. क—अर्धत्रयं नास्ति

यथाऽऽकाशं तथा धर्म इह चामुत्र च स्थितः ॥ १९

सर्वगश्चैव कौरव्य सर्वं व्याप्य चराचरम् ।
दृश्यते देवदेवस्स सिद्धैर्निर्दग्धकिल्बिषैः ॥ २०

यो हि धर्मस्स विदुरो विदुरो यस्स पाण्डवः ।
स एष राजन् वश्यस्ते पाण्डवः प्रेष्यवत् स्थितः ॥ २१

प्रविष्टस्सर्वमात्मानं भ्राता ते बुद्धिसम्मतः ।
दृष्ट्वा महात्मा कौन्तेयं महायोगबलान्वितः ॥ २२

त्वां चापि श्रेयसा योक्ष्ये नचिराद्भरतर्षभ ।
संशयच्छेदनार्थं हि प्राप्तं मां विद्धि पुत्रक ॥ २३

न कृतं यत् पुरा कैश्चित् कर्म लोके मनीषिभिः ।
आश्चर्यभूतं तपसः फलं सन्दर्शयामि वः ॥ २४

किमिच्छसि महीपाल मत्तः प्राप्तुममानुषम् ।
द्रष्टुं स्प्रष्टुमथ श्रोतुं वद कर्तास्मि तं नृप ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

॥ ९३ ॥ आश्रमवासपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

[ अस्मिन्नध्याये २५ श्लोकाः ]

[ आश्रमवासिकपर्व समाप्तम् ]

## ॥ द्वात्रिंशोऽध्यायः ॥

[ पुत्रदर्शनपर्व ]

धृतराष्ट्राश्रमे भ्रातादिभिः सैन्येन च सह मासमेकं निवसति युधिष्ठिरे कदाचन व्यासधृतराष्ट्रौ परिवार्य नारदादिभिर्गान्धार्यादिभिः पाण्डवैश्च समुपवेशनम् ॥ १ ॥ व्यासेन धृतराष्ट्राय स्वतपोबलेनाभीष्टसम्पादनशंसनम् ॥ २ ॥ धृतराष्ट्रेण व्यासाय स्वस्य बन्धुजनमरणजनितदुःखनिवेदनम् ॥ ३ ॥

जनमेजयः—

वनवासं गते विप्र धृतराष्ट्रे महीपतौ ।
सभार्ये नृपशार्दूले वध्वा कुन्त्या समन्विते ॥ १

विदुरे चापि धर्मज्ञे धर्मराजं व्यपाश्रिते ।
वसत्सु पाण्डुपुत्रेषु सर्वेष्वाश्रममण्डले ॥ २

यत् तदाश्चर्यमिति वै करिष्यामीत्युवाच ह ।
व्यासः परमतेजस्वी महर्षिस्तद्वदस्व मे ॥ ३

वनवासे च कौरव्यः कियन्तं कालमच्युतः ।
युधिष्ठिरो नरपतिर् न्यवसत् सजनो द्विज ॥ ४

किमाहाराश्च ते तत्र ससैन्या न्यवसन् प्रभो ।
सान्तःपुरा महात्मान एतदिच्छामि वेदितुम् ॥ ५

वैशम्पायनः—

वनवासगतं राजन् धृतराष्ट्रं महीपतिम् ।

युधिष्ठिरोऽभ्ययाद्द्रष्टुं ससैन्यो भ्रातृभिस्सह ॥ ६

प्रथमे दिवसे चैषाम् आपो मूलं फलं तथा ।
भोजनं भूमिशय्या च तत्रासीद्भरतर्षभ ॥ ७

तेऽनुज्ञातास्ततो राजन् कुरुराजेन पाण्डवाः ।
विविधान्यन्नपानानि शय्याश्चान्वभवन् वने ॥ ८

मासमेकं विजह्रुस्ते ससैन्यान्तःपुरा वने ।
अथ तत्रागमद्व्यासो यथोक्तं ते मयाऽनघ ॥ ९

तथा तु तेषां सर्वेषां कथाभिर्नृपसन्निधौ ।
व्यासमन्वासतां राजन्नाजग्मुर्मुनयोऽपरे ॥ १०

नारदः पर्वतश्चैव देवलश्च महातपाः ।
विश्वावसुस्तुम्बुरुश्च चित्रसेनश्च भारत ॥ ११

तेषामपि यथान्यायं पूजां चक्रे महामनाः ।
धृतराष्ट्राभ्यनुज्ञातः कुरुराजो युधिष्ठिरः ॥ १२

निषेदुस्ते ततस्सर्वे पूजां तां प्राप्य भारत ।
आसनेष्वथ पुण्येषु बर्हिष्केषु शुभेषु च ॥ १३

तेषु तत्रोपविष्टेषु स नृपस्सुमहातपाः ।
पाण्डुपुत्रैः परिवृतो निषसाद कुरूद्वहः ॥ १४

गान्धारी चाथ कुन्ती च द्रौपदी सात्वती तथा ।
स्त्रियस्सर्वास्तथाऽप्यन्यास सहोपविविशुस्तदा ॥ १५

तेषां तत्र कथा दिव्या धर्मिष्ठाश्चाभवन् नृप ।
राजर्षीणां पुराणानां देवासुरविमिश्रिताः ॥　　१६

ततः कथान्ते व्यासस्तं प्रज्ञाचक्षुषमीश्वरम् ।
प्रोवाच वदतां श्रेष्ठः पुनरेव स तद्वचः ॥　　१७

प्रीयमाणो महातेजास् सर्ववेदविदां वरः ॥　　१७॥

व्यासः—

विदितं मम राजेन्द्र यत् ते हृदि विवक्षितम् ।
दह्यमानस्य शोकेन पुत्रपौत्रकृतेन वै ॥　　१८॥

गान्धार्याश्चैव यद्दुःखं हृदि तिष्ठति पार्थिव ।
कुन्त्याश्चैव कुरुश्रेष्ठ द्रौपद्याश्च हृदि स्थितम् ॥　　१९॥

[1]यच्च धारयते दुःखं तीव्रं पुत्रविनाशजम् ।
सुभद्रा कृष्णभगिनी तच्चापि विदितं मम ॥　　२०॥

श्रुत्वा समागममिमं सर्वेषां वस्ततो नृप ।
संशयच्छेदनार्थाय प्राप्तः कौरवनन्दन ॥　　२१॥

इमे च देवगन्धर्वास् सर्वे चैव महर्षयः ।
पश्यन्तु तपसो वीर्यम् अद्य मे चिरसम्भृतम् ॥　　२२॥

तदुच्यतां महाबाहो कं कामं प्रदिशामि ते ।
प्रवणोऽस्मि वरं दातुं पश्य मे तपसो बलम् ॥　　२३॥

---

1. अ—अर्धषट्कं नास्ति

**वैशम्पायनः—**

एवमुक्तस्स राजेन्द्रो व्यासेनामितबुद्धिना ।
मुहूर्तमिव निश्चित्य वचनायोपचक्रमे ॥ २४॥

**धृतराष्ट्रः—**

धन्योऽस्म्यनुगृहीतोऽस्मि सफलं जीवितं च मे ।
यन्मे समागमोऽद्येह भवद्भिस्सह साधुभिः ॥ २५॥

अद्य चाप्यवगच्छामि गतिमिष्टां महात्मनः ।
भवद्भिर्ब्रह्मकल्पैर्यत् समेतोऽहं तपोधनाः ॥ २६॥

दर्शनादेव भवतां पूतोऽहं नात्र संशयः ।
विद्यते न भयं चापि परलोके ममानघाः ॥ २७॥

किं तु तस्य सुदुर्बुद्धेर् मन्दस्यापनयैर्भृशम् ।
दूयते मे मनो नित्यं शोचतः पुत्रगर्धिनः ॥ २८॥

अपापाः पाण्डवा येन निरस्ताः पापबुद्धिना ।
घातिता पृथिवी चेयं सहया सरथद्विपा ॥ २९॥

राजानश्च महात्मानो नानाजनपदेश्वराः ।
आगम्य मम पुत्रार्थे ते च मृत्युवशं गताः ॥ ३०॥

ये ते पुत्रांश्च दारांश्च प्राणांश्च मनसः प्रियान् ।
[1]परित्यज्य गताश्शूराः प्रेतराजनिवेशनम् ॥ ३१॥

[2]का नु तेषां गतिर्ब्रह्मन् मित्रार्थे ये हता मृधे ।

---

1. क—भोगांश्च विविधांस्तात इष्टापूर्तांस्तथैव च। [अधिकःपाठः]
2. क-ख—अर्धश्लोकं नास्ति

तथैव पुत्रपौत्राणां मम ये निहता युधि ॥ ३२॥

[1]दूयते मे मनोऽतीव घातयित्वा महाबलम् ।
भीष्मं शान्तनवं वृद्धं द्रोणं च द्विजसत्तमम् ॥ ३३॥

मम पुत्रेण मूढेन पापेन च सुहृद्द्विषा ।
क्षयं नीतं कुलं दीप्तं पृथिवीराज्यमिच्छता ॥ ३४॥

एते मदर्थे पुत्रांश्च दारांश्च मनसः प्रियान् ।
भोगांश्च विविधांस्तात इष्टापूर्तांस्तथैव च ॥ ३५॥
परित्यज्य गताश्शूराः प्रेतराजनिवेशनम् ॥ ३६

एतत् सर्वमनुस्मृत्य दह्यमानो दिवानिशम् ।
न शान्तिमुपगच्छामि पुत्रशोकसमाहतः ॥ ३७
इति मे चिन्तयानस्य पितश्शर्म न विद्यते ॥ ३७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
॥ ५४ ॥ पुत्रदर्शनपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये ३७॥ श्लोकाः ]

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

तत्र गान्धार्या व्यासं प्रति धृतराष्ट्रस्य पुत्रदिदृक्षानिवेदने व्यासेन कुन्तीं प्रति तदभीष्टनिवेदनचोदना ॥ १ ॥

वैशम्पायनः—

तच्छ्रुत्वा वदतस्तस्य राजर्षेः परिदेवितम् ।
पुनर्नवीकृतश्शोको गान्धार्याः पुरुषर्षभ ॥ १

1. ध—इदमर्धं नास्ति

कुन्त्या द्रुपदकन्यायास् सुभद्रायाश्च पार्थिव ।
तासां च वरनारीणां वधूनां कौरवस्य ह ॥ २

पुत्रशोकसमाविष्टा गान्धारी त्वब्रवीदिदम् ।
श्वशुरं बद्धनयना देवी प्राञ्जलिरुत्थिता ॥ ३

गान्धारी—

लोकान्तरगतान् पुत्रान् अयं काङ्क्षति मानद ।
तच्चास्य मानसं ज्ञातं भगवंस्तपसा त्वया ॥ ४

षोडशेमानि वर्षाणि गतानि मुनिपुङ्गव ।
तस्य राज्ञो हतान् पुत्राञ् शोचतो मम चापि भो ॥ ५

पुत्रशोकसमाविष्टो निश्श्वसन् ह्येष भूमिपः ।
न शेते वसतीस्सर्वा धृतराष्ट्रो महामुने ॥ ६

लोकानन्यान् समर्थोऽसि स्रष्टुं सर्वांस्तपोबलात् ।
किमु लोकान्तरगतान् राज्ञो दर्शयितुं सुतान् ॥ ७

इयं च द्रौपदी कृष्णा हतज्ञातिसुता तदा ।
शोचत्यतीव साध्वी ते स्नुषया दयिता स्नुषा ॥ ८

तथा कृष्णस्य भगिनी सुभद्रा भद्रभाषिणी ।
सौभद्रवधसन्तप्ता भृशं तप्यति भामिनी ॥ ९

इयं च भूरिश्रवसो भार्या परमदुःखिता ।
भर्तृव्यसनशोकार्ता न शेते वसतीः प्रभो ॥ १०

यस्यास्तु श्वशुरो धीमान् बाह्लिकस्स कुरूद्वहः ।
निहतस्सोमदत्तश्च पित्रा सह महारणे ॥　　११

श्रीमद्यास्य महाबुद्धेस् सङ्ग्रामेष्वपलायि तत् ।
पुत्रस्य ते पुत्रशतं निहतं यद्रणाजिरे ॥　　१२

तस्य भार्याशतमिदं दुःखशोकसमाहतम् ।
पुनः पुनर्वर्धयते शोकं राज्ञो ममैव च ॥　　१३

महता शोकभारेण मामुपास्ते महामुने ॥　　१३॥

[1]ये च शूरा महात्मानश् श्वशुरा मे महारथाः ।
सोमदत्तप्रभृतयः का नु तेषां गतिः प्रभो ॥　　१४॥

तव प्रसादाद्भगवन् विशोकोऽयं महीपतिः ।
कुर्यात् कालमहं चेयं वधूस्तव महामुने ॥　　१५॥

वैशम्पायनः—

इत्युक्तवत्यां गान्धार्यां कुन्ती व्रतकृशानना ।
प्रच्छन्नजातं पुत्रं तं सस्मारादित्यसन्निभम् ॥　　१६॥

तामृषिर्वरदो व्यासो दूरश्रवणदर्शनः ।
अपश्यद्दुःखितां देवीं मातरं सव्यसाचिनः ॥　　१७॥

तामुवाच ततो व्यासो यत् ते कार्यं विवक्षितम् ।
तद्ब्रूहि त्वं महाप्राज्ञे यत् ते मनसि वर्तते ॥　　१८॥

---

1. ग—अर्धचतुष्टयं नास्ति

ततः कुन्ती श्वशुरयोः प्रणम्य शिरसा तदा ।
उवाच वाक्यं सव्रीडा विवृण्वाना पुरा कृतम् ॥ १९॥

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ ९४ ॥ पुत्रदर्शनपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये १९॥ श्लोकाः ]

## ॥ चतुस्त्रिंशोऽध्यायः ॥

कुन्त्या व्यासं प्रति स्वस्मिन् दुर्वासःप्रसादेन सूर्यात् कर्णस्योत्पत्तिकथनपूर्वकं स्वस्य तद्दिदृक्षानिवेदनम् ॥ १ ॥ व्यासेन कुन्तीं प्रति हेतूपन्यासेन तत्प्रयुक्तदोषशङ्कानिरसनम् ॥ २ ॥

कुन्ती—

भगवञ्श्वशुरो मेऽसि दैवतस्यापि दैवतम् ।
त्वं मे देवातिदेवस्त्वं शृणु सत्यां गिरं मम ॥ १

तपस्वी कोपनो विप्रो दुर्वासा नाम मे पितुः ।
भिक्षामुपगतो भोक्तुम् अहं तं पर्यतोषयम् ॥ २

शौचेन स्वागतेनैव शुद्धेन मनसा तथा ।
कोपस्थानेष्वपि महत्स्वकुप्यन्त्या कदाचन ॥ ३

स मे वरमदात् प्रीतः कृतकृत्याऽहमब्रवम् ।
अवश्यं ते ग्रहीतव्यम् इति मां सोऽब्रवीद्वचः ॥ ४

ततश्शापभयाद्विप्रम् अवोचं पुनरेव तम् ।
एवमस्त्विति स प्राह पुनरेव च मां द्विजः ॥　　५

दुर्वासाः—

धर्मस्य जननी भद्रे भवित्री त्वं शुभानने ।
वशे स्थास्यन्ति देवास्ते यांस्त्वमावाहयिष्यसि ॥　　६

कुन्ती—

इत्युक्त्वाऽन्तर्हितो विप्रस् ततोऽहं विस्मिताऽभवम् ।
न च सर्वास्ववस्थासु स्मृतिर्मे विप्रणश्यति ॥　　७

अथ हर्म्यतलस्थाऽहं रविमुद्यन्तमीक्षती ।
संस्मृत्य तदृषेर्वाक्यं स्पृहयन्ती दिवाकरम् ॥　　८

स्थिताऽहं बालभावेन तत्र दोषमबुद्ध्यती ॥　　८॥

अथ देवस्सहस्रांशुर् मत्समीपगतोऽभवत् ।
द्विधा कृत्वाऽऽत्मनो देहं भूमौ च गगनेऽपि च ॥　　९॥

तताप लोकानेकेन द्वितीयेनागमच्च माम् ॥　　१०

स मामुवाच वेपन्तीं वरं मत्तो वृणीष्व वै ।
गम्यतामिति तं चाहं प्रणम्य शिरसाऽवदम् ॥　　११

स मामुवाच तिग्मांशुर् वृथाऽऽह्वानं न मे क्षमम् ।
धक्ष्यामि त्वां च विप्रं च येन दत्तो वरस्तव ॥　　१२

तमहं रक्षती विप्रं शापादनपराधिनम् ॥

पुत्रो मे त्वत्समो देव भवेदिति ततोऽब्रवम् ॥ १३

ततो मां तेजसाऽऽविश्य मोहयित्वा च भानुमान् ।
उवाच भविता पुत्रस् तवेत्यभ्यगमद्दिवम् ॥ १४

ततोऽहमन्तर्भवने पितुश्चित्तानुरक्षिणी ।
गूढोत्पन्नं सुतं बालं जले कर्णमवासृजम् ॥ १५

[1]नूनं तस्यैव देवस्य प्रसादात् पुनरेव तु ।
कन्याऽहमभवं विप्र यथा प्राह स मामृषिः ॥ १६

स मया मूढया पुत्रो ज्ञायमानोऽप्युपेक्षितः ।
तन्मां दहति विप्रर्षे तत् सर्वं विदितं त्वया ॥ १७

यदि पापमपापं वा तवैतद्विवृतं मया ।
तन्मे दहन्तं भगवन्नपनेतुमिहार्हसि ॥ १८

यच्चास्य राज्ञो विज्ञातं हृदिस्थं भगवंस्त्वया ।
तं चायं लभतां कामम् अद्यैव मुनिसत्तम ॥ १९

वैशम्पायनः—

इत्युक्तः प्रत्युवाचैनां व्यासो वेदविदां वरः ॥ १९॥

व्यासः—

साधु सर्वमिदं तथ्यम् एवमेतद्यथाऽऽत्थ माम् ॥ २०

अपराधश्च ते नास्ति कन्याभावगता ह्यसि ।

---

1. ख—अर्धचतुष्टयं नास्ति

देवा आश्चर्यवन्तो हि शरीराण्याविशन्ति वै ॥　　२१

सन्ति देवनिकायाश्च सङ्कल्पाज्जनयन्ति ये ।
वाचा दृष्ट्या तथा स्पर्शात् सङ्घर्षेणेति पञ्चधा ॥　　२२

मनुष्यधर्मो दैवेन धर्मेण न हि युज्यते ।
इति कुन्ति विजानीहि व्येतु ते मानसो ज्वरः ॥　　२३

[1]सर्वं बलवतां पथ्यं सर्वं बलवतां शुचि ।
सर्वं बलवतां धर्म्यं सर्वं बलवतां स्वकम् ॥　　२४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
॥ ९४ ॥ पुत्रदर्शनपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये २४ श्लोकाः ]

---

## ॥ पञ्चत्रिंशोऽध्यायः ॥

व्यासेन गान्धारीं प्रति समरहतानां दुर्योधनादीनां सर्वेषां रात्रौ प्रदर्शनप्रतिज्ञानपूर्वकं धृतराष्ट्रादीनां विशिष्य गन्धर्वाद्यंशत्वकथनम् ॥ १ ॥ धृतराष्ट्रादिभिर्व्यासवचनाद्गङ्गातीरमेत्य बन्धुदर्शनौत्कण्ठ्येन कृच्छ्रादहर्यापनम् ॥ २ ॥

---

व्यासः—

भद्रे द्रक्ष्यसि गान्धारि पुत्रान् भ्रातॄन् सुहृद्गणान् ।
वधूश्च पतिभिस्सार्धं निशि सुप्तोत्थितानिव ॥　　१

1. ग—इदमर्धं नास्ति

कर्णं द्रक्ष्यति कुन्ती च सौभद्रं चापि यादवी ॥
द्रौपदी पञ्च पुत्रांश्च पितॄन् भ्रातॄंस्तथैव च ॥ २
पूर्वमेवैष हृदये व्यवसायोऽभवन्मम ।
अथास्मि चोदितो राज्ञा भवत्या पृथयैव च ॥ ३
न ते शोच्या महात्मानस् सर्वे एव नरर्षभाः ।
क्षत्रधर्मरतास्सन्तस् तथा हि निधनं गताः ॥ ४
भवितव्यमवश्यं तत् सुरकार्यमनिन्दिते ।
अवतेरुस्ततस्सर्वे देवा भागैर्महीतलम् ॥ ५
गन्धर्वाप्सरसश्चैव सिद्धा देवर्षयोऽपि च ।
ततो देवगणाश्चैव पिशाचा गुह्यकास्तथा ॥ ६
दैत्याश्च दानवाश्चैव तथा ब्रह्मर्षयोऽमलाः ।
त एव निधनं प्राप्ताः कुरुक्षेत्रे रणाजिरे ॥ ७
गन्धर्वराजो यो धीमान् धृतराष्ट्र इति श्रुतः ।
स एव मानुषे लोके धृतराष्ट्रः पतिस्तव ॥ ८
पाण्डुं मरुद्गणं विद्धि विशिष्टतममच्युतम् ।
धर्मस्यांशोऽभवत् क्षत्ता राजा चायं युधिष्ठिरः ॥ ९
कलिं दुर्योधनं विद्धि शकुनिं द्वापरं नृपम् ।
दुश्शासनादीन् विद्धि त्वं राक्षसान् शुभदर्शने ॥ १०
मरुद्गणाद्भीमसेनं बलवन्तमरिन्दमम् ।

विद्धि च त्वं नरमृषिम् इमं पार्थं धनञ्जयम् ॥　　११
नारायणं हृषीकेशम् अश्विनौ यमजावुभौ ॥　　११॥

द्विधा कृत्वाऽऽत्मनो देहम् आदित्यं तपतां वरम् ।
लोकांश्च तापयानं वै विद्धि कर्णं पृथासुतम् ॥　　१२॥

यस्स वैरार्थमुद्भूतस् सङ्घर्षजननस्तथा ।
तं कर्णं विद्धि कल्याणि भास्करं शुभदर्शने ॥　　१३॥

यश्च पाण्डवदायादो हतष्षड्भिर्महारथैः ।
स सोम एव सौभद्रो योगादेवाभवद्द्विधा ॥　　१४॥

द्रौपद्या सह सम्भूतो धृष्टद्युम्नोऽथ पावकात् ।
अग्नेर्भागश्शिखण्डी तु पौलस्त्यानां महारथः ॥　　१५॥

द्रोणं बृहस्पतेर्भागं विद्धि द्रौणिं च रुद्रजम् ।
गाङ्गेयो वसुवीर्येण देवो मानुषतां गतः ॥　　१६॥

एवमेते महाप्रज्ञे देवा मानुष्यमेत्य ह ।
ततः पुनर्गतास्स्वर्गं कृते कर्मणि शोभने ॥　　१७॥

[1]यच्च वो हृदि सर्वेषां दुःखमेतच्चिरं स्थितम् ।
तदद्य व्यपनेष्यामि परलोककृताद्भयात् ॥　　१८॥

सर्वे भवन्तो गच्छन्तु नदीं भागीरथीं प्रति ।
तत्र द्रक्ष्यथ सर्वांस्तान् ये हतास्तत्र संयुगे ॥　　१९॥

---

1. ब—इदमध नास्ति

वैशम्पायनः—

इति व्यासस्य वचनं सर्वे श्रुत्वा जनास्तदा ।
महता सिंहनादेन गङ्गामभिमुखा ययुः ॥ २०॥

धृतराष्ट्रश्च सामात्यः प्रययौ सह पाण्डवैः ।
सहितो मुनिशार्दूलैर् गन्धर्वैश्च समागतैः ॥ २१॥

ततो गङ्गां समासाद्य क्रमेण स जनार्णवः ।
निवासमकरोत् सर्वो यथाप्रीति यथावयः ॥ २२॥

राजा च पाण्डवैस्सार्धम् इष्टे देशे सहानुगः ।
निवेशमकरोद्धीमान् सस्त्रीवृद्धपुरस्सरः ॥ २३॥

जगाम तदहश्चापि तेषां वर्षशतं यथा ।
निशां प्रतीक्षमाणानां दिदृक्षूणां सुतान् मृतान् ॥ २४॥

ततः पुण्यं गिरिवरम् अस्तमभ्यगमद्रविः ।
[1]ततः कृताभिषेकास्ते नैशं कर्म समारभन् ॥ २५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

॥ ९४ ॥ पुत्रदर्शनपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[ अस्मिन्नध्याये २५॥ श्लोकाः ॥

---

1. क—व्यासमभ्यागमन् सर्वे ये तत्रासन् समागताः । [अधिकः पाठः]

## ।। षट्त्रिंशोऽध्यायः ।।

व्यासेन निशायां गङ्गाजलावगाहनेन समाह्वाने पुरा समरनिहतैः कुरुपाण्डवोभयपक्षीयैः सर्वैः स्वस्वाभरणायुधवाहनादिभिः सह सलिलादुद्गम्य तीरोत्तरणम् ॥ १ ॥ धृतराष्ट्रेण व्यासप्रसादलब्धदिव्यचक्षुषा दुर्योधनादीनां सर्वेषामवलोकनम् ॥ २ ॥

वैशम्पायनः—

ततो निशायां प्राप्तायां कृतसायाह्निकक्रियाः ।
व्यासमभ्यगमन् सर्वे ये तत्रासन् समागताः ॥ १

धृतराष्ट्रस्तु धर्मात्मा पाण्डवैस्सहितस्तदा ।
शुचिरेकमनास्सार्धम् ऋषिभिस्तैरुपाविशत् ॥ २

गान्धार्या सह नार्यस्तु सहितास्समुपाविशन् ।
[1]पौरजानपदश्चैव जनस्सर्वो यथावयः ॥ ३

ततो व्यासो महातेजाः पुण्यं भागीरथीजलम् ।
अवतीर्याजुहावाथ सर्वाँल्लोकान् महामुनिः ॥ ४

पाण्डवानां च ये योधाः कौरवाणां च सर्वशः ।
राजानश्च महाभागा नानादेशनिवासिनः ॥ ५
[2]प्रतीक्ष्य तस्थुस्ते सर्वे तेषामागमनं प्रति ॥ ५॥

ततस्तु तुमुलश्शब्दो जलान्ते जनमेजय ।

1. ग—अर्धचतुष्टयं नास्ति 2. अ-ख-ग-घ—इदमर्धं नास्ति

प्रादुरासीद्यथायोगं कुरुपाण्डवसेनयोः ॥ ६॥

ततस्ते पार्थिवास्सर्वे भीष्मद्रोणपुरस्सराः ।
ससैन्यास्सलिलात् तस्मात् समुत्तस्थुस्सहस्रशः ॥ ७॥

विराटद्रुपदौ चोभौ सहपुत्रौ ससैनिकौ ।
सौभद्रो द्रौपदेयाश्च राक्षसश्च घटोत्कचः ॥ ८॥

कर्णदुर्योधनौ योऽसौ शकुनिश्च महारथाः ।
दुश्शासनादयश्चैव धार्तराष्ट्रा महारथाः ॥ ९॥

जारासन्धिर्भगदत्तो जलसन्धिश्च पार्थिवः ।
भूरिश्रवाश्शलश्शल्यो वृषसेनस्सहानुजः ॥ १०॥

[1]लक्ष्मणो राजपुत्रश्च धृष्टद्युम्नस्सहानुजः ।
शिखण्डिपुत्रास्सर्वे च धृष्टकेतुस्सहानुजः ॥ ११॥

अचलो राजकश्चैव राक्षसश्चाप्यलम्बुसः ।
बाह्लिकस्सोमदत्तश्च चेकितानश्च पार्थिवः ॥ १२॥

एते चान्ये च बहवो बहुत्वाद्ये न कीर्तिताः ।
सर्वे भास्वरदेहास्ते समुत्तस्थुर्जलाशयात् ॥ १३॥

यस्य वीरस्य यो वेषो यो ध्वजो यश्च वाहनः ।
यद्धर्म यत् प्रहरणं तेन तेन स दृश्यते ॥ १४॥

दिव्याम्बरधरास्सर्वे सर्वे भ्राजिष्णुकुण्डलाः ।

---

1. क—अर्धद्वयं नास्ति

निर्वैरा निरहङ्कारा विगतक्रोधमन्यवः ॥　१५॥

गन्धर्वैरुपगीयन्तस् स्तूयमानाश्च वन्दिभिः ।
दिव्यमाल्यस्रजोपेतास् तथा दिव्याप्सरोवृताः ॥　१६॥

धृतराष्ट्रस्य तु तदा दिव्यं चक्षुर्नराधिप ।
मुनिस्सत्यवतीपुत्रः प्रीतः प्रादात् तपोबलात् ॥　१७॥

दिव्यज्ञानबलोपेता गान्धारी च यशस्विनी ।
ददर्श सर्वान् पुत्रांस्तान् ये चान्येऽपि मृधे हताः ॥　१८॥

तदद्भुतमचिन्त्यं च सुमहद्रोमहर्षणम् ।
विस्मितस्स जनस्सर्वो ददर्शानिमिषेक्षणः ॥　१९॥

तदुत्सवमहोदग्रं हृष्टनारीनराकुलम् ।
ददृशे बलमायान्तं चित्रं पटगतं यथा ॥　२०॥

धृतराष्ट्रस्तु तान् सर्वान् पश्यन् दिव्येन चक्षुषा ।
मुमुदे भरतश्रेष्ठः प्रसादात् तस्य वै मुनेः ॥　२१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

॥ ९४ ॥ पुत्रदर्शनपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[ अस्मिन्नध्याये २१॥ श्लोकाः ]

---

## ॥ सप्तत्रिंशोऽध्यायः ॥

धृतराष्ट्रयुधिष्ठिरादिभिर्व्यासप्रसादोज्जीविते हतपूर्वबन्धुभिः सह संल्लापादिना तस्यां रात्रौ सुखविहरणम् ॥ १ ॥

---

वैशम्पायनः—

ततस्ते भरतश्रेष्ठास् समाजग्मुः परस्परम् ।
विगतक्रोधमात्सर्यास् सर्वे विगतकल्मषाः ॥ १

विधिं परममास्थाय ब्रह्मर्षिविहितं शुभम् ।
सम्प्रीतमनसस्सर्वे देवलोक इवामराः ॥ २

पित्रा पुत्राश्च माता च भार्याश्च पतिभिस्सह ।
भ्राता भ्रात्रा सखा चैव सख्या राजन् समागताः ॥ ३

पाण्डवाश्च महेष्वासाः कर्णं सौभद्रमेव च ।
सम्प्रहृष्टास्समाजग्मुर् द्रौपदेयांश्च सर्वशः ॥ ४

ततस्ते प्रीयमाणा वै कर्णेन सह पाण्डवाः ।
समेत्य पृथिवीपालास् सौहृदे च स्थिता भवन् ॥ ५

ऋषिप्रसादात् तेऽन्येच क्षत्रिया नष्टमन्यवः ।
असौहृदं परित्यज्य सौहृदे पर्यवस्थिताः ॥ ६

एवं समागतास्सर्वे गुरुभिर्ब्राह्मणैस्तथा ।
पुत्रैश्च पुरुषव्याघ्राः कुरवोऽन्ये च मानवाः ॥ ७

तां रात्रिमेकां कृत्स्नां ते विहृत्य प्रीतमानसाः ।
मेनिरे परितोषेण नृपास्स्वर्गगता यथा ॥ ८

नात्र शोको भयं त्रासो नारतिर्नायशोऽभवत् ।
परस्परं समागम्य योधानां भरतर्षभ ॥ ९

समागतास्ताः पितृभिर् भ्रातृभिः पतिभिस्सुतैः ।
मुदं परमिकां प्राप्य नार्यो दुःखान्यथात्यजन् ॥ १०

देवलोकं गता ये च ये च ब्रह्मसदो गताः ।
ये चापि वारुणं लोकं ये च गोलोकमाश्रिताः ॥ ११

तथा वैवस्वतं लोकं ये च यक्षानुपागताः ।
राक्षसांश्च पिशाचांश्च कुरूंश्चापि तथोत्तरान् ॥ १२

विचित्राश्च गतीरन्ये ये प्राप्ताः कर्मभिर्नराः ।
सर्वे ते तद्वयोरूपवेषास्तत्र समभ्ययुः ॥ १३

एकां रात्रिं विहृत्यैवं ते वीरास्ताश्च योषितः ।
आमन्त्र्यान्योन्यमाश्लिष्य ततो जग्मुर्यथागतम् ॥ १४

ततो विसर्जयामास लोकांस्तान् मुनिपुङ्गवः ।
क्षणेनान्तर्हिताश्चैव प्रेक्षतामेव तेऽभवन् ॥ १५

अवगाह्य महात्मानः पुण्यां त्रिपथगां नदीम् ।
सविमानास्सहस्त्यश्वास् स्वानि स्थानानि भेजिरे ॥ १६

देवलोकं ययुः केचित् केचिद्ब्रह्मसदस्तदा ।

केचिच्च वारुणं लोकं केचित् कौबेरमाप्नुवन् ॥ १७

तथा वैवस्वतं लोकं केचिदेव नृपा ययुः ।
राक्षसांश्च पिशाचांश्च केचिच्चाप्युत्तरान् कुरून् ॥ १८

विचित्रगतयश्चान्या या या यस्य नरस्य ह ।
ते जग्मुश्च महात्मानस् सवाहनपदानुगाः ॥ १९

गतेषु तेषु सर्वेषु सलिलस्थो महामुनिः ।
धर्मशीलो महातेजाः कुरूणां हितकृत् सदा ॥ २०

ततः प्रोवाच तास्सर्वाः क्षत्रिया निहतेश्वराः ॥ २०॥

व्यासः—

या याः पतिकृताँल्लोकान् इच्छन्ति परमस्त्रियः ।
ता जाह्नवीजलं क्षिप्रम् अवगाहन्त्वतन्द्रिताः ॥ २१॥

वैशम्पायनः—

ततस्तस्य वचश्श्रुत्वा श्रद्दधाना वराङ्गनाः ।
श्वशुरं समनुज्ञाप्य विविशुर्जाह्नवीजलम् ॥ २२॥

विमुक्ता मानुषैर्देहैस् ततस्ता भर्तृभिस्सह ।
समाजग्मुस्तथा साध्व्यस् सर्वा एव विशाम्पते ॥ २३॥

एवं क्रमेण सर्वास्ताश् शीलवत्यः कुरुस्त्रियः ।
प्रविश्य तोयं निर्मुक्ता जग्मुर्भर्तृसलोकताम् ॥ २४॥

दिव्यरूपसमायुक्ता दिव्याभरणभूषिताः ।
दिव्यमाल्याम्बरधरा यथा स्वपतयस्तथा ॥ २५॥

ताद्दशीलसत्त्वसम्पन्ना वितमस्का गतक्लमाः ।
सर्वास्सर्वगुणैर्युक्तास् स्वस्थानं प्रतिपेदिरे ॥ २६॥
यस्य यस्य च यः कामस् तस्मिन् कालेऽभवत् तदा ।
तं तं विसृष्टवान् व्यासो वरदो धर्मवत्सलः ॥ २७॥
तं दृष्ट्वा नरदेवानां पुनरागमनं नराः ।
जहृषुर्मुदिताश्चासन् नानादेशगता अपि ॥ २८॥
ते नष्टभयसङ्कल्पा नरा विगतकल्मषाः ।
बभूवुः पौरवास्सर्वे तं दृष्ट्वाऽऽश्चर्यमुत्तमम् ॥ २९॥
प्रियैस्समागमं तेषां इमं यश्शृणुयान्नरः ।
प्रियाणि लभते नित्यम् इह चैव परत्र च ॥ ३०॥
इष्टबान्धवसंयोगम् अनायासमनामयम् ।
य इमं श्रावयेद्विद्वान् स सिद्धिं प्राप्नुयात् पराम् ॥ ३१॥
स्वाध्याययुक्ता पुरुषाः क्रियायुक्ताश्च ये नराः ।
अध्यात्मयोगतृप्ताश्च तपस्तृप्ताश्च मानवाः ॥ ३२॥
पुनस्ते दर्शनं प्राप्ताः पुनश्च परिकीर्तिताः ।
पुनः पुनः प्रयच्छन्ति शृण्वतामभयं सदा ॥ ३३॥
श्रुत्वा पर्वेदिदं नित्यं अवाप्स्यन्ति परां गतिम् ॥ ३४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
॥ ९२ ॥ पुत्रदर्शनपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[ अस्मिन्नध्याये ३४ श्लोकाः ]

## ॥ अष्टात्रिंशोऽध्यायः ॥

त्यक्तदेहानामपि कुरुपाण्डवपक्षीयाणां कथं पुनरागमनमिति जनमेजयप्रश्नस्य वैशम्पायनेन सोपपत्तिकमुत्तरदानम् ॥ १ ॥

सूतः—

एतच्छ्रुत्वा नृपो विद्वान् हृष्टोऽभूज्जनमेजयः ।
पितामहानां सर्वेषां गमनागमनं तदा ॥ १
अब्रवीच्च मुदा युक्तः पुनरागमनं प्रति ॥ १॥

जनमेजयः—

कथं नु त्यक्तदेहानां पुनस्तद्रूपदर्शनम् ॥ २

सूतः—

इत्युक्तस्स द्विजश्रेष्ठो व्यासशिष्यः प्रतापवान् ।
प्रोवाच वदतां श्रेष्ठस् तं नृपं जनमेजयम् ॥ ३

वैशम्पायनः—

अविप्रणाशस्सर्वेषां कर्मणामिति निश्चयः ।
कर्मजानि शरीराणि शरीराकृतयस्तथा ॥ ४
महाभूतानि नित्यानि भूताधिपतिसंश्रयात् ।
तेषां च नित्यं संवासो न विनाशो वियुज्यताम् ॥ ५
अनाशया कृतं कर्म तस्य चेष्टः फलागमः ।
आत्मा चैभिस्समायुक्तस् सुखदुःखमुपाश्नुते ॥ ६

अविनाशी तथा नित्यः क्षेत्रज्ञ इति निश्चयः ।
भूतानामात्मभावो यो ध्रुवोऽसौ संविजानताम् ॥ ७

यावन्न क्षीयते कर्म तावदस्य स्वरूपता ।
संक्षीणकर्मा पुरुषो रूपान्यत्वमुपाश्नुते ॥ ८

नानाभूतास्तथैकत्वं शरीरं प्राप्य संहताः ।
भवन्ति ते तथा नित्याः पृथग्भावं विजानताम् ॥ ९

अश्वमेधश्रुतिश्चेयम् अश्वसंज्ञपनं प्रति ।
लोकान्तरगता नित्यं प्राणा नित्या हि वाजिनः ॥ १०

अहं हितं वदाम्येतत् प्रियं च तव मानद ।
देवयाना हि पन्थानश् श्रुतास्ते यज्ञसंस्तरे ॥ ११

सुकृतो यत्र ते यज्ञस् तत्र देवा हितास्तव ॥ ११॥

यदा समन्विता देवाः पशूनां गमनेश्वराः ।
गतिमन्तश्च तेनेष्टा नान्ये नित्या भवन्ति ते ॥ १२॥

नित्येऽस्मिन् पञ्चके वर्गे नित्ये चात्मनि यो नरः ।
अस्य नाशं समायोगं यः पश्यति वृथामतिः ॥ १३॥

वियोगे शोचतेऽत्यर्थं स बाल इति मे मतिः ॥ १४

वियोगे दोषदर्शी यस् स योगमिह वर्जयेत् ।
असङ्गे सङ्गमो नास्ति दुःखं भावि वियोगजम् ॥ १५

परापरज्ञस्तु नरो नातिमानादुदीक्षितः ।

अपरज्ञः परां बुद्धिं स्पृष्ट्वा मोहाद्विमुच्यते ॥ १६

अदर्शनादापतितः पुनश्चादर्शनं गतः ।
नासौ मानादहङ्काराच्च च वेत्ति विरागताम् ॥ १७

येन कर्मशरीरेण करोत्ययमनीश्वरः ।
मानसं मनसाऽऽप्नोति शारीरं तु शरीरवान् ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

॥ ९३ ॥ पुत्रदर्शनपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[ अस्मिन्नध्याये १८ श्लोकाः ]

---

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

जनमेजयेन परीक्षित्प्रदर्शने प्रार्थिते व्यासेन परीक्षितः शमीकमहर्षेः शृङ्गिणश्च प्रदर्शनम् ॥ १ ॥ जनमेजयेनावभृथस्नानानन्तरमास्तिकपूजनपूर्वकं वैशम्पायनं प्रति कथावशेषकथनप्रार्थना ॥ २ ॥

---

वैशम्पायनः—

स दृष्ट्वा तु नृपः पुत्रान् तथा सम्बन्धिबान्धवान् ।
ऋषिप्रसादान् पुत्राणां सरूपाणां कुरूद्वहः ॥ १

स राजा राजधर्मांश्च ब्रह्मोपनिषदं तथा ।
अवाप्तवान् नरश्रेष्ठो बुद्धिनिश्चयमेव च ॥ २

विदुरश्च महाप्राज्ञो ययौ सिद्धिं तपोबलात् ।

धृतराष्ट्रस्समासाद्य व्यासं चापि तपस्विनम् ॥ ३

जनमेजयः—

ममापि वरदो व्यासो दर्शयेत् पितरं यदि ।
तद्रूपवेषवयसं श्रद्दध्यां सर्वमेव तत् ॥ ४

प्रियं मे स्यात् कृतार्थश्च स्यामहं कृतनिश्चयः ।
प्रसादादृषिमुख्यस्य मम कामस्समृद्ध्यताम् ॥ ५

सूतः—

इत्युक्तवचने तस्मिन् नृपे व्यासः प्रतापवान् ।
प्रसादमकरोद्धीमान् आनयच्च परीक्षितम् ॥ ६

ततस्तद्रूपवयसम् आगतं नृपतिं दिवः ।
श्रीमन्तं पितरं राजा ददर्श स परीक्षितम् ॥ ७

[1]शमीकं च महाभागं पुत्रं चाप्यस्य शृङ्गिणम् ।
अमात्या ये च निहता राज्ञस्तांश्च ददर्श सः ॥ ८

ततस्सोऽवभृथे राजा मुदितो जनमेजयः ।
पितरं स्नापयामास स्वयं सस्नौ च पार्थिवः ॥ ९

[2]परीक्षिदपि तत्रैव बभूव स तिरोहितः ॥ ९॥

स्नात्वा च भरतश्रेष्ठो ह्यास्तीकमिदमब्रवीत् ।
यायावरकुलोद्भूतं जरत्कारुसुतं तदा ॥ १०॥

जनमेजयः—

आस्तीक विविधाश्चर्यो यज्ञोऽयमिति मे मतिः ।

---

1. क—इदमर्धं नास्ति　　1. अ-ख-ग-घ—इदमर्धं नास्ति

यद्द्यायं पिता प्राप्तो मम शोकप्रणाशनः ॥ ११।

आस्तीकः—

ऋषिर्द्वैपायनो यत्र पुराणस्तपसो निधिः ।
यज्ञे कुरुकुलश्रेष्ठ तस्य लोकावुभौ जितौ ॥ १२॥

श्रुतं विचित्रमाख्यानं त्वया पाण्डवनन्दन ।
सर्पाश्च भस्मसान्नीता गताश्च पदवीं पितुः ॥ १३॥

कथञ्चित् तक्षको मुक्तस् सत्यत्वात् तव पार्थिव ।
ऋषयः पूजितास्सर्वे गतिं दृष्ट्वा महात्मनः ॥ १४॥

प्राप्तस्सुविपुलो धर्मश् श्रुत्वा पापविनाशनम् ।
विमुक्तो हृदयग्रन्थिर् उदारजनदर्शनात् ॥ १५॥

ये च पक्षधरा धर्मे सद्वृत्तरुचयश्च ये ।
यान् दृष्ट्वा त्यजते पापं तेभ्यः कार्या नमस्क्रिया ॥ १६॥

सूतः—

एतच्छ्रुत्वा द्विजश्रेष्ठात् स नृपो जनमेजयः ।
पूजयामास तमृषिम् अनुमान्य पुनः पुनः ॥ १७॥

पप्रच्छ तमृषिं राजा वैशम्पायनमच्युतम् ।
कथावशेषं धर्मज्ञो वनवासस्य सत्तमः ॥ १८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
॥ ९४ ॥ पुत्रदर्शनपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[ अस्मिन्नध्याये १८॥ श्लोकाः ]

---

## ॥ चत्वारिंशोऽध्यायः ॥

धृतराष्ट्रेण पुत्रदर्शनानन्तरं युधिष्ठिरादिभिस्सह पुनः स्वाश्रमं प्रत्यागमनम् ॥ १ ॥ व्यासेन धृतराष्ट्रं प्रति युधिष्ठिरादीनां नगरप्रस्थापनचोदना ॥ २ ॥ नगरं प्रति पुनरागमनमनिच्छताऽपि युधिष्ठिरेण धृतराष्ट्रस्य कुन्तीगान्धार्योश्च निदेशनिर्बन्धेन पुनः सर्वैस्सह हास्तिनपुरं प्रत्यागमनम् ॥ ३ ॥

जनमेजयः—

दृष्ट्वा पुत्रांस्तथा पौत्रान् सानुबन्धाञ्जनाधिपः ।
धृतराष्ट्रः किमकरोद् राजा चैव युधिष्ठिरः ॥ १

वैशम्पायनः—

तद्दृष्ट्वा महदाश्चर्यं पुत्राणां दर्शनं पुनः ।
गतशोकस्स राजर्षिः पुनराश्रममागमत् ॥ २

[1]इतरस्तु जनस्सर्वस् ते चैव परमर्षयः ।
प्रतिजग्मुर्यथाकामं धृतराष्ट्राभ्यनुज्ञया ॥ ३

पाण्डवास्तु महात्मानो लघुभूयिष्ठसैनिकाः ।
अनुजग्मुर्महात्मानं सदारं तं महीपतिम् ॥ ४

तमाश्रमगतं धीमान् ब्रह्मर्षिर्लोकपूजितः ।
[2]द्वैपायन उपागम्य राजानमिदमब्रवीत् ॥ ५

व्यासः—

[3]धृतराष्ट्र महाबाहो शृणु कौरवनन्दन ॥ ५॥

---

1. अ—अर्धषट्कं नास्ति
2. ख—इदमर्धं नास्ति
3. ख—अर्धत्रयं नास्ति

श्रुतास्ते ज्ञानवृद्धानाम् ऋषीणां पुण्यकर्मणाम् ।
शुद्धाभिजनवृद्धीनां वेदवेदाङ्गवेदिनाम् ॥ ६॥
धर्मज्ञानां पुराणानां वदतां विविधाः कथाः ॥ ७
मा स्म शोके मनः कार्षीर् दिष्टे न व्यथते बुधः ।
श्रुतं देवरहस्यं ते नारदाद्देवदर्शनात् ॥ ८
गतास्ते क्षत्रधर्मेण शस्त्रपूतां गतिं शुभाम् ।
यथा दृष्टास्त्वया पुत्र यथाकामविहारिणः ॥ ९
युधिष्ठिरस्त्वयं धीमान् भवन्तमनुरुध्यते ।
सहितो भ्रातृभिस्सर्वैस् सदारस्ससुहृज्जनः ॥ १०
विसर्जयैनं यात्वेष स्वराज्यमनुशास्तु वै ।
मासस्समधिको ह्येषाम् अतीतो वसतां वने ॥ ११
एतद्धि नित्यं यत्नेन पदं रक्ष्यं परन्तप ।
बहुप्रत्यर्थिकं ह्येतद् राज्यं नाम जनाधिप ॥ १२

वैशम्पायनः—

इत्युक्तः कौरवो राजा व्यासेनामितबुद्धिना ।
युधिष्ठिरमथाहूय वाग्मी वचनमब्रवीत् ॥ १३

धृतराष्ट्रः—

अजातशत्रो भद्रं ते शृणु मे भ्रातृभिस्सह ।
त्वत्प्रसादान्महीपाल शोको नास्मान् प्रबाधते ॥ १४

रमे चाहं त्वया पुत्र पुरा नागपुरे यथा ।
नाथेनानुगतो विद्वन् प्रियेषु [1]परिवर्तता ॥　　१५

प्राप्तं पुत्रफलं त्वत्तः प्रीतिर्मे विपुला त्वयि ।
न मे मन्युर्महाबाहो गम्यतां मा चिरं कृथाः ॥　　१६

भवन्तं चैव सम्प्रेक्ष्य तपो मे परिहीयते ।
उपयुक्तं शरीरं च त्वां दृष्ट्वा धारितं पुनः ॥　　१७

मातरौ ते तथैवेमे शीर्णपर्णकृताशने ।
मम तुल्यव्रते पुत्र न चिरं वर्तयिष्यतः ॥　　१८

दुर्योधनप्रभृतयो दिष्ट्या लोकान्तरं गताः ।
व्यासस्य तपसो वीर्याद् भवता च समागमात् ॥　　१९

प्रयोजनं चिरं वृत्तं जीवितस्य च मेऽनघ ।
उग्रं तपस्समास्थास्ये तदनुज्ञातुमर्हसि ॥　　२०

त्वय्यद्य पिण्डः कीर्तिश्च कुलं चेदं प्रतिष्ठितम् ।
श्वो वाऽद्य वा महाबाहो गम्यतां मा चिरं कृथाः ॥　　२१

राजनीतिस्सुबहुशश् श्रुता ते भरतर्षभ ।
सन्देष्टव्यं न पश्यामि कृतमेतावता विभो ॥　　२२

**वैशम्पायनः—**

इत्युक्तवचनं तातं नृपो राजानमब्रवीत् ।　　२२॥

---

1. ब—परिवर्तितः। अ—परिवर्धताम्।

युधिष्ठिरः—

न मामर्हसि धर्मज्ञ परित्यक्तुमनागसम् ।
कामं गच्छन्तु मे सर्वे भ्रातरोऽनुचरास्तथा ॥ २३॥
भवन्तमहमन्वेष्ये मातरौ च यतव्रतः ॥ २४

वैशम्पायनः—

तमुवाचाथ गान्धारी मैवं पुत्र शृणुष्व मे ।
त्वय्यधीनं कुरुकुलं पिण्डश्च श्वशुरस्य मे ॥ २५
गम्यतां पुत्र पर्याप्तम् एतावत् पूजिता वयम् ।
राजा यदाह तत् कार्यं त्वया पुत्र पितुर्वचः ॥ २६

वैशम्पायनः—

इत्युक्तस्स तु गान्धार्या कुन्तीमिदमुवाच ह ।
स्नेहबाष्पाकुले नेत्रे परिमृज्य विनीतवत् ॥ २७

युधिष्ठिरः—

विसर्जयति मां राजा गान्धारी च यशस्विनी ।
भवत्यां बद्धचित्तस्तु कथं यास्यामि दुःखितः ॥ २८
न चोत्सहे तपोविघ्नं कर्तुं ते धर्मचारिणि ।
तपसो हि परं नास्ति तपसा विन्दते महत् ॥ २९
ममापि न तथा राज्ञि राज्ये बुद्धिर्यथा पुरा ।
तपस्येवानुरक्तं मे मनस्सर्वात्मना तथा ॥ ३०
शून्येयं च मही सर्वा न मे प्रीतिकरी शुभे ।

बान्धवा नः परिक्षीणा बलं नो न यथापुरम् ॥ ३१

पाञ्चालास्सुभृशं क्षीणाः कन्यामात्रावशेषिताः ।
न तेषां कुलकर्तारं कश्चित् पश्याम्यहं शुभे ॥ ३२

सर्वेऽपि भस्मसान्नीताः द्रोणेनैव च संयुगे ।
[1]अवशेषाश्च निहता द्रोणपुत्रेण वै निशि ॥ ३३

चेदयश्चैव मत्स्याश्च दृष्टपूर्वास्तथैव नः ॥ ३३॥

केवलं वृष्णिचक्रं तु वासुदेवपरिग्रहात् ।
यं दृष्ट्वा स्थातुमिच्छामि धर्मार्थं नान्यहेतुकम् ॥ ३४॥

शिवेन पश्य नस्सर्वान् दर्शनं दुर्लभं तव ।
भविष्यत्यम्ब राजा हि तीव्रमारप्स्यते तपः ॥ ३५॥

वैशम्पायनः—

एतच्छ्रुत्वा महाबाहुस् सहदेवो युधाम्पतिः ।
युधिष्ठिरमुवाचेदं बाष्पव्याकुललोचनः ॥ ३६॥

सहदेवः—

न सहामि परित्यक्तुं मातरं पार्थिवर्षभ ।
प्रतियातु भवान् क्षिप्रं तपस्तप्स्याम्यहं वने ॥ ३७॥

इहैव शोषयिष्यामि तपसाऽहं कलेबरम् ।
पादशुश्रूषणे युक्तो राज्ञो मातुस्तथाऽनघ ॥ ३८॥

---

1. च—इदमर्धं नास्ति

वैशम्पायनः—

तमुवाच ततः कुन्ती परिष्वज्य महाभुजम् ॥ ३९

कुन्ती—

गम्यतां पुत्र मैवं त्वं वोचः कुरु वचो मम ।

आगमा वश्शिवास्सन्तु स्वस्था भवत पुत्रकाः ॥ ४०

उपरोधो भवेन्नैवम् अस्माकं तपसः कृतः ।

त्वत्स्नेहपाशबद्धा हि हीयेयं श्रेयसः परात् ॥ ४१

तस्मात् पुत्रक गच्छ त्वं शिष्टमल्पं हि नः प्रभो ॥ ४१॥

वैशम्पायनः—

एवं संस्तम्भितं वाक्यैः कुन्त्या बहुविधैर्मनः ।

सहदेवस्य राजेन्द्र राज्ञश्चैव विशेषतः ॥ ४२॥

ते मात्रा समनुज्ञाता राज्ञा च कुरुपुङ्गवाः ।

अभिवाद्य कुरुश्रेष्ठम् आमन्त्रयितुमारभन् ॥ ४३॥

युधिष्ठिरः—

राज्यं प्रति गमिष्यामश् शिवेन प्रतिनन्दिताः ।

अनुज्ञातास्त्वया राजन् गमिष्यामो ह्यकल्मषाः ॥ ४४॥

एवमुक्तस्स राजर्षिर् धर्मराज्ञा महात्मना ।

अनुजज्ञे जयाशीर्भिः पूजयित्वा युधिष्ठिरम् ॥ ४५॥

भीमं च बलिनां श्रेष्ठं सान्त्वयामास पार्थिवः ।

स चास्य सम्यङ् [illegible]वी प्रत्यपद्यत वीर्यवान् ॥ ४६॥

अर्जुनं च समाश्लिष्य यमौ च भरतर्षभौ ।
अनुजज्ञे स कौरव्यः परिष्वज्याभिनन्द्य च ॥ ४७॥

गान्धार्या चाभ्यनुज्ञाताः कृतपादाभिवादनाः ।
जनन्या समुपाघ्राताः परिष्वक्ताश्च ते नृपम् ॥ ४८॥

चक्रुः प्रदक्षिणं सर्वे वत्सा इव निवारणे ।
पुनः पुनर्निरीक्षन्तः प्रजग्मुस्ते प्रदक्षिणम् ॥ ४९॥

तथैव द्रौपदी भद्रा पाण्ड्यजा भुजगेन्द्रजा ।
न्यायतश्श्वशुरे वृत्तिं प्रयुज्य प्रययुस्तदा ॥ ५०॥

श्वश्रूभ्यां समनुज्ञाताः परिष्वज्याभिनन्दिताः ।
सन्दिष्टाश्चेतिकर्तव्यं प्रययुर्भर्तृभिस्सह ॥ ५१॥

ततः प्रजज्ञे निनदस् सूतानां युज्यतामिति ।
उष्ट्राणां क्रोशतां चैव हयानां हेषतामपि ॥ ५२॥

ततो युधिष्ठिरो राजा सदारस्सहसैनिकः ।
नगरं हास्तिनपुरं पुनरायात् सबान्धवः ॥ ५३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

॥ १४ ॥ पुत्रदर्शनपर्वणि नवमोऽध्यायः ॥ ९ ॥

[ अस्मिन्नध्याये ५३॥ श्लोकाः ]

[ पुत्रदर्शनपर्व समाप्तम् ]

## ॥ एकचत्वारिंशोऽध्यायः ॥

[ नारदागमनपर्व ]

कदाचन हास्तिनपुरमुपागतेन नारदेन पाण्डवान् प्रति धृतराष्ट्रादीनां स्वर्गप्राप्तिनिवेदनम् ॥ १ ॥ धृतराष्ट्रे गान्धारीकुन्तीसञ्जयैस्सह गङ्गायामाप्लुत्य स्वाश्रममागच्छति सति मध्येमार्गं दावाग्निना तत्परिवेष्टनम् ॥ २ ॥ धृतराष्ट्रेण सञ्जयं प्रत्यग्नितो दूरापसरणप्रेरणापूर्वकं कुन्तीगान्धारीभ्यां सह वह्नौ प्रवेशनम् ॥ ३ ॥ ततस्सञ्जयेन हिमवत्पर्वतं प्रति गमनम् ॥ ४ ॥

---

वैशम्पायनः—

तेषु चोपनिवृत्तेषु पाण्डवेषु यदृच्छया ।
[1]देवर्षिर्नारदो राजन्नाजगाम युधिष्ठिरम् ॥ १

[2]तमभ्यर्च्य महाबाहुः कुरुराजो युधिष्ठिरः ।
आसीनं परिविश्वस्तं प्रोवाच वदतां वरः ॥ २

युधिष्ठिरः—

चिरात्तु नानुपश्यामि भगवन्तमुपस्थितम् ।
[3]कच्चित् सुकुशलं विप्र शुभं वा पर्युपस्थितम् ॥ ३

[4]के देशाः भवता दृष्टाः कार्यं किञ्च करोमि ते ।
तद्ब्रूहि द्विजमुख्य त्वं ह्यस्माकं च प्रियोऽतिथिः ॥ ४

---

1. ग—कदाचिन्नगरे नागसाह्वये च यदृच्छया । [ अधिकः पाठः ]
2. अ—अर्धत्रयं नास्ति 3. ख—अर्धद्वयं नास्ति
4. अ-क—अभिवाद्याब्रवीद्राजन् भ्रातृभिस्सह पाण्डवः । [ अधिकः पाठः ]

नारदः—

चिरदृष्टोऽसि मे राजन्नागतोऽहं तपोवनात् ।
परिदृष्टानि तीर्थानि गङ्गा चैव मया नृप ॥ ५

युधिष्ठिरः—

वदन्ति पुरुषा मेऽद्य गङ्गातीरनिवासिनः ।
धृतराष्ट्रं महात्मानम् आस्थितं परमं तपः ॥ ६

अपि दृष्टस्त्वया तत्र कुशली स कुरूद्वहः ।
गान्धारी च पृथा चैव सूतपुत्रश्च सञ्जयः ॥ ७

कथं वर्तयते चाद्य स पिता मम पार्थिवः ।
श्रोतुमिच्छामि भगवन् यदि दृष्टस्त्वया नृपः ॥ ८

नारदः—

स्थिरो भूत्वा महाराज शृणु सर्वं यथातथम् ।
यथा श्रुतं यथा दृष्टं मया तस्मिंस्तपोवने ॥ ९

वनवासान्निवृत्तेषु भवत्सु कुरुनन्दन ।
कुरुक्षेत्रात् पिता तुभ्यं गङ्गाद्वारं ययौ नृपः ॥ १०

गान्धार्या सहितो धीमान् वध्वा कुन्त्या समन्वितः ।
सञ्जयेन च सूतेन साग्निहोत्रस्सयाजकः ॥ ११

तत्रोग्रं तप आस्थाय धृतराष्ट्रो महामनाः ।
[1]ततो विधिं समास्थाय वायुभक्षोऽभवन्मुनिः ॥ १२

---

1. ख—मुखे पिण्डं समास्थाय । क – मुखेन तत्समाधाय ।

वने स मुनिभिस्सर्वैः पूज्यमानो महातपाः ।
त्वगस्थिमात्रावशेषष् षण्मासानभवन्नृपः ॥ १३

गान्धारी तु जलाहारा कुन्ती मासोपवासिनी ।
सञ्जयष्षष्ठभुक्तेन वर्तयामास भारत ॥ १४

अग्नींस्तु याजकास्तत्र जुहुवुर्विधिवत् प्रभो ।
दृश्यतोऽदृश्यतश्चैव वने तस्मिन् नृपस्य ह ॥ १५

अनिकेतो हि राजाऽसौ बभूव वनगोचरः ।
ते चापि सहिते देव्यौ सञ्जयश्च तमन्वयुः ॥ १६

सञ्जयो नृपतेर्नेता समेषु विषमेषु च ।
गान्धार्याश्च पृथा राजंश् चक्षुरासीदनिन्दिता ॥ १७

ततः कदाचिद्गङ्गायां गच्छत्सु कुरुसत्तम ।
गङ्गायामाप्लुतो धीमान् आश्रमाभिमुखो ययौ ॥ १८

अथ वायुस्समुद्भूतो दवाग्निरभवन्महान् ।
ददाह च वनं सर्वं परिगृह्य समन्ततः ॥ १९

[1]दह्यत्सु मृगयूथेषु विह्वलेषु समन्ततः ।
वराहाणां च यूथेषु संश्रयत्सु जलाशयान् ॥ २०

सम्प्रदीप्ते वने तस्मिन् प्राप्तो व्यसनमुत्तमम् ।
निराहारतया राजा मन्दप्राणविचेष्टितः ॥ २१
असमर्थोऽपसरणे सुकृशे मातरौ च ते ॥ २१॥

---

1. ध—इदमर्धं नास्ति

ततस्स नृपतिर्दृष्ट्वा वह्निमायान्तमन्तिकात् ।
इदमाह वचस्सूतं सञ्जयं पृथिवीपते ॥  २२॥

धृतराष्ट्रः—

गच्छ सञ्जय यत्राग्निर् न त्वां दहति कर्हिचित् ।
वयमप्यग्निसंयुक्ता गमिष्यामः परां गतिम् ॥  २३॥

नारदः—

तमुवाच किलोद्विग्नस् सञ्जयो वदतां वरः ॥  २४

सञ्जयः—

राजन् मृत्युरनिष्टोऽयं भविता ते यथाऽग्निना ।
न चोपायं प्रपश्यामि मोक्षणे जातवेदसः ॥  २५
यदत्रानन्तरं कार्यं तद्भवान् वक्तुमर्हति ॥  २५॥

नारदः—

इत्युक्तस्सञ्जयेनेदं पुनराह स पार्थिवः ॥  २६

धृतराष्ट्रः—

नैष मृत्युरनिष्टो नो निस्सृता हि गृहाद्वयम् ॥  २६॥
जलमग्निस्तथा वायुर् अथवाऽपि विकर्षणम् ।
तापसानां प्रशस्यन्ते गच्छ सञ्जय मा चिरम् ॥  २७॥

नारदः—

इत्युक्त्वा सञ्जयं राजा समाधाय मनस्तथा ।
प्राङ्मुखस्सह गान्धार्या कुन्त्या चोपाविशत् तदा ॥  २८॥

सञ्जयस्तं तथा दृष्ट्वा प्रदक्षिणमथाकरोत् ।
उवाच चैनं मेधावी युज्यस्वेति नराधिपम् ॥ २९॥

ऋषिपुत्रो मनीषी स राजा चक्रेऽस्य तद्वचः ।
सन्निरुध्येन्द्रियग्रामम् आसीत् काष्ठोपमस्तदा ॥ ३०॥

गान्धारी च महाप्राज्ञा जननी च पृथा तव ।
दावाग्निना समायुक्ते स च राजा पिता तव ॥ ३१॥

सञ्जयस्तु महाप्राज्ञस् तस्माद्दावादमुच्यत ।
गङ्गाकूले मया दृष्टस् तापसैः परिवारितः ॥ ३२॥

स तानामन्त्र्य तेजस्वी निवेद्यैतच्च सर्वशः ।
प्रययौ सञ्जयस्सूतो हिमवन्तं महागिरिम् ॥ ३३॥

एवं स निधनं प्राप्तः कुरुराजो महामनाः ।
गान्धारी च पृथा चैव जननी ते नराधिप ॥ ३४॥

यदृच्छया तु व्रजता मया राज्ञः कलेबरम् ।
तयोश्च देव्योरुभयोर् दृष्टानि भरतर्षभ ॥ ३५॥

ततस्तपोवने तस्मिन् समाजग्मुस्तपोधनाः ।
श्रुत्वा राज्ञस्तथा निष्ठाम् अन्वशोचन् गतिं च ते ॥ ३६॥

तत्राश्रौषमहं सर्वम् एतत् पुरुषसत्तम ।
यथा च नृपतिर्दग्धो तथा देव्यौ च पाण्डव ॥ ३७॥

न शोचितव्यो राजेन्द्र स्वर्गस्थः पृथिवीपतिः ।

प्राप्तवानग्निसंयोगाद् गान्धारी जननी च ते ॥  ३८॥

वैशम्पायनः—

एतच्छ्रुत्वा तु सर्वेषां पाण्डवानां महात्मनाम् ।
निर्याणं धृतराष्ट्रस्य शोकस्समभवन्महान् ॥  ३९॥

अन्तःपुराणां च तदा महानार्तस्वरोऽभवत् ।
पौराणां च महाराज श्रुत्वा राज्ञस्तथा गतिम् ॥  ४०॥

अहो धिगिति राजा च विक्रुश्य भृशदुःखितः ।
ऊर्ध्वबाहुस्स्मरन् मातुः प्ररुरोद युधिष्ठिरः ॥  ४१॥

भीमसेनपुरोगाश्च भ्रातरस्सर्व एव ते ।
'रुरुदुर्दुःखसन्तप्ता वर्णयन्तः पृथां तदा ॥  ४२॥

अन्तःपुरेषु सुमहांस् ततो रुदितनिस्वनः ।
प्रादुरासीन्महाराज पृथां श्रुत्वा तथागताम् ॥  ४३॥

तपोवृद्धं तथा वृध्दं हतपुत्रं वनेचरम् ।
अन्वशोचन्त ते सर्वे गान्धारीं च यशस्विनीम् ॥  ४४॥

तस्मिन्नुपरते शब्दे मुहूर्तादिव भारत ।
निगृह्य बाष्पं धैर्येण धर्मराजोऽब्रवीदिदम् ॥  ४५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
॥ ९५ ॥ नारदागमनपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये ४५॥ श्लोकाः ]

---

## ॥ द्विचत्वारिंशोऽध्यायः ॥

युधिष्ठिरेण धृतराष्ट्रादिनिधनश्रवणेन भ्रातृभिः सह सकरुणं परिदेवनपूर्वकं सति संस्कृताग्नौ तेषां वृथाग्निना दाहं प्रत्यनुशोचनम् ॥ १ ॥ नारदेन युधिष्ठिरं प्रति धृतराष्ट्रादिदाहकाग्नेर्मन्त्रपूतत्वकथनम् ॥ २ ॥ युधिष्ठिरेण युयुत्सुपुरस्कारेण गान्धारीधृतराष्ट्रयोरुदकदानपूर्वकं कुन्त्याश्च विधिवच्छ्राद्धदानम् ॥ ३ ॥ ततो नारदगमनानन्तरं प्रजापालनेन निजनगरे भ्रात्रादिभिः सह सुखविहारः ॥ ४ ॥

युधिष्ठिरः—

तथा महात्मनस्तस्य तपस्युग्रे च तस्थुषः ।
अनाथस्येव निधनं तिष्ठत्स्वस्मासु बन्धुषु ॥ १

दुर्विज्ञेया हि गतयः पुरुषाणां मता मम ।
यत्र वैचित्रवीर्यो हि [1]दह्यतैवं दवाग्निना ॥ २

यस्य पुत्रशतं श्रीमद् अभवद्बाहुशालिनः ।
नागायुतसमप्राणस् स दग्धो हि दवाग्निना ॥ ३

यं पुरा पर्यवीजन्त तालवृन्तैर्वरस्त्रियः ।
तं गृध्राः पर्यवीजन्त दवाग्निप्रतिकूलितम् ॥ ४

सूतमागधसङ्घैश्च शयने यः प्रबोध्यते ।
धरण्यां स नृपश्शेते विक्रुष्टो गृध्रवायसैः ॥ ५

न तु शोचामि गान्धारीं हतपुत्रां यशस्विनीम् ।

---

1. अ—दह्यते वडवाग्निना ।

पतिलोकमनुप्राप्तां तथा भर्तृव्रते स्थिताम् ॥　६

पृथामेव तु शोचामि या पुत्रैश्वर्यमृद्धिमत् ।
उत्सृज्य सुमहद्दीप्तं वनवासमरोचयत् ॥　७

[1]धिग् राज्यमिदमस्माकं धिग् बलं धिक् पराक्रमम् ।
क्षत्रधर्मं च धिग् यस्मान्मृता जीवामहे वयम् ॥　८

सुसूक्ष्मा किल लोकस्य गतिर्द्विजवरोत्तम ।
यत् समुत्सृज्य राज्यं सा वनवासमरोचयत् ॥　९

युधिष्ठिरस्य जननी भीमस्य विजयस्य च ।
अनाथवत् कथं दह्येद् इति मुह्यामि चिन्तयन् ॥　१०

वृथा सन्तर्पितो वह्निः खाण्डवे सव्यसाचिना ।
उपकारमजानन् स कृतघ्न इति मे मतिः ॥　११

यत्रादहत् स भगवान् मातरं सव्यसाचिनः ।
कृत्वा यो ब्राह्मणच्छद्म भैक्षार्थी तमुपागतः ॥　१२
धिगग्निं धिक् च पार्थस्य विश्रुतां सत्यसन्धताम् ॥　१२॥

इदं कष्टतरं चान्यद् भगवन् प्रतिभाति मे ।
वृथाग्निना समायोगो यदभूत् पृथिवीपतेः ॥　१३॥

तथा तपस्विनस्तस्य राजर्षेः कौरवस्य च ।
कथमेवं गतो मृत्युः प्रशास्य पृथिवीमिमाम् ॥　१४॥

---

1. ख—अर्धचतुष्टयं नास्ति

तिष्ठत्सु मन्त्रपूतेषु तस्याग्निषु महावने ।
स वृथाग्निसमायुक्तो निष्ठां प्राप्तः पिता मम ॥ १५॥

मन्ये पृथा वेपमाना कृशा धमनिसन्तता ।
हा तात धर्मराजेति मामाक्रन्दन्महाभये ॥ १६॥

भीम पर्याप्नुहि भयाद् इति चैवाभियाचती ।
समन्ततः परिक्षिप्ता माता मेऽभूद् दवाग्निना ॥ १७॥

सहदेवः प्रियस्तस्याः पुत्रेभ्योऽधिकमेव तु ।
न चैनां मोक्षयामास वीरो माद्रवतीसुतः ॥ १८॥

वैशम्पायनः—

तच्छ्रुत्वा रुरुदुस्सर्वे समालिङ्ग्य परस्परम् ।
पाण्डवाः पञ्च दुःखार्ता भूतानीव युगक्षये ॥ १९॥

तेषां तु पुरुषेन्द्राणां रुदतां रुदितस्वनः ।
प्रासादभागसंरुद्धो रोदसी समरुन्धत ॥ २०॥

नारदः—

नासौ वृथाग्निना दग्धो यथा तत्र श्रुतं मया ।
वैचित्रवीर्यो नृपतिर् न ते शोच्यो नराधिप ॥ २१॥

वनं प्रविशताऽनेन वायुभक्षेण धीमता ।
अग्नयः कारयित्वेष्टिम् उत्सृष्टा इति नश्श्रुतम् ॥ २२॥

याजकास्तानथैतस्य तदानीं निर्जने वने ।

समुत्सृज्य यथाकामं ययुर्भरतसत्तम ॥ २३॥

स विप्रुद्धस्तदा वह्निर् वने तस्मिन्नभूत् किल ।
तेन तद्वनमादीप्तम् इति ते तापसा ब्रुवन् ॥ २४॥

स राजा जाह्नवीतीरे यथा ते कथितं मया ।
तेनाग्निना समायुक्तस् स्वेनैव भरतर्षभ ॥ २५॥

एवमावेदयामासुर् मुनयस्ते ममानघ ।
ये ते भागीरथीतीरे मया दृष्टा युधिष्ठिर ॥ २६॥

एवं स्वेनाग्निना राजा समायुक्तो महीपते ।
मा शोचिथास्त्वं नृपतिं गतस्स परमां गतिम् ॥ २७॥

गुरुशुश्रूषया चैव जननी तव पाण्डव ।
गतिं प्राप्ता सुमहतीम् इति मे नास्ति संशयः ॥ २८॥

कर्तुमर्हसि कौरव्य तेषां त्वमुदकक्रियाम् ।
भ्रातृभिस्सहितस्सर्वैर् एतदत्र विधीयते ॥ २९॥

वैशम्पायनः—

ततस्स पृथिवीपालः पाण्डवानां धुरन्धरः ।
निर्ययौ सह सोदर्यैस् सदारो भरतर्षभ ॥ ३०॥

पौरजानपदाश्चैव राजभक्तिमुपाश्रिताः ।
गङ्गां प्रजग्मुरभितो वाससैकेन संवृताः ॥ ३१॥

ततोऽवगाह्य सलिलं सर्वे ते कुरुपुङ्गवाः ।

युयुत्सुमग्रतः कृत्वा ददुस्तोयं महात्मने ॥ ३२॥

[1]गान्धार्याश्च पृथायाश्च विधिवन्नामगोत्रतः ।
शोचन्तो वर्तयन्तस्ते तत्रोषुर्नगराद्बहिः ॥ ३३॥

प्रेषयामास च नरान् विधिज्ञानाप्तकारिणः ।
गङ्गाद्वारे कुरुश्रेष्ठो यत्र दग्धोऽभवन्नृपः ॥ ३४॥

तत्रैव तेषां कुल्यानि गङ्गाद्वारेऽन्वशात् तदा ।
कर्तव्यानीति पुरुषान् दत्तदेयान् महीपतिः ॥ ३५॥

द्वादशेऽहनि तेभ्यश्च कृतशौचो नराधिपः ।
ददौ श्राद्धानि विधिवद् दक्षिणावन्ति पाण्डवः ॥ ३६॥

धृतराष्ट्रं समुद्दिश्य ददौ स पृथिवीपतिः ।
सुवर्णं रजतं गाश्च शय्याश्च सुमहाधनाः ॥ ३७॥

गान्धार्याश्चैव तेजस्वी पृथायाश्च पृथक् पृथक् ।
सङ्कीर्त्य नामनी राजा ददौ दानमनुत्तमम् ॥ ३८॥

यो यदिच्छति यावच्च तावत् स लभते द्विजः ।
शयनं भोजनं यानं मणिरत्नमथो धनम् ॥ ३९॥

पानमाच्छादनं भोगान् दासीश्च परिचारकाः ।
ददौ राजा समुद्दिश्य तयोर्मात्रोर्महीपतेः ॥ ४०॥

ततस्स पृथिवीपालो दत्त्वा श्राद्धान्यनेकशः ।

---

1. क—श्लोकचतुष्टयं नास्ति

प्रविवेश पुनर्धीमान् पुरं वारणसाह्वयम् ॥ ४१॥

ते चापि राजवचनात् पुरुषा ये गता भवन् ।
सङ्कल्प्य तेषां कुल्यानि पुनः प्रत्यागमंस्ततः ॥ ४२॥

[1]माल्यैर्गन्धैश्च विविधैः पूजयित्वा यथाविधि ।
कुल्यानि तेषां संयोज्य तदाचख्युर्महीपतेः ॥ ४३॥

समाश्वास्य तु राजानं धर्मात्मानं युधिष्ठिरम् ।
नारदोऽप्यगमन् प्रीतः परमर्षिर्यथेप्सितम् ॥ ४४॥

एवं वर्षाण्यतीतानि धृतराष्ट्रस्य धीमतः ।
वनवासे तथा त्रीणि नगरे दश पञ्च च ॥ ४५॥

हतपुत्रस्य सङ्ग्रामे दानानि ददतस्तदा ।
नृपतेः पुत्रपौत्राणां मित्राणां स्वजनस्य च ॥ ४६॥

युधिष्ठिरस्तु नृपतिर् नातिप्रीतमनास्तदा ।
धारयामास तद्राज्यं निहतज्ञातिबान्धवः ॥ ४७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आश्रमवासिकपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
॥ ९५ ॥ नारदागमनपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ४७॥ श्लोकाः ]

॥ नारदागमनपर्व समाप्तम् ॥ ॥ आश्रमवासिकपर्वं च समाप्तम् ॥

॥ अस्मिन्नाश्रमवासिकपर्वणि श्लोकाः ११०८॥* ॥

---

1. क-ख-ब—सङ्कल्प्य कृत्वा कुल्यानि निवापानि च सर्वशः ।
[ अधिकः पाठः पुनरुक्तश्च ]

* यद्यप्यनुक्रमणिकाध्यायोक्तरीत्या १५०६ श्लोकैर्भाव्यम् तथाऽपि ११०८॥ श्लोका एव उपलभ्यन्ते ।

अतः परं मौसलपर्व भविष्यति तस्यायमाद्यः श्लोकः ॥



वैशम्पायनः—

षट्त्रिंशे त्वथ सम्प्राप्ते वर्षे कौरवनन्दनः ।
ददर्श विपरीतानि निमित्तानि युधिष्ठिरः ॥



॥ श्रीः ॥

# ॥ महाभारतम् ॥

## ॥ मौसलपर्व ॥

(मौसलपर्व)

### ॥ प्रथमोऽध्यायः ॥

प्रजापालनेन निजनगरे भ्रातृभिस्सह सुखनिवासिना युधिष्ठिरेण कदाचनाशुभसूचकोत्पातदर्शनम् ॥ १ ॥ ततः कालान्तरे सबलकृष्णानां सर्वयादवानां परस्परं मौसलप्रहारेण निश्शेषनिधनश्रवणम् ॥ २ ॥ वैशम्पायनेन जनमेजयं प्रति यादवानां मौसलेन निधनप्रकारकथनारम्भः ॥ ३ ॥ कदाचन विश्वामित्रादिमहर्षिषु द्वारकामागतेषु कैश्चन यादवैः साम्बस्य स्त्रीवेषपरिकल्पनेन मुनीन् प्रति गर्भिणीयं किंरूपमपत्यं प्रसविष्यतीति प्रश्नः ॥ ४ ॥ ततो रुष्टैर्महर्षिभिः स्वकुलविनाशकमायसं मुसलं प्रसविष्यतीति शापदानम् ॥ ५ ॥ ततः परेद्युः साम्बेन मुसले प्रसूते भीतैस्तै राजाज्ञया तस्य चूर्णीकरणेन समुद्रे प्रक्षेपणम् ॥ ६ ॥

---

वैशम्पायनः—

षट्त्रिंशे त्वथ सम्प्राप्ते वर्षे कौरवनन्दनः ।
ददर्श विपरीतानि निमित्तानि युधिष्ठिरः ॥ १

ववुर्वातास्सनिर्घाता रूक्षाश्शर्करवर्षिणः ।

अपसव्यानि शकुना मण्डलानि प्रचक्रिरे ॥ २

प्रत्यगूहुर्महानद्यो दिशो नीहारसंघृताः ।
उल्काश्चाङ्गारवर्षिण्यः प्रपेतुर्गगनाद्भुवि ॥ ३

आदित्यो रजसा राजन् समवच्छन्नमण्डलः ।
विरश्मिरुदये नित्यं कबन्धैस्समलङ्कृतः ॥ ४

परिवेषाश्च दृश्यन्ते दारुणाश्चन्द्रसूर्ययोः ।
त्रिवर्णाश्श्यामरूक्षान्तास् तथा भस्मारुणप्रभाः ॥ ५

एते चान्ये च बहव उत्पाता भयशंसिनः ।
दृश्यन्ते जगतो नाथे दिवमारोढुमिच्छति ॥ ६

यस्य प्रसादाद्धर्मोऽयं कृते यद्वत् कलावपि ।
पाण्डवास्तु महाभाग युक्तास्तु यशसाऽनघाः ॥ ७

कस्य चित्त्वथ कालस्य कुरुराजो युधिष्ठिरः ।
शुश्राव वृष्णिचक्रस्य मुसलोत्सादनं कृतम् ॥ ८

वियुक्तं वासुदेवं च श्रुत्वा रामं च पाण्डवः ।
समानीयाब्रवीद्भ्रातॄन् किं करिष्याम इत्युत ॥ ९

परस्परं समासाद्य ब्रह्मदण्डबलात्कृतान् ।
वृष्णीन् विनष्टान् श्रुत्वा ते व्यथिताः पाण्डवा भृशम् ॥ १०

निधनं वासुदेवस्य समुद्रस्येव शोषणम् ।
वीरा श्रद्दधुस्तस्य विनाशं शार्ङ्गधन्वनः ॥ ११

मौसलं ते परिश्रुत्य दुःखशोकसमन्विताः ।
विषण्णा हतसङ्कल्पाः पाण्डवास्समुपाविशन्* ॥ १२

जनमेजयः—
कथं विनष्टा भगवन्नन्धका वृष्णिभिस्सह ।
पश्यतो वासुदेवस्य भोजाश्चैव महारथाः ॥ १३

[1]वैशम्पायनः—
षट्त्रिंशेऽथ गते वर्षे वृष्णीनामनयो महान् ।
अन्योन्यं मुसलैस्ते तु निजघ्नुः कालचोदिताः ॥ १४

जनमेजयः—
केनानुशप्तास्ते वीराः क्षयं वृष्ण्यन्धका ययुः ।
भोजाश्च द्विजवर्य त्वं विस्तरेण वदस्व तत् ॥ १५

वैशम्पायनः—
विश्वामित्रं च कण्वं च नारदं च तपोधनम् ।
सारणप्रमुखा वीरा ददृशुर्द्वारकागतान् ॥ १६

ते वै साम्बं पुरस्कृत्य भूषयित्वा स्त्रियं यथा ।
अब्रुवन्नुपसङ्गम्य दैवदण्डनिपीडिताः ॥ १७

वीराः—
इयं स्त्री पुत्रकामस्य बभ्रोरमिततेजसः ।
ऋषयस्साधु जानीत किमियं जनयिष्यति ॥ १८

---

* अ-क-ख-ब—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ॥

1. अ—एतद्भवन्तं पृच्छामि समुद्रस्येव शोषणम् । [ अधिकः पाठः ]

वैशम्पायनः—

इत्युक्तास्ते महाराज विप्रलम्भप्रधर्षिताः ।
प्रत्यब्रुवंस्तान् मुनयो यत्तच्छृणु नराधिप ॥ १९

ऋषयः—

वृष्ण्यन्धकविनाशाय मुसलं घोरमायसम् ।
वासुदेवस्य दायादस् साम्बोऽयं जनयिष्यति ॥ २०

येन यूयं सुदुर्वृत्ता नृशंसा जातमन्यवः ।
उच्छेत्तारः कुलं सर्वम् ऋते रामजनार्दनौ ॥ २१

समुद्रं यास्यति श्रीमांस् त्यक्त्वा देहं हलायुधः ।
व्याधः कृष्णं महाभागम् शयानं भुवि वेत्स्यति ॥ २२

वैशम्पायनः—

इत्यब्रुवंस्ततो राजन् प्रलब्धास्तैर्महर्षयः ।
तथोक्त्वा मुनयस्ते तु यथागतमथो ययुः ॥ २३

अथाब्रवीत् तदा वृष्णीन् श्रुत्वैतन्मधुसूदनः ।
अन्तज्ञो मतिमांस्तस्य भवितव्यं तथेति तान् ॥ २४

एवमुक्त्वा हृषीकेशः प्रविवेश पुनर्गृहान् ।
कृतान्तमन्यथा नैच्छत् कर्तुं स जगतः प्रभुः ॥ २५

श्वोभूते तु ततस्साम्बो मुसलं तदसूयत ।
वृष्ण्यन्धकविनाशाय किङ्करप्रतिमं महत् ॥ २६
प्रसूतं शापजं घोरं तच्च राज्ञे न्यवेदयन् ॥ २६॥

विवर्णरूपस्तद्राजा सूक्ष्मचूर्णमकारयत् ।
प्राक्षिपन् सागरे तच्च पुरुषा राजशासनात् ॥ २७॥

अघोषयंश्च नगरे वचनादाहुकस्य ह ।
जनार्दनस्य रामस्य बभ्रोश्चैव महात्मनः ॥ २८॥

अद्यप्रभृति सर्वेषु वृष्ण्यन्धकगृहेष्वथ ।
सुरासवो न कर्तव्यस् सर्वैर्नगरवासिभिः ॥ २९॥

यश्च नो विदितं कुर्यात् पेयं किञ्चित् कचिन्नरः ।
जीवन् स शूलमारोहेत् क्षयं कृत्वा सबान्धवः ॥ ३०॥

ततो राजभयात् सर्वे नियमं चक्रिरे तदा ।
नराश्शासनमाज्ञाय तस्य राज्ञो महात्मनः ॥ ३१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
मौसलपर्वणि प्रथमोऽध्यायः ॥ १ ॥
॥ ९६ ॥ मौसलपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये ३१॥ श्लोकाः ]

---

## ॥ द्वितीयोऽध्यायः ॥

---

द्वारकायां नानोत्पातप्रादुर्भावः ॥ १॥ तत्तद्दर्शनात् कृष्णेन गान्धारीशापदानानुस्मरणेन तस्य सत्यताचिकीर्षया भटैः सर्ववृष्ण्यादीनां तीर्थयात्रोद्घोषणम् ॥ २ ॥

---

वैशम्पायनः—

एवं प्रयतमानानां वृष्णीनामन्धकैस्सह ।
कालो गृहाणि सर्वाणि परिचक्राम नित्यशः ॥ १

करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः ।
गृहाण्यावेक्ष्य वृष्णीनां नादृश्यत पुनः क्वचित् ॥ २

उत्पेदिरे महावाता दारुणाश्च दिने दिने ।
वृष्ण्यन्धकविनाशाय बहवो रोमहर्षणाः ॥ ३

प्रवृद्धमूषिका रथ्या विभिन्नमणिकास्तथा ।
चीची कूचीति वाश्यन्त शारिका वृष्णिवेश्मसु ॥ ४
नोपशाम्यति शब्दश्च स दिवारात्रमेव हि ॥ ४॥

अन्वकुर्वन्नुलूकानां सारसा वृष्णिवेश्मसु ।
अजाःशिवानां च रुतम् अन्वकुर्वन्त भारत ॥ ५॥

पाण्डरा रक्तपादाश्च विहगाः कालचोदिताः ।
वृष्ण्यन्धकानां गेहेषु कपोता व्यचरंस्तथा ॥ ६॥

अजा गोषु व्यजायन्त करभाश्चाश्वतरीषु च ।
शुनीष्वपि बिडालाश्च मूषिका नकुलीष्वपि ॥ ७॥

नापत्रपन्त पापानि कुर्वन्तो वृष्णयस्तथा ।
अर्दयन् ब्राह्मणांश्चापि पितृदेवांस्तथैव च ॥ ८॥

गुरूंश्चाप्यवमन्यन्त न तु रामजनार्दनौ ।
भार्याः पतीनुच्चरन्ति भार्याश्च पुरुषास्तथा ॥ ९॥

विभावसुः प्रज्वलितो वामं विपरिवर्तते ।
नीललोहितमञ्जिष्ठा विसृजन्नर्चिषः पृथक् ॥ १०॥

उदयास्तमये नित्यं पुर्यां तस्यां दिवाकरः ।
व्यदृश्यतासकृत् पुम्भिः कबन्धैः परिवारितः ॥　　११॥

महानसेषु सिद्धेऽन्ने ससूपेऽतीव भारत ।
अवतार्यमाणाः क्रिमयो ह्यदृश्यन्त नराधिप ॥　　१२॥

पुण्याहे वाच्यमाने च जपत्सु च महात्मसु ।
अभिधावमाना दृश्यन्ते न चादृश्यत कश्चन ॥　　१३॥

परस्परं तु नक्षत्रं हन्यमानं पुनः पुनः ।
ग्रहैरपश्यन् सर्वे ते नात्मनस्तु कथञ्चन ॥　　१४॥

नदन्तं पाञ्चजन्यं च वृष्ण्यन्धकपुरस्कृतम् ।
समन्तात् प्रत्यदृश्यन्त रासभा दारुणस्वनाः ॥　　१५॥

अपश्यत् स हृषीकेशस् सम्प्राप्तं कालपर्ययम् ।
त्रयोदशीममावास्यां तान् दृष्ट्वा प्राब्रवीदिदम् ॥　　१६॥

श्रीभगवान्—

त्रयोदशी पञ्चदशी कृतेयं राहुणा पुनः ।
तथा च भारते युद्धे प्राप्ता चाद्य क्षयाय नः ॥　　१७॥

वैशम्पायनः—

विमृशन्नेव कालं तं परिचिन्त्य जनार्दनः ।
[1]मेने प्राप्तं स षट्त्रिंशं वर्षं तु मधुसूदनः ॥　　१८॥

श्रीभगवान्—

पुत्रशोकाभिसन्तप्ता गान्धारी हतबान्धवा ।

---

1. क—इदमर्धं नास्ति

यदनुव्याजहारार्ता तदिदं समुपस्थितम् ॥ १९॥

इदं च समनुप्राप्तम् अब्रवीद्यद्युधिष्ठिरः ।
पुरा व्यूढेष्वनीकेषु दृष्ट्वोत्पातान् सुदारुणान् ॥ २०॥

वैशम्पायनः—

इत्युक्त्वा वासुदेवस्तु चिकीर्षन् सत्यमेव तत् ।
आज्ञापयामास तदा तीर्थे घोषयतेति च ॥ २१॥

अघोषयन्त पुरुषास्तत्र केशवशासनात् ।
तीर्थयात्रा समुद्रे वः कार्येति पुरुषर्षभाः ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां मौसलपर्वणि द्वितीयोऽध्यायः ॥ २॥
॥ ९६॥ मौसलपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये २२॥ श्लोकाः ]

## ॥ तृतीयोऽध्यायः ॥

द्वारकायां वृष्ण्यन्धकादिभिरनर्थसूचकदुःस्वप्नानुभवः ॥ १ ॥ ततः कृष्णाज्ञया सस्त्रीबालवृद्धैः प्रभासक्षेत्रगमनम् ॥ २ ॥ तत्र नृत्तगानादिमहोत्सवानुभवपूर्वकं मद्यादिपानम् ॥ ३ ॥ तत्र सभायां सात्यकिना स्यमन्तकमणिहरणादिमर्मोद्घाटनपूर्वकं कृतवर्मगर्हणम् ॥ ४ ॥ मणिवृत्तान्तश्रवणखिन्नसत्यभामामनःप्रसादनाय सात्यकिना खड्गेन कृतवर्मणः शिरश्छेदनम् ॥ ५ ॥ ततः कृतवर्मसात्यकिपक्षीयैर्मौसलतृणैः परस्परप्रहारेण परस्परमारणम् ॥ ६ ॥

वैशम्पायनः—

काली स्त्री पाण्डुरैर्दन्तैः प्रविश्य हसती निशि ।
स्त्रियस्स्वप्नेषु मुष्णन्ती द्वारकां परिधावति ॥ १

अग्निहोत्रनिकेतेषु वास्तुमध्येषु वेश्मसु ।
वृष्ण्यन्धकानखादन्त स्वप्नेषूल्का भयानकाः ॥ २

अलङ्काराश्च शस्त्राणि ध्वजाश्च कवचानि च ।
ह्रियमाणा ह्यदृश्यन्त रक्षोभिस्सुभयानकैः ॥ ३

तत्राग्निदत्तं कृष्णस्य वज्रनाभमयस्मयम् ।
दिवमारूढवच्चक्रं वृष्णीनां पश्यतां तदा ॥ ४

[1]युक्तं रथं दिव्यमादित्यवर्णं
हया हरन् पश्यतो दारुकस्य ।
ते सागरस्योपरिष्टादगच्छन्
मनोजवा मेघपुष्पादिवाहाः ॥ ५

तालस्सुपर्णश्च महाध्वजौ तौ
सुपूजितौ रामजनार्दनाभ्याम् ।
उच्चैर्जह्रुरप्सरसश्च देवा
ऊचुर्दिव्या गम्यतां तीर्थयात्रा ॥ ६

भगवद्दर्शनस्पर्शस्नेहैर्विजितभोगिनाम् ।
दिवः प्रवेशनार्थं ते विमानैर्दिवमाययुः ॥ ७

ततो जिगमिषन्तस्ते वृष्ण्यन्धकमहारथाः ।

---

1. क—हयैर्युक्तो रथो दिव्यो रविवर्णो हरेर्जवैः ।
पश्यतो दारुकस्यैव सागरस्योपरि स्थितः ॥
गच्छन् मनोजवो मेघपुष्पसैन्यादिवाहितः । [ पाठान्तरम् ]

सान्तःपुरास्तीर्थयात्राम् ईहन्तः पुरुषर्षभाः ॥ ८
ततो मनोहरा हृष्टाः पेयं मांसं मधूनि च ।
बहु नानाविधं चक्रुस् त्वरिताः कालचोदिताः ॥ ९
ततस्सीधुषु सक्ताश्च निर्ययुर्नगराद्बहिः ।
यानैरश्वैर्गजैश्चैव श्रीमन्तस्तिग्मतेजसः ॥ १०
ततः प्रभासे न्यवसन् यथोद्दिष्टं यथागृहम् ।
प्रभूतभक्ष्यपेयास्ते सदारा यादवास्तदा ॥ ११
निविष्टांस्तान् निशाम्याथ समुद्रान्ते स योगवित् ।
जगामामन्त्र्य तान् सर्वान् उद्धवोऽर्थविशारदः ॥ १२
तं प्रस्थितं महात्मानम् अभिवाद्य कृताञ्जलिः ।
जानन् विनाशं वृष्णीनां नैच्छद्वारयितुं हरिः ॥ १३
ततः कालपरीतास्ते वृष्ण्यन्धकमहारथाः ।
अपश्यन्नुद्धवं यान्तं तेजसाऽऽवृत्य रोदसी ॥ १४
ब्राह्मणार्थं तु यत् सिद्धम् अन्नं तेषामुपागतम् ।
तद्वानरेभ्यः प्रददू रसगन्धसमन्वितम् ॥ १५
ततस्तूर्यशताकीर्णं नटनर्तकसङ्कुलम् ।
प्रावर्तत महापानं प्रभासे तिग्मतेजसाम् ॥ १६
कृष्णस्य सन्निधौ कामं सहितः कृतवर्मणा ।
अपिबद्युयुधानश्च गदो बभ्रुस्तथैव च ॥ १७

ततः परिषदो मध्ये युयुधानो मदोत्कटः ।
अब्रवीत् कृतवर्माणम् अवहास्यावमत्य च ॥ १८

कः क्षत्रियो हन्यमानस् सुप्तान् हन्यान्मृतानिव ।
तन्न मृष्यन्ति हार्दिक्य यादवा यत् त्वया कृतम् ॥ १९

इत्युक्ते युयुधानेन पूजयामास तद्वचः ।
प्रद्युम्नो रथिनां श्रेष्ठो हार्दिक्यमवमत्य च ॥ २०

न तन्मृष्यति हार्दिक्यो यदवोचत् तदा रुषा ।
निर्दिशन्निव सावज्ञं तदा सव्येन पाणिना ॥ २१

भूरिश्रवाश्छिन्नबाहुर् युद्धे प्रायगतस्त्वया ।
वधेन सुनृशंसेन कथं वीरेण पातितः ॥ २२

इति श्रुत्वा वचस्तस्य केशवः परवीरहा ।
तिर्यक् सरोषं दृष्ट्या च वीक्षाञ्चक्रे स मन्युमान् ॥ २३

मणिं स्यमन्तकं चैव यस्स सत्राजितोऽभवत् ।
तां कथां स्मारयामास सात्यकिर्मधुसूदनम् ॥ २४

तच्छ्रुत्वा केशवस्याङ्कम् अगमद्रुदती तदा ।
सत्यभामा प्रकुपिता कोपयन्ती जनार्दनम् ॥ २५

तत उत्थाय सक्रोधस् सात्यकिर्वाक्यमब्रवीत् ॥ २५॥

सात्यकिः—

पञ्चानां द्रौपदेयानां धृष्टद्युम्नशिखण्डिनोः ।

एष गच्छामि पदवीं सत्येन च महाद्युते ॥ २६॥
सौप्तिके ये च निहतास् सुप्ताऽनेन दुरात्मना ।
द्रोणपुत्रसहायेन पापेन कृतवर्मणा ॥ २७॥
[1]समाप्तमायुरस्याद्य यशश्चापि सुमध्यमे ॥ २८

वैशम्पायनः—

इत्येवमुक्त्वा खड्गेन केशवस्य समीपतः ।
अभिसृत्य शिरस्तस्य चिच्छेद कृतवर्मणः ॥ २९
तथाऽन्यानभिनिघ्नन्तं युयुधानं समन्ततः ।
अभ्यधावद्धृषीकेशो विनिवारयिषुस्तदा ॥ ३०
एकीभूतास्ततस्सर्वे कालपर्यायचोदिताः ।
भोजान्धका महाराज शैनेयं पर्यवारयन् ॥ ३१
तान् दृष्ट्वा पततस्तूर्णम् अभिक्रुद्धो जनार्दनः ।
अचुक्रुधन्महातेजा जानन् कालस्य पर्ययम् ॥ ३२
ते तु पानमदाविष्टाश् चोदिताश्चैव मन्युना ।
युयुधानमथाभ्यघ्नन्नुच्छिष्टैर्भाजनैस्तथा ॥ ३३
पात्यमाने तु शैनेये क्रुद्धो रुक्मिणिनन्दनः ।
तदन्तरमुपाधावन्मोक्षयिष्यञ्शिनेस्सुतम् ॥ ३४
स भोजैस्सह संयुक्तस् सात्यकिश्चान्धकैस्सह ।
व्यायच्छमानौ तौ वीरौ बाहुद्रविणशालिनौ ॥ ३५
बहुत्वात् तौ हतौ वीरावुभौ कृष्णस्य पश्यतः ॥ ३५॥

1. ख—अर्धत्रयं नास्ति

हतं दृष्ट्वा च शैनेयं पुत्रं च यदुनन्दनः ।
एरकाणां ततो मुष्टिं कोपाज्जग्राह केशवः ॥　　३६॥

तदभून्मुसलं घोरं वज्रकल्पमयस्मयम् ।
जघान तेन कृष्णस्तान् येऽस्य प्रमुखतोऽभवन् ॥　　३७॥

ततोऽन्धकाश्च भोजाश्च शिनयो वृष्णयस्तथा ।
न्यघ्नन्नन्योन्यमाक्रन्दन् मुसलैः कालचोदिताः ॥　　३८॥

यस्तेषामेरकां कश्चिज् जग्राह रुषितो नृप ।
वज्रभूतेव सा तस्य व्यदृश्यत तदा विभो ॥　　३९॥

तृणं च मुसलीभूतम् अपि तत्र व्यदृश्यत ।
ब्रह्मदण्डकृतं सर्वम् इति तद्विद्धि पार्थिव ॥　　४०॥

आविध्याविध्य ते राजन् प्रहरन्ति स्म तैस्तृणैः ।
तद्वज्रभूतं मुसलं व्यदृश्यत तदा दृढम् ॥　　४१॥

अवधीत् पितरं पुत्रः पिता पुत्रं च भारत ।
मत्ताः परिपतन्ति स्म योधयन्तः परस्परम् ॥　　४२॥

पतङ्गा इव चाग्नौ ते न्यपतन् कुकुरान्धकाः ।
नासीत् पलायने बुद्धिर् वध्यमानस्य कस्यचित् ॥　　४३॥

तत्तु पश्यन् महाबाहुर् जानन् कालस्य पर्ययम् ।
मुसलं समवष्टभ्य तस्थौ स मधुसूदनः ॥　　४४॥

साम्बं च निहतं दृष्ट्वा चारुदेष्णं च माधवः ।
प्रद्युम्नमनिरुद्धं च ततश्चुक्रोध मन्युमान् ॥　　४५॥

गदं वीक्ष्य शयानं च भृशं शोकसमन्वितः ।
स निःशेषं तदा चक्रे शार्ङ्गचक्रगदाधरः ॥ ४६॥
तं निघ्नन्तं महातेजा बभ्रुः परपुरञ्जयः ।
दारुकश्चैव दाशार्हम् ऊचतुस्तन्निबोध मे ॥ ४७॥
भगवन् संहृतं सर्वं त्वया भूयिष्ठमच्युत ।
रामस्य पदमन्विच्छ तत्र गच्छाम यत्र सः ॥ ४८॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
मौसलपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
॥ ९६ ॥ मौसलपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये ४८॥ श्लोकाः ]

---

## ॥ चतुर्थोऽध्यायः ॥

सर्वयादवेषु निहतेषु बभ्रुदारुकाभ्यां सह बलभद्रमन्वेषमाणेन कृष्णेन वने वृक्षाश्रितस्य तस्य दर्शनम् ॥ १ ॥ ततः कृष्णेन पाण्डवान् प्रति दारुकप्रेषणम् ॥ २ ॥ बलभद्रेण योगात् सर्पशरीरस्वीकारेण समुद्रप्रवेशः ॥ ३ ॥ कृष्णेन शरीरत्यागाय योगेन शयनम् ॥ ४ ॥ व्याधेन मृगबुद्ध्या कृष्णस्य पादतले सायकेन गाढवेधनम् ॥ ५ ॥ पश्चात् समीपमेत्य पश्चात्तापेन व्याधस्य कृष्णप्रणामः ॥ ६ ॥ देवैः कृष्णस्य स्वर्गप्रापणम् ॥ ७ ॥ ततः शरीरत्यागपूर्वकं दिवं गतेन कृष्णेन देवैः पुष्पवर्षणपूर्वकं स्तुत्या प्रत्युद्गम्यमानेन सता निजपरधामप्रवेशः ॥ ८ ॥

---

वैशम्पायनः—

ततो ययुर्दारुकः केशवश्च
बभ्रुश्च रामस्य पदं नयन्तः ।

अथापश्यद्रामममनन्तवीर्यं
वृक्षाश्रितं चिन्तयानं विविक्ते ॥ १
ततस्समासाद्य महानुभावः
कृष्णस्तदा दारुकमन्वशासत् ॥ १॥

श्रीभगवान्—
गत्वा कुरून् सर्वमिमं महान्तं
पार्थाय शंसस्व वधं यदूनाम् ।
ततोऽर्जुनः क्षिप्रमिहोपयातु
श्रुत्वा मृतान् यादवान् ब्रह्मशापात् ॥ २॥

वैशम्पायनः—
इतीदमुक्तस्स ययौ रथेन
कुरूंस्तदा दारुको नष्टचेताः ।
ततो गते दारुके केशवोऽथ
दृष्ट्वाऽग्रतो बभ्रुमुवाच वाक्यम् ॥ ३॥

श्रीभगवान्—
स्त्रियो भवान् रक्षितुं यातु शीघ्रं
नैता हिंस्युर्दस्यवो वित्तभावात् ॥ ४

वैशम्पायनः—
स प्रस्थितः केशवेनानुशिष्टो
मदातुरो ज्ञातिवधार्दितश्च ॥ ४॥
तं वै यान्तं सन्निधौ केशवस्य
त्वरन्तमेकं सहसैव बभ्रुम् ।

ब्रह्मानुशप्तमवधीन्महद्वै
कूटे युक्तं मुसलं लुब्धकस्य ॥ ५॥

ततो दृष्ट्वा निहतं बभ्रुमाह
कृष्णो वाक्यं भ्रातरमग्रजं तु ॥ ६

श्रीभगवान्—
इहैव त्वं मां प्रतीक्षस्व राम
यावत् स्त्रियो ज्ञातिवशाः करोमि ॥ ६॥

वैशम्पायनः—
ततः पुरीं द्वारवतीं प्रविश्य
जनार्दनः पितरं प्राह वाक्यम् ॥ ७

श्रीभगवान्—
सर्वं भवान् रक्षतु नस्समग्रं
धनञ्जयस्यागमनं प्रतीक्षन् ।
रामो वनान्ते प्रतिपालयन् माम्
आस्तेऽद्याहं तेन समागमिष्ये ॥ ८

दृष्टं मयेदं निधनं यदूनां
राज्ञां च पूर्वं कुरुपुङ्गवानाम् ।
[1]नाहं विहीनो यदुभिर्नृवीर
पुरीमिमां द्रष्टुमिहाद्य शक्तः ॥ ९

---

1. क—नाहं विहीनो मधुभिस्सुवीरैः स्थातुं न शक्तः क्षणमात्रमद्य ।
ख—नाहं विहीनां मधुभिर्नृवीर । घ—नाहं विहीनं मधुभिश्च वीर ।

तपश्चरिष्यामि निबोध तद्वै
रामेण सार्धं वनमभ्युपेतः ॥ ९॥

वैशम्पायनः—

इतीदमुक्त्वा शिरसा च पादौ
प्रगृह्य कृष्णोऽथ जगाम तूर्णम् ।
ततश्शब्दो दारुणः प्रादुरासीत्
सस्त्रीकुमारस्य जनस्य तस्य ॥ १०॥

ततोऽब्रवीत् केश[1]वस्सन्निवृत्य
शब्दं श्रुत्वा योषितां क्रोशतीनाम् ॥ ११

श्रीभगवान्—

पुरीमिमामेष्यति सव्यसाची
स वो दुःखान्मोचयिता नराग्र्यः ॥ ११॥

वैशम्पायनः—

ततो गत्वा केशवस्तं ददर्श
रामं तमेकं स्थितमेक एव ॥ १२

अथापश्यद्योगयुक्तस्य तस्य
नागं मुखान्निस्सरन्तं महान्तम् ।
श्वेतं ययौ स च तं वीक्ष्य वीक्ष्य
महार्णवे येन महानुभावः ॥ १३

---

1. क—वस्त्वभिशम्य । ख-ग—वस्तं निवृत्य ।

सहस्रशीर्षा पर्वताभोगवर्ष्मा
रक्ताननस्स्वां तनुं तां विसृज्य ॥ १३॥

सन्दृश्य तं सागरान्तं विशन्तं
सम्यक् तदा सागरः प्रत्यगृह्णात् ॥ १४

नागा दिव्यास्सरितश्चैव सर्वाः
कार्कोटको वासुकिस्तक्षकश्च ।
पृथुश्रवा अरुणः कुञ्जरश्च
मिश्री शङ्खः कुमुदः पुण्डरीकः ॥ १५

तथा नागो धृतराष्ट्रो महात्मा
ह्रादः क्रोधश्शिनिपृष्ठो निकेतुः ।
तथा नागौ चक्रमन्दातिषण्डौ
नाग[1]श्रेष्ठो विमुखश्चाश्वधिश्च ॥ १६

स्वयं राजा वरुणश्चाह देवैः
प्रत्युद्गम्य स्वागतेनाभ्यनन्दत् ॥ १६॥

तेऽपूजयंश्चार्यविधिक्रियाभिस्
सङ्कर्षणं भूधरं शुद्धसत्त्वम् ॥ १७

ततो गते भ्रातरि वासुदेवो
जानन् सर्वा गतयो दिव्यदृष्टिः ।

---

1. क—श्रेष्ठो दुर्मुखश्चाश्वतीश्च । ख—श्रेष्ठो दुर्मुखश्चाधिगश्च ।
घ—श्रेष्ठा दुर्मुखाश्वधीश्च ।

वने शून्ये विचरंश्चिन्तयानो
भूमौ ततस्संविवेशाग्र्यतेजाः ॥ १८

सर्वं हि तेन प्राक् तदा प्राप्तमासीद्
गान्धार्या यद्वाक्यमुक्तं स्वधर्मात् ।
दुर्वाससा पायसोच्छिष्टलिप्तो
यच्चाप्युक्तं तच्च सस्मार कृष्णः ॥ १९

[1]-[2]कुलस्त्रीणां सुव्रतानां गवां च
द्विजेन्द्राणां बलमाधाय धर्मे ।
योनिर्लोकानां वरदो ब्रह्मदेवो
गोविन्दाख्यो वासुदेवोऽथ नित्यः ॥ २०

सञ्चिन्तयानोऽन्धकवृष्णिनाशं
कुरुक्षयं चैव महानुभावः ।
मेने ततस्सङ्क्रमणस्य कालं
ततश्चकारेन्द्रियसन्निरोधम् ॥ २१

यथा च लोकस्थितिपालनार्थं
दुर्वासवाक्यप्रतिपालनार्थम् ।
देवोऽपि वा देहविमोक्षहेतोर्
निमित्तमैच्छत् सकलार्थतत्त्ववित् ॥ २२

---

1. क—अर्धद्वयं नास्ति
2. क—स चिन्तयानोऽन्धकवृष्णिनाशम् । [एकः पादोऽधिकः]

स सन्निरुद्धेन्द्रियवाङ्मनास्तु
शिश्ये महायोगमुपेत्य कृष्णः ।
जरश्च तं देशमुपाजगाम
लुब्धस्तदानीं मृगलिप्सुरुग्रः ॥ २३

कृष्णं शयानं स विकृष्य बाणं
विव्याध पादे मृगशङ्कया च ॥ २३॥

अथापश्यत् पुरुषं योगयुक्तं
पीताम्बरं लुब्धकोऽनेकबाहुम् ।
मत्वाऽऽत्मानं त्वपराद्धं तु तस्य
जग्राह पादौ शिरसा चार्तरूपः ॥ २४॥

[1]आश्वासितः पुण्यफलेन भक्त्या
तथाऽनुतापात् कर्मणो जन्मनश्च ।
दृष्ट्वा तथा देवमनन्तवीर्यं
देवैस्स्वर्गं प्रापितस्त्यक्तदेहः ॥ २५॥

गणैर्मुनीनां पूजितस्तत्र कृष्ण
ऊर्ध्वं गच्छन् प्राप्य लोकान् स्वलक्ष्म्या ॥ २६

दिवि प्राप्तं वसवोऽथाश्विनौ च
रुद्रादित्या मरुतो विश्वसङ्घाः ।

---

2. क—अयं श्लोको नास्ति

प्रत्युद्गमन्नृषयश्चापि सिद्धास्
सब्रह्मकाः पतयश्च प्रजानाम् ॥ २७

ततो राजन् भगवानुग्रतेजा
नारायणः प्रभवश्चाव्ययश्च ।
योगाचार्यो रोदसी व्याप्य लक्ष्म्या
स्थानं चाग्र्यं मण्डलं प्राप योगात् ॥ २८

ततस्समेतैर्मधुसूदनस्तैर्
दैवैस्सर्वैर्ऋषिभिश्चारणैश्च ।
गन्धर्वाग्र्यैरप्सरोभिर्वराभिस्
सिद्धैस्साध्यैस्सन्नतैः पूज्यमानः ॥ २९

तं वै देवं प्रत्यनन्दन्त राजन्
मुनिश्रेष्ठा वाग्भिरानर्चुरीशम् ।
गन्धर्वाश्चाप्युपतस्थुस्स्तुवन्तः
प्रीत्या चैनं पुरुहूतोऽभ्यनन्दत् ॥ ३०

पुरुहूतः—

[1]नमो नमस्ते भगवन् शार्ङ्गधन्वन्
धर्मस्थित्या प्रादुरासीर्धरायाम् ।
कंसाख्यादीन् देवशत्रूंश्च सर्वान्
हत्वा भूमिस्स्थापिता भारतप्ता ॥ ३१

1. ब—श्लोकचतुष्टयं नास्ति

दिव्यं स्थानमजरं चाप्रमेयं
दुर्विज्ञेयं चागमैर्गम्यमग्र्यम् ।
गच्छ प्रभो रक्ष चार्तिं प्रपन्नान्
कल्पे कल्पे जायमानस्स्वमूर्त्या ॥ ३२

वैशम्पायनः—
इत्येवमुक्त्वा देवसङ्घोऽनुगम्य
श्रिया युक्तं पुष्पवृष्ट्या ववर्ष ।
वाणी ह्यासीत् संश्रिता रूपिणी सा
भानोर्मध्ये प्रविश त्वं च राजन् ॥ ३३

श्रीभगवान्—
भुजैश्चतुर्भिस्समुपेतं ममेदं
रूपं विशिष्टं दिवि वै संस्थितं च ।
भूमौ गतं पूजयताप्रमेयं
सदा हि तस्मिन् निवसामि देवाः ॥ ३४

वैशम्पायनः—
देवा निवृत्तास्तत् पदं नाप्नुवन्तो
बुद्ध्या देवं संस्मरन्तः प्रतीताः ।
ब्रह्माद्यास्ते तद्गुणान् कीर्तयन्तश्
शुभाँल्लोकान् स्वान् प्रपेदुस्सुरेन्द्राः ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
मौसलपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
॥ ९६ ॥ मौसलपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये ३५ श्लोकाः ]

—

## ॥ पञ्चमोऽध्यायः ॥

दारुकेण हास्तिनपुरमेत्य पाण्डवेषु सर्वयादवक्षयनिवेदनम् ॥ १ ॥ अर्जुनेन द्वारकामेत्य रुक्मिण्यादिपरिसान्त्वनपूर्वकं वसुदेवगृहं प्रति गमनम् ॥ २ ॥

वैशम्पायनः—

दारुकस्तु कुरून् गत्वा दृष्ट्वा पार्थं स्थितं तदा ।
आचष्ट मुसलैर्वृष्णीन् अन्योन्येनाभिसंहतान् ॥ १

श्रुत्वा विनष्टान् वार्ष्णेयान् सभोजान् जनमेजय ।
पाण्डवाश्शोकसन्तप्ता वित्रस्तमनसोऽभवन् ॥ २

ततोऽर्जुनस्तानामन्त्र्य केशवस्य प्रियस्सखा ।
प्रययौ मातुलं द्रष्टुं नेदमस्तीति चाब्रवीत् ॥ ३

स वृष्णिनिलयं गत्वा दारुकेण सह प्रभो ।
ददर्श द्वारकां वीरो मृतनाथामिव स्त्रियम् ॥ ४

यास्स्म ता लोकनाथेन नाथवत्यः पुराऽभवन् ।
तास्स्मानाथास्तदा नाथं पार्थं दृष्ट्वा विचुक्रुशुः ॥ ५

षोडश स्त्रीसहस्राणि वासुदेवपरिग्रहाः ।
तासामासीन्महान् नादो दृष्ट्वैवार्जुनमागतम् ॥ ६

तास्तु दृष्ट्वा स कौरव्यो बाष्पेण पिहितोऽर्जुनः ।
हीनाः पुत्रैश्च कृष्णेन नाशकत् सोऽभिवीक्षितुम् ॥ ७

तां स्म वृष्ण्यन्धकजलां हयमीनां रथोडुपाम् ।
वादित्रस्वननिर्घोषां वेश्मतीर्थमहाग्रहाम् ॥ ८

रत्नशैवलसङ्घाटां वप्रप्राकारमालिनीम् ।
रथ्यास्रोतोजलावर्तां चत्वरस्तिमितह्रदाम् ॥ ९

रामकृष्णमहाग्राहां द्वारकां सरितं तदा ।
कालपाशग्रहां घोरां नदीं वैतरणीमिव ॥ १०

तां ददर्शार्जुनो धीमान् विहीनां वृष्णिपुङ्गवैः ।
गतश्रियं निरानन्दां पद्मिनीं शिशिरे यथा ॥ ११

तां दृष्ट्वा द्वारकां पार्थस् ताश्च कृष्णस्य योषितः ।
सस्वरं बाष्पमुत्सृज्य निपपात महीतले ॥ १२

सात्राजिती सत्यभामा रुक्मिणी च विशाम्पते ।
अभिपत्य प्ररुरुदुः परिवार्य धनञ्जयम् ॥ १३

ततस्तं काञ्चने पीठे समुत्थाप्योपवेश्य च ।
अभिनन्द्य महात्मानं परिवार्योपतस्थिरे ॥ १४

ततस्संस्तूय गोविन्दं कथयित्वा च पाण्डवः ।
आश्वास्य तास्स्त्रियश्चापि मातुलं द्रष्टुमागमत् ॥ १५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
मौसलपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

॥ ९६ ॥ मौसलपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[ अस्मिन्नध्याये १५ श्लोकाः ]

---

## ॥ षष्ठोऽध्यायः ॥

वसुदेवेन स्वगृहमागतेऽर्जुने यादवक्षयनिदाननिवेदनपूर्वकं कृष्णाद्यनुस्मरणेन परिशोचनम् ॥ १ ॥ तथा तं प्रति कृष्णवचननिवेदनेन राज्यस्त्रीधनादिसमर्पणपूर्वकं स्वेन स्वप्राणत्यजनप्रतिज्ञानम् ॥ २ ॥

वैशम्पायनः—

तं शयानं महात्मानं वीरमानकदुन्दुभिम् ।
पुत्रशोकाभिसन्तप्तं ददर्श कुरुनन्दनः ॥ १

तस्याश्रुपरिपूर्णाक्षो व्यूढोरस्को महाभुजः ।
आर्तस्यार्ततरः पार्थः पादौ जग्राह भारत ॥ २

तस्य मूर्धानमाघ्रातुम् इयेषानकदुन्दुभिः ।
स्वस्रीयस्य महाबाहुर् न शशाक च शत्रुहन् ॥ ३

समालिङ्ग्यार्जुनो वृद्धं स भुजाभ्यां महाभुजः ।
रुरोदाथ स्मरञ्छौरिं विललाप सुविह्वलः ॥ ४

भ्रातॄन् पुत्रांश्च पौत्रांश्च दौहित्रांश्च तथैव च ॥ ४॥

वसुदेवः—

यैर्जिता भूमिपालाश्च दैत्याश्च शतशोऽर्जुन ।
तान् दृष्ट्वा नेह पश्यामि जीवाम्यर्जुन दुर्मनाः ॥ ५॥

यौ तावर्जुन शिष्यौ ते प्रियौ बहुमतौ सदा ।
तयोरपनये पार्थ वृष्णयो निधनं गताः ॥ ६॥

यौ तौ वृष्णिप्रवीराणां द्वावेवातिरथौ स्मृतौ ।
प्रद्युम्नो युयुधानश्च कथयन् कत्थसे च यौ ॥ ७॥

नित्यं त्वं कुरुशार्दूल कृष्णश्च मम पुत्रकः ।
तावेव वृष्णिनाशस्य मुखमास्तां धनञ्जय ॥ ८॥

न तु गर्हामि शैनेयं हार्दिक्यं चाहमर्जुन ।
अक्रूरं रौक्मिणेयं च शापो ह्येवात्र कारणम् ॥ ९॥

केशिनं यस्तु कंसं च विक्रम्य हतवान् प्रभुः ।
[1]विदेहमकरोत् पार्थ चैद्यं च मधुसूदनः ॥ १०॥

नैषादिमेकलव्यं च पलं कालिङ्गमागधान् ।
गान्धारान् काशिराजं च मरुभूमौ च पार्थिवान् ॥ ११॥

प्राच्यांश्च दाक्षिणात्यांश्च पार्वतीयांस्तथा नृपान् ॥ १२
सोऽभ्युपेक्षितवान नूनम् अनयान् मधुसूदनः ॥ १२॥

त्वं हि तं नारदश्चैव मुनयश्च सनातनम् ।
गोविन्दमनघं देवम् अभिजानीध्वमच्युतम् ॥ १३॥

प्रत्यपश्यच्च स विभुर् ज्ञातिक्षयमधोक्षजः ।
समुपेक्षितवान् नित्यं स्वयं स मम पुत्रकः ॥ १४॥

गान्धार्या वचनं यत्तद् ऋषीणां च परन्तप ।
तन्नूनमन्यथा कर्तुं नैच्छत् स जगतः प्रभुः ॥ १५॥

प्रत्यक्षं भवतश्चापि तव पौत्रः परन्तप ।

---

1. क—अर्धद्वयं नास्ति

अश्वत्थाम्ना हतश्चापि जीवितस्तस्य तेजसा ॥ १६॥
इमांस्तु नैच्छत् स्वान् ज्ञातीन् रक्षितुं स सखा तव ॥ १७
ततस्स पुत्रान् पौत्रांश्च भ्रातॄनथ सखीनपि ।
शयानान् निहतान् दृष्ट्वा कृष्णो मामिदमब्रवीत् ॥ १८

श्रीभगवान्—

सम्प्राप्तोऽद्यायमस्यान्तकालस्स पुरुषर्षभ ।
आगमिष्यति बीभत्सुर् इमां द्वारवतीं पुरीम् ॥ १९
आख्येयं तस्य यद्वृत्तं वृष्णीनां वैशसं महत् ॥ १९॥
सखा नूनं महातेजाश् श्रुत्वैनमनयं प्रभो ।
आगन्ता क्षिप्रमेवेह न मेऽत्रास्ति विचारणा ॥ २०॥
योऽहं तमर्जुनं विद्धि फल्गुनं विद्धि मामिति ।
स यद् ब्रूयात् तथा कार्यम् इति बुद्ध्यस्व माधव ॥ २१॥
स स्त्रीषु प्राप्तकालं वः पाण्डवो बालकेषु च ।
प्रतिपत्स्यति बीभत्सुर् भवतां चौर्ध्वदैहिकम् ॥ २२॥
इमां हि नगरीं सद्यः प्रतियाते धनञ्जये ।
प्राकाराट्टालकोपेतां समुद्रः प्लावयिष्यति ॥ २३॥
अहं हि देशे कस्मिंश्चित् पुण्ये नियममास्थितः ।
कालं काङ्क्षे सद्य एव रामेण प्रहितं हि मे ॥ २४॥

वसुदेवः—

एवमुक्त्वा हृषीकेशो मामचिन्त्यपराक्रमः ।
हित्वा मां बालकैस्सार्धं दिशं कामप्यगात् प्रभो ॥ २५॥

सोऽहं तौ च महात्मानौ चिन्तयन् रामकेशवौ ।
घोरं ज्ञातिवधं चैव न भुञ्जे शोककर्शितः ॥ २६॥

न च भोक्ष्ये न जीविष्ये दिष्ट्या दृष्टोऽसि पाण्डव ।
यदुक्तं पार्थ कृष्णेन तत् सर्वमखिलं कुरु ॥ २७॥

एतत् ते पार्थ राज्यं च स्त्रियो रत्नानि चैव ह ।
इष्टान् प्राणानहं हीमांस् त्यक्ष्यामि रिपुसूदन ॥ २८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
मौसलपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
॥ १६ ॥ मौसलपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[ अस्मिन्नध्याये २८॥ श्लोकाः ]

## ॥ सप्तमोऽध्यायः ॥

अर्जुनेन वसुदेवसमाश्वासनपूर्वकं सकलपौरान् प्रति नातिचिरादेव द्वारकायाः समुद्रेण समाप्लावननिवेदनपूर्वकं सर्वेषामिन्द्रप्रस्थं प्रति प्रयाणसन्नाहसञ्चोदना ॥ १ ॥ तथा परेद्युर्योगेन शरीरं त्यक्तवतो वसुदेवस्य पत्नीभिस्सह संस्करणपूर्वकं रामकृष्णशरीरयोर्दाहनम् ॥ २ ॥ ततो वज्रार्जुनपुरस्कारेण सकलपौरजने पुरःपुरः प्रयाते समुद्रेण पश्चाद्भागे पौरजनमुक्ततत्तद्भागस्य कृष्णमन्दिरं विना स्वजलेन समाक्रमणम् ॥ ३ ॥ अर्जुनेन मध्येमार्गं चोरापहृतावशिष्टयादवकलत्रादिभिः सह स्वदेशमेत्य युधिष्ठिराज्ञया वज्रस्येन्द्रप्रस्थराज्येऽभिषेचनम् ॥ ४ ॥ तथा सात्यकिसुतादीनां तत्र तत्र राज्येऽभिषेचनम् ॥ ५ ॥ रुक्मिण्यादिभिः काभिश्चिदग्निप्रवेशनम् ॥ ६ ॥ सत्यभामादिभिः काभिश्चन तपसे वनगमनम् ॥ ७ ॥

वैशम्पायनः—

एवमुक्तस्ततः पार्थो मातुलेन परन्तप ।
दुर्मना दीनमनसं वसुदेवमुवाच ह ॥ १

अर्जुनः—

नाहं वृष्णिप्रवीरेण मधुभिश्चैव मातुल ।
विहीनां पृथिवीं द्रष्टुं शक्तश्चिरमिह प्रभो ॥　　२

राजा च भीमसेनश्च सहदेवश्च पाण्डवः ।
नकुलो याज्ञसेनी च षडेकमनसो वयम् ॥　　३

राज्यसङ्क्रमणे चापि कामोऽयं नित्यमेव हि ।
तमिमं विद्धि सम्प्राप्तं कालं कालविदां वर ॥　　४

सर्वथा वृष्णिदारांस्तु बालवृद्धांस्तथैव च ।
नयिष्ये परिगृह्याहम् इन्द्रप्रस्थमरिन्दम ॥　　५

वैशम्पायनः—

इत्युक्त्वा दारुकमिदं वाक्यमाह धनञ्जयः ॥　　५॥

अर्जुनः—

अमात्यान् वृष्णिवीराणां द्रष्टुमिच्छामि मा चिरम् ॥　　६

वैशम्पायनः—

इत्युक्त्वा वृष्णिसिंहानां सुधर्मां यादवीं सभाम् ।
प्रविवेशार्जुनश्शूरश् शोचमानो महाभुजः ॥　　७

तमासनगतं तत्र सर्वाः प्रकृतयस्तथा ।
ब्राह्मणा नागराश्चैव परिवार्योपतस्थिरे ॥　　८

तान् दीनमनसस्सर्वान् निर्भ्रान्तहतचेतसः ।
उवाचेदं वचः पार्थस् स्वयं दीनतरस्तथा ॥　　९

अर्जुनः—

शक्रप्रस्थमहं नेष्ये वृष्ण्यन्धकजनं स्वयम् ।
इदं हि नगरं सर्वं समुद्रः प्लावयिष्यति ॥　　१०

सज्जीकुरुत यानानि रत्नानि विविधानि च ।
वज्रस्तु भवतां राजा शक्रप्रस्थे भविष्यति ॥　　११

सप्तमे दिवसेऽपेते रवौ विमल उद्यते ।
बहिर्वत्स्यामहे सर्वे सज्जीभवत मा चिरम् ॥　　१२

वैशम्पायनः—

इत्युक्तास्तेन ते पौराः पार्थेनाक्लिष्टकर्मणा ।
सर्वमाशु तदा चक्रुस् संसिद्ध्यर्थं समुत्सुकाः ॥　　१३

तां रात्रिमवसत् पार्थः केशवस्य निवेशने ।
महता शोकमोहेन सहसाऽभिपरिप्लुतः ॥　　१४

श्वोभूते तु ततश्शौरिर् वसुदेवः प्रतापवान् ।
युक्त्वाऽऽत्मानं महातेजा जगाम गतिमुत्तमाम् ॥　　१५

ततश्शब्दो महानासीद् वसुदेवस्य वेश्मनि ।
दारुणः क्रोशतीनां च रुदतीनां च योषिताम् ॥　　१६

प्रकीर्णमूर्धजास्सर्वा विमुक्ताभरणस्रजः ।
उरांसि बाहुभिर्घ्नन्त्यो व्यलपन् करुणं स्त्रियः ॥　　१७

तं देवकी च भद्रा च मदिरा रोहिणी तथा ।

अन्वारोढुं व्यवसिता भर्तारं योषितां वराः ॥ १८

[1]ततश्शौरिं नृयुक्तेन बहुमूल्येन भारत ।
यानेन महता पार्थो बहिर्निष्क्रामयत् तदा ॥ १९

तमन्वयुस्तत्र तत्र दुःखशोकसमन्विताः ।
द्वारकावासिनः पौरास् सर्व एव नरर्षभ ॥ २०

तस्याश्वमेधिकास्सर्वे दीप्यमानाश्च पावकाः ।
पुरतस्तस्य यानस्य याजकाश्च समाययुः ॥ २१

अनुजग्मुश्च तं वीरं देव्यस्ता वै स्वलङ्कृताः ।
स्त्रीसहस्रैः परिवृता वधूभिश्च सहस्रशः ॥ २२

यस्तु देशः प्रियस्तस्य जीवतोऽभून्महात्मनः ।
तत्रैनमुपसङ्कल्प्य पितृमेधं प्रचक्रिरे ॥ २३

तं चिताग्निगतं वीरं शूरपुत्रं वराङ्गनाः ।
ततोऽन्वारुरुहुः पत्न्यश् चतस्रः पतिलोकगाः ॥ २४

तं वै चतसृभिस्स्त्रीभिर् अन्वितं पाण्डुनन्दनः ।
अदाहयच्चन्दनैश्च गन्धैरुच्चावचैरपि ॥ २५

ततः प्रादुरभूच्छब्दस् समिद्धस्य विभावसोः ।
सामगानां च निर्घोषो नराणां रुदतामपि ॥ २६

ततो वज्रप्रधानास्ते वृष्णिवीराः कुमारकाः ।

---

1. घ—ततः सार्धं श्लोकद्वयं नास्ति

सर्वे एवोदकं चक्रुस् स्त्रियश्चैव महात्मनः ॥ २७
अलुप्तधर्मं तद्धर्मं कारयित्वा स फल्गुनः ।
जगाम वृष्णयो यत्र विनष्टाः पुरुषर्षभाः ॥ २८
स तान् दृष्ट्वा निपतितान् भूतले दुःखितो भृशम् ।
बभूवातीव कौरव्यः प्राप्तकालं चकार ह ॥ २९
यथाप्रधानकं चैषां चक्रे सर्वास्तथा क्रियाः ।
ये हता ब्रह्मशापेन मुसलैरेरकोद्भवैः ॥ ३०
ततो भगवतो देहं दृष्ट्वाऽऽश्लिष्य प्रलप्य च ।
स्मृत्वा तद्वचनं सर्वं मोहशोकोपबृंहितः ॥ ३१
ततश्शरीरे रामस्य वासुदेवस्य चोभयोः ।
अन्वीक्ष्य दाहयामास पुरुषैराप्तकारिभिः ॥ ३२
[1]स तेषां विधिवत् कृत्वा प्रेतकार्याणि पाण्डवः ।
सप्तमे दिवसे प्रायाद् रथमारुह्य सत्वरः ॥ ३३
अश्वयुक्तै रथैश्चापि गोखरोष्ट्ररथैरपि ।
स्त्रियश्च वृष्णिवीराणां रुदन्त्यश्शोककर्शिताः ॥ ३४
अनुजग्मुर्महात्मानं पाण्डुपुत्रं धनञ्जयम् ।
भृत्यास्त्वन्धकवृष्णीनां सादिनो रथिनश्च ये ॥ ३५

---

1. क—अष्टौ महिष्यः कृष्णस्य रुक्मिणीप्रमुखा नृप ।
रेवती च महाभागा विविशुर्जातवेदसः ॥
तयोश्शरीरमेष्यैतत् सत्सङ्गाह्लादशीतले ॥ [ अधिकः पाठः ]

[1]वीरहीना वृद्धबालाः पौरजानपदास्तथा ।
ययुस्ते परिवार्याथ कलत्रं पार्थशासनात् ॥ ३६

कुञ्जरैश्च गजारोहा ययुश्शैलनिभैस्तथा ।
सपादरक्षैस्संयुक्तास् सोत्तरायुधिका ययुः ॥ ३७

पुत्राश्चान्धकवृष्णीनां सर्वे पार्थमनुव्रताः ।
ब्राह्मणाः क्षत्रिया वैश्याश् शूद्राश्चैव महाधनाः ॥ ३८

दश षट् च सहस्राणि वासुदेवावरोधनम् ।
पुरस्कृत्य ययुर्वज्रं [2]पौत्रं कृष्णस्य धीमतः ॥ ३९

बहूनि च सहस्राणि प्रयुतान्यर्बुदानि च ।
भोजवृष्ण्यन्धकस्त्रीणां हतनाथानि निर्ययुः ॥ ४०

तत् सागरसमप्रख्यं वृष्णिचक्रं महर्द्धिमत् ।
उवाह रथिनां श्रेष्ठः पार्थः परपुरञ्जयः ॥ ४१

निर्याते तु जने तस्मिन् सागरो मकरालयः ।
द्वारकां रत्नसम्पूर्णां जलेनाप्लावयत् तदा ॥ ४२

यद्यद्धि पुरुषव्याघ्रो भूमेस्तस्या व्यमुञ्चत ।
तत्तत् सम्प्लावयामास सलिलेन स सागरः ॥[3] ४३

---

1. घ—अर्धपञ्चकं नास्ति 2. क-ख-घ—गोत्रं ।

3. क—वासुदेवस्य भवनं न प्लावयति सागरः ।
सहस्रपादमद्यापि दृश्यते तन्महार्णवे ॥ [अधिकः पाठः]

तदद्भुतमभिप्रेक्ष्य द्वारकानिलयो जनः ।
तूर्णात् तूर्णतरं प्रायाद् अहो दैवमिति ब्रुवन् ॥ ४४

तान् वनेषु च रम्येषु पर्वतेषु नदीषु च ।
निवसन्नानयामास वृष्णिवीरान् धनञ्जयः ॥ ४५

स पञ्चनदमासाद्य श्रीमानतिसमृद्धिमत् ।
देशे गोपशुधान्याढ्ये निवेशमकरोत् प्रभुः ॥ ४६

ततः कामस्समभवद् दस्यूनां निहतेश्वराः ।
दृष्ट्वा स्त्रियो नीयमानाः पार्थेनैकेन भारत ॥ ४७

ततस्ते पापकर्माणो लोभोपहतचेतसः ।
आभीरा मन्त्रयामासुस् समेत्याशुभदर्शनाः ॥ ४८

अयमेकोऽर्जुनो योद्धा वृद्धबालं हतेश्वरम् ।
नयत्यस्मानतिक्रम्य योधाश्चेमे हतौजसः ॥ ४९

[1]ततो यष्टिप्रहरणा दस्यवस्ते सहस्रशः ।
अन्वधावन्त वृष्णीनां जनं तं लोप्त्रहारिणः ॥ ५०

महता सिंहनादेन प्राद्रवन्तः पृथक् पृथक् ।
अभिपेतुर्धनार्थे ते कालपर्यायचोदिताः ॥ ५१

ततो निवृत्य कौन्तेयस् सहसा सपदानुगः ।

---

1. क—भीष्मद्रोणमुखान् हत्वा निवातकवचानपि ।
जित्वा शक्रं च रुद्रं च सोऽस्मानथावमन्यते ॥ [ अधिकः पाठः ]

उवाच तान् महाबाहुर् अर्जुनः प्रहसन्निव ॥ ५२

अर्जुनः—

निवर्तध्वमधर्मज्ञा यदि स्थ न मुमूर्षवः ।
नेदानीं शरनिर्दग्धाश् शेष्यध्वं निहता मया ॥ ५३

वैशम्पायनः—

तथोक्तास्तेन वीरेण कदर्थीकृत्य तद्वचः ।
अभिपेतुर्जनं मूढा वार्यमाणाः पुनः पुनः ॥ ५४

ततोऽर्जुनो धनुर्दिव्यं गाण्डीवमजरं युधि ।
आरोपयितुमारेभे यत्नादिव कथञ्चन ॥ ५५

चकार सज्यं कृच्छ्रेण सम्भ्रमे तुमुले सति ।
[1]चिन्तयामास चास्त्राणि न च सस्मार तान्यपि ॥ ५६

वैकृतं तन्महद्दृष्ट्वा भुजवीर्ये तथा [2]युधि ।
दिव्यानां च तथाऽस्त्राणां विनाशाद्व्रीडितोऽभवत् ॥ ५७

वृष्णियोधाश्च ते सर्वे गजाश्वरथयोधिनः ।
न शेकुरावर्तयितुं ह्रियमाणं स्वकं धनम् ॥ ५८

कलत्रस्य बहुत्वात्तु सम्पतत्‌स ततस्ततः ।
प्रयत्नमकरोत् पार्थो जनस्य परिरक्षणे ॥ ५९

---

1. क—त्वकृभिदश्वशराश्वक्षुरस्ता गाण्डीवधन्वना । [ अधिकः पाठः ]
2. क-ख-घ—युधे ।

मिषतां सर्वयोधानां ततस्ताः प्रमदोत्तमाः ।
समन्ततो ह्यकर्षन्त कामाच्चान्याः प्रदुद्रुवुः ॥ ६०

ततो गाण्डीवनिर्मुक्तैश् शरैः पार्थो धनञ्जयः ।
जघान दस्यून् सोद्वेगो घृष्णिभृत्यैस्समाहितः ॥ ६१

क्षणेन तस्य ते राजन् क्षयं जग्मुः पतत्रिणः ।
अक्षयाश्च पुरा भूत्वा क्षीणाः क्षतजभोजनाः ॥ ६२

स शरक्षयमासाद्य दुःखशोकसमाहतः ।
धनुष्कोट्या तदा दस्यून् अवधीद्भरतर्षभ ॥ ६३

धनञ्जयस्तदा दैवं निश्चित्य मनसा प्रभुः ।
दुःखशोकसमाविष्टो निश्श्वासपरमोऽभवत् ॥ ६४

अस्त्राणां तु विनाशेन भुजवीर्यस्य च क्षयात् ।
धनुषश्चाविधेयत्वाच् छराणां प्रक्षयेण च ॥ ६५

बभूव विमना राजन् दैवमेव विचिन्तयन् ॥ ६५॥

[1]ततस्सशेषमादाय कलत्रस्य महामतिः ।
हतभूयिष्ठरत्नस्य कुरुक्षेत्रमवातरत् ॥ ६६॥

---

1. क-च—न्यवर्तत ततो राजन् नेदमस्तीति चाब्रवीत् ॥
[ अधिकः पाठः ]

[1]युधिष्ठिरस्यानुमते तत्र तत्र कुमारकान् ।
न्यवेशयत कौरव्यस् तत्र तत्र समन्ततः ॥ ६७॥

हार्दिक्यतनयं पार्थो नगरे मृत्तिकावते ।
वृष्णेऽत्र खाण्डवारण्ये राष्ट्रे तं संन्येवशयत् ॥ ६८॥
भोजराजकलत्रं च भृत्यांश्चैषां नरोत्तमः ॥ ६९

तथा वृद्धांश्च बालांश्च स्त्रियश्चादाय पाण्डवः ।
विधेर्विहीनान् स तदा शक्रप्रस्थे न्यवेशयत् ॥ ७०

युधां वरं सरस्वत्यां पुत्रं सात्यकिनः प्रियम् ।
न्यवेशयत धर्मात्मा वृद्धबालपुरस्कृतम् ॥ ७१

इन्द्रप्रस्थे ददौ राज्यं वज्रस्य परवीरहा ।
वज्रेणाक्रूरदारास्तु वार्यमाणाः प्रवव्रजुः ॥ ७२

[2]रुक्मिणी त्वथ गान्धारी [3]शैब्याख्या नाग्नजित्यपि ।
देवी जाम्बवती चैव विविशुर्जातवेदसम् ॥ ७३

सत्यभामा तथा चान्या देव्यः कृष्णस्य सम्मताः ।
वनं प्रविविशुस्सर्वास् तपसे कृतनिश्चयाः ॥ ७४

द्वारकावासिनो ये च पुरुषाः पार्थमन्वयुः ।
यथार्हं संविभज्यैतान् वज्राय प्रददौ जयः ॥ ७५

---

1. अ—एवं कलत्रमादाय वृष्णीनां हतशेषितम् । [ अधिकः पाठः ]
2. क—श्लोकद्वयं न दृश्यते ।
3. ख-घ—वैशाखी हेमवत्यपि ।

स तत् कृत्वा प्राप्तकालं विनिश्चित्य शुचाऽन्वितः ।
कृष्णद्वैपायनं व्यासं ददर्शासीनमाश्रमे ॥[1] ७६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
मौसलपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

॥ ७६ ॥ मौसलपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[ अस्मिन्नध्याये ७६ श्लोकाः ]

---

## ॥ अष्टमोऽध्यायः ॥

अर्जुनेन व्यासाश्रमे तद्दर्शनम् ॥ १ ॥ तस्मिन् द्वारकावृत्तान्तनिवेदनम् ॥ २ ॥ व्यासेनार्जुनं प्रति युधिष्ठिरादीनामपि स्वर्गगमनसूचनम् ॥ ३ ॥ ततोऽर्जुनेन हास्तिनपुरमेत्य युधिष्ठिरे द्वारकावृत्तान्तादिनिवेदनम् ॥ ४ ॥

---

वैशम्पायनः—

प्रविश्य त्वर्जुनो राजन्नाश्रमं सत्यवादिनः ।
ददर्शासीनमेकान्ते मुनिं सत्यवतीसुतम् ॥ १

स तमासाद्य धर्मज्ञम् उपतस्थे महाव्रतम् ।
अर्जुनोऽस्मीति नाम्ना वै निवेद्याभ्यवदत् तदा ॥ २

---

1. क—तदुपाश्रित्य यद्वृत्तं परीक्षिदभिमन्युजः ।
दस्यून् सर्वान् जघानाशु स्त्रियो मुक्त्वा प्रवव्रजुः ।
तस्य प्रीता बभूवुस्ते पाण्डवास्ससुहृद्गणाः ।
अमन्यन्त तदा वीरं स राज्यं ......... ॥ [ अधिकः पाठः ]

स्वागतं तेऽस्त्विति प्राह स मुनिस्सत्यसङ्गरः ।
आस्यतामिति चोवाच प्रसन्नात्मा महामुनिः ॥ ३

तमप्रतीतमनसं निश्श्वसन्तं पुनः पुनः ।
निर्विण्णमनसं दृष्ट्वा पार्थं व्यासोऽब्रवीद्वचः ॥ ४

व्यासः—

नखकेशदशाकुम्भवारिणा किं समुक्षितः ।
आभीरजोऽभियातस्ते ब्राह्मणो निहतस्त्वया ॥ ५

पराजितो वा युद्धेऽपि गतश्रीरिव लक्ष्यसे ।
न वा प्रत्यभिजानामि किमिदं भरतर्षभ ॥ ६
श्रोतव्यं चेन्मया पार्थ शंस मे कुरुपुङ्गव ॥ ६॥

अर्जुनः—

यस्स मेघवपुश्श्रीमान् बृहत्पङ्कजलोचनः ।
स कृष्णस्सह रामेण त्यक्त्वा देहं दिवं गतः ॥ ७॥

तदनुस्मृत्य सम्मोहं सदा शोकं महामते ।
प्रयामि सर्वदा मह्यं मुमूर्षा चोपजायते ॥ ८॥

तद्वाक्यस्पर्शनालोकसुखं त्वमृतसन्निभम् ।
संस्मृत्य देवदेवस्य प्रमुह्याम्यृतमात्मनः ॥ ९॥

मौसले वृष्णिवीराणां विनाशो ब्रह्मशापजः ।
[1]बभूव वीरान्तकरः प्रभासे रोमहर्षणः ॥ १०॥

1. अ—अर्धाष्टकं नास्ति

एते शूरा महात्मानस् सिंहदर्पा महाबलाः ।
भोजवृष्ण्यन्धका ब्रह्मन्नन्योन्यं तैर्हतं युधि ॥ ११॥

गदापरिघशक्तीनां सहाः परिघबाहवः ।
त एरकाभिर्निहताः पश्य कालस्य पर्ययम् ॥ १२॥

हतं पञ्चशतं तेषां सहस्रं बाहुशालिनाम् ।
निधनं समरे प्राप्तास् समासाद्य परस्परम् ॥ १३॥

पुनः पुनर्न मृष्यामि विनाशममितौजसाम् ।
चिन्तयानो यदूनां च कृष्णस्य च महात्मनः ॥ १४॥

शोषणं सागरस्येव मन्दरस्येव चालनम् ।
नभसः पतनं चैव शैत्यमग्नेस्तथैव च ॥ १५॥

अश्रद्धेयमहं मन्ये विनाशं सर्वसात्वताम् ।
न चेह स्थातुमिच्छामि लोके कृष्णविनाकृतः ॥ १६॥

अतः कष्टतरं चान्यच् छृणु मे त्वं महामुने ।
मनो मे दीर्यते येन चिन्तयानस्य वै मुहुः ॥ १७॥

प्रेक्षमाणस्य वै ब्रह्मन् वृष्णिदारास्सहस्रशः ।
आभीरैरभिहत्याजौ हृताः पञ्चनदालयैः ॥ १८॥

तवाहं धनुरादाय न शक्नोमि प्रपूरणे ।
यथा पुरा च मे वीर्यं भुजयोर्न तथाऽभवत् ॥ १९॥

अस्त्राणि मे प्रनष्टानि विविधानि महामुने ।

शराश्च क्षयमापन्नाः क्षणेनैव पुनर्मम ॥　　२०॥
पुरुषश्चाप्रमेयात्मा शङ्खचक्रगदाधरः ।
चतुर्भुजः पीतवासाश् श्यामः पद्मायतेक्षणः ॥　　२१॥
यस्स याति पुरस्तान्मे रथस्य सुमहाद्युतिः ।
प्रदहन् रिपुसैन्यानि न पश्याम्यहमद्य तम् ॥　　२२॥
येन पूर्वं प्रदग्धानि शत्रुसैन्यानि तेजसा ।
शरैर्गाण्डीवनिर्मुक्तैर् अहं पश्चाद्व्यशातयम् ॥　　२३॥
तमपश्यन् विरक्तोऽस्मि मुह्यामीव च सत्तम ।
परिनिर्विण्णचेताश्च शान्तिं नोपलभे मुने ॥　　२४॥
[1]देवकीनन्दनं देवं वासुदेवमजं प्रभुम् ।
विना जनार्दनं वीरं नाहं जीवितुमुत्सहे ॥　　२५॥
श्रुत्वैव हि गतं कृष्णं ममापि मुमुहुर्दिशः ।
प्रनष्टज्ञानवीर्यस्य शून्यस्य परिधावतः ॥　　२६॥
उपदेष्टुं मम श्रेयो भवानर्हति सत्तम ॥　　२७

व्यासः—

[2]देवांशा देवदेवेन सम्भूतास्ते गतास्सह ।
धर्मव्यवस्थारक्षार्थं देवेन समुपेक्षिताः ॥　　२८
ब्रह्मशापविनिर्दग्धा वृष्ण्यन्धकमहारथाः ।

---

1. क—इदमर्धं नास्ति　　2. क—अर्धद्वयं नास्ति

याता जनार्दनेनैव न ताञ्शोचितुमर्हसि ॥ २९

भवितव्यं तथा तद्धि दिष्टमेतन्महात्मना ।
उपेक्षितं च कृष्णेन शक्तेनापि व्यपोहितुम् ॥ ३०

त्रैलोक्यमपि कृष्णो हि कृत्स्नं स्थावरजङ्गमम् ।
प्रभुरेतान् वृथा कर्तुं किमु शापं मनीषिणाम् ॥ ३१

स्त्रियश्च ताः पुरा शप्ताः प्रहासकुपितेन वै ।
अष्टावक्रेण मुनिना तदर्थं त्वद्बलक्षयः ॥ ३२

रथस्य पुरतो याति यस्स चक्रगदाधरः ।
तव स्नेहात् पुराणर्षिर् वासुदेवश्चतुर्भुजः ॥ ३३

कृत्वा भारावतरणं पृथिव्याः पृथुलोचनः ।
मोहयित्वा जगत् सर्वं गतस्स्वस्थानमुत्तमम् ॥ ३४

त्वया त्विह महत् कर्म देवानां पुरुषर्षभ ।
कृतं भीमसहायेन यमाभ्यां च महाभुज ॥ ३५

कृतकृत्यांश्च वो मन्ये संसिद्धान् कुरुपुङ्गव ।
गमनं प्राप्तकालं वस् तद्धि श्रेयो मतं मम ॥ ३६

बलं बुद्धिश्च तेजश्च प्रतिपत्तिश्च भारत ।
भवन्ति भावकालेषु विपद्यन्ति विपर्यये ॥ ३७

कालमूलमिदं विद्धि सर्वं भरतसत्तम ।
काल एव समादत्ते पुनरेतद्यदृच्छया ॥ ३८

स एव बलवान् भूत्वा पुनर्भवति दुर्बलः ।
स एवेशश्च भूत्वा हि परैराज्ञाप्यते पुनः ॥ ३९

कृतकृत्यानि चास्त्राणि गतान्यद्य यथागतम् ।
पुनरेष्यन्ति ते हस्तं यदा कालो भविष्यति ॥ ४०

कालो गन्तुं गतिं मुख्यां भवतामपि भारत ।
एतच्छ्रेयो हि वो मन्ये परमं भवतां ध्रुवम् ॥ ४१

वैशम्पायनः—

एवं वचनमाज्ञाय व्यासस्यामिततेजसः ।
अनुज्ञातो ययौ पार्थो नगरं नागसाह्वयम् ॥ ४२

प्रविश्य च पुरीं वीरस् समासाद्य युधिष्ठिरम् ।
आचष्ट तद्यथावृत्तं वृष्ण्यन्धकजनं प्रति ॥ ४३

**इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां मौसलपर्वणि अष्टमोऽध्यायः ॥ ८ ॥**

**॥ १६ ॥ मौसलपर्वणि अष्टमोऽध्यायः ॥ ८ ॥**

**[ अस्मिन्नध्याये ४३ श्लोकाः ]**

**॥ मौसलपर्व समाप्तम् ॥** **॥ मौसलपर्व च समाप्तम् ॥**

---

॥ अस्मिन् मौसलपर्वणि श्लोकाः ३०० ॥

---

अतःपरं महाप्रस्थानिकं पर्व भविष्यति तस्यायमाद्यः श्लोकः ॥

---

जनमेजयः—

एवं वृष्ण्यन्धककुले श्रुत्वा मौसलमाहवम् ।
पाण्डवाः किमकुर्वन्त तथा कृष्णे दिवं गते ॥ १

---

॥ श्रीः ॥

# ॥ महाभारतम् ॥

## ॥ महाप्रस्थानिकपर्व ॥

[ महाप्रस्थानपर्व ]

### ॥ प्रथमोऽध्यायः ॥

भ्रातृभिर्द्रौपद्या च सह स्वर्गं जिगमिषुणा युधिष्ठिरेण युयुत्सौ राज्यभारनिवेशनपूर्वकं परीक्षितो राज्येऽभिषेचनम् ॥ १ ॥ तथा कृच्छ्रात् पौरानुमतिसम्पादनेन वल्कलधारणादिपूर्वकं शुना सह गृहात् प्रस्थानम् ॥ २ ॥ अर्जुनेन मध्येमार्गमग्निवचसा सनिषङ्गस्य गाण्डीवस्य वरुणोद्देशेन समुद्रे प्रक्षेपणम् ॥ ३ ॥

जनमेजयः—

एवं वृष्ण्यन्धककुले श्रुत्वा मौसलमाहवम् ।
पाण्डवाः किमकुर्वन्त तथा कृष्णे दिवं गते ॥ १

वैशम्पायनः—

श्रुत्वैवं कौरवो राजा वृष्णीनां कदनं महत् ।
प्रस्थाने मतिमास्थाय वाक्यमर्जुनमब्रवीत् ॥ २

युधिष्ठिरः—

कालः पचति भूतानि सर्वाण्येव महामते ।
कर्मन्यासमहं मन्ये त्वमपि द्रष्टुमर्हसि ॥ ३

वैशम्पायनः—

एवमुक्तस्स कौन्तेयः कालः काल इति ब्रुवन् ।
अन्वपद्यत तद्वाक्यं भ्रातुर्ज्येष्ठस्य वीर्यवान् ॥ ४

अर्जुनस्य मतं ज्ञात्वा भीमसेनो यमौ तथा ।
अन्वपद्यन्त तद्वाक्यं यदुक्तं सव्यसाचिना ॥ ५

ततो युयुत्सुमानाय्य प्रव्रजन् धर्मकाम्यया ।
अभ्यषिञ्चत् स्वराज्ये तु तं राजानं परीक्षितम् ॥ ६

राज्यं परिददौ सर्वं वैश्यापुत्रे युधिष्ठिरः ।
दुःखार्तो चाब्रवीद्राजा सुभद्रामपराजितः ॥ ७

युधिष्ठिरः—

एष पुत्रस्य ते पुत्रः कुरुराजो भविष्यति ।
यदूनां परिशेषस्य वज्रो राजा कृतश्च ह ॥ ८

अभिषिच्य हास्तिनपुरे शक्रप्रस्थे च यादवः ।
वज्रो राजा त्वया रक्ष्यो मा चाधर्मे मनः कृथाः ॥ ९

वैशम्पायनः—

इत्युक्त्वा धर्मराजस्तां वासुदेवस्य धीमतः ।
मातुलस्य च वृद्धस्य रामादीनां तथैव च ॥ १०

भ्रातृभिस्सह धर्मात्मा कृत्वोदकमतन्द्रितः ।
श्राद्धान्युद्दिश्य सर्वेषां चकार विधिवत् तदा ॥ ११

[1]द्वैपायनं नारदं च मार्कण्डेयं तपोधनम् ।
भारद्वाजं याज्ञवल्क्यं हरिमुद्दिश्य यत्नवान् ॥ १२

अभोजयत् स्वादु भोज्यं कीर्तयित्वा च शार्ङ्गिणम् ॥ १२॥

ददौ रत्नानि वासांसि ग्रामानश्वान् रथानपि ।
कन्याश्च द्विजमुख्येभ्यो गा वै शतसहस्रशः ॥ १३॥

कृपमर्च्य महेष्वासम् अर्थमानपुरस्कृतम् ।
[2]आहूय भरतश्रेष्ठ सन्निवेश्यासने तदा ॥ १४॥

शिष्यं परीक्षितं तस्मै ददौ सम्पूज्य सत्तमः ॥ १५

ततस्तु प्रकृतीस्सर्वास् समानीय युधिष्ठिरः ।
सर्वमाचष्ट राजर्षिश् चिकीर्षितमथात्मनः ॥ १६

ते श्रुत्वैव वचस्तस्य पौरजानपदा जनाः ।
भृशमुद्विग्नमनसो नाभ्यनन्दन्त तद्वचः ॥ १७

नैवं कर्तव्यमिति ते तदोचुस्तं नराधिपम् ।
न च राजा तथाऽकार्षीत् कालपर्यायवित् तदा ॥ १८

ततोऽनुमान्य धर्मात्मा पौरजानपदं जनम् ।

1. क-ख-घ—सार्धश्लोकः नास्ति
2. घ—कोश एवेदमर्धं दृश्यते

गमनाय मतिं चक्रे कृष्णस्य गमनादपि ॥ १९

वर्तमाने विवादे तु वास्तुविक्रयणं प्रति ।
धनेच्छा युगपत् प्राप्ता क्रेतृतत्स्वामिभूभृताम् ॥ २०

प्राप्तं कलियुगं ज्ञात्वा सहदेवो हसन्निव ।
राज्ञस्तु कथयामास धर्मो नष्टस्तु सङ्करः ॥ २१

श्रुत्वा सुदुर्मना राजा पर्याप्तं जीवितं मम ।
इति स्म राजा कौरव्यो धर्मपुत्रो युधिष्ठिरः ॥ २२

उत्सृज्याभरणान्यङ्गाज् जगृहे वल्कलान्युत ॥ २२॥

भीमार्जुनौ यमौ चैव द्रौपदी च यशस्विनी ।
तथैव सर्वे जगृहुर् वल्कलानि जनाधिप ॥ २३॥

विधिवत् कारयित्वेष्टिं नैष्ठिकीं भरतर्षभाः ।
[1]समुत्सृज्याप्सु सर्वेऽग्नीन् प्रतस्थुर्भरतर्षभाः ॥ २४॥

ततः प्ररुरुदुस्सर्वास् स्त्रियो दृष्ट्वा नरर्षभान् ।
प्रस्थितान् द्रौपदीषष्ठान् पुरा द्यूतजितानिव ॥ २५॥

हर्षो बभूव भ्रातॄणां सर्वेषां गमनं प्रति ।
युधिष्ठिरमतिं ज्ञात्वा वृष्णिक्षयमवेक्ष्य च ॥ २६॥

भ्रातरः पञ्च कृष्णा च षष्ठी श्वा चैव सप्तमः ।
आत्मना सप्तमो राजा निर्ययौ नागसाह्वयात् ॥ २७॥

---

1. क-ख—इदमर्धं नास्ति

पौरैरनुगतो दूरं सर्वैरन्तःपुरैस्तथा ॥ २८

न चैनमशकत् कश्चिन्निवर्तस्वेति भाषितुम् ।
न्यवर्तन्त ततस्सर्वे जना नगरवासिनः ॥ २९

कृपप्रभृतयश्चैव युयुत्सुं पर्यवारयन् ।
[1]विवेश गङ्गां कौरव्य कौरव्यभुजगात्मजा ॥ ३०

चित्राङ्गदा ययौ चापि मणलूरुपुरं प्रति ।
शिष्टाः परीक्षितं त्वन्या मातरः पर्यवारयन् ॥ ३१

पाण्डवाश्च महात्मानो द्रौपदी च यशस्विनी ।
कृतोपवासाः कौरव्याः प्रययुः प्राङ्मुखास्तदा ॥ ३२

योगयुक्ता महात्मानस् त्यागधर्ममुपेयुषः ।
अभिजग्मुर्बहून् देशान् सरितस्सागरांस्तथा ॥ ३३

युधिष्ठिरो ययावग्रे भीमस्तु तदनन्तरम् ।
अर्जुनस्तस्य चान्वेव यमौ चैव यथाक्रमम् ॥ ३४

पृष्ठतस्तु वरारोहा श्यामा पद्मायतेक्षणा ।
द्रौपदी योषितां श्रेष्ठा ययौ भरतसत्तम ॥ ३५

श्वा चैवानुययौ चैतान् पाण्डवान् प्रस्थितान् वने ।
क्रमेण ते ययुर्वीरा लौहित्यं सलिलार्णवम् ॥ ३६

गाण्डीवं च धनुर्दिव्यं न मुमोच धनञ्जयः ।

---

1. क—अर्धद्वयं नास्ति

रत्नलोभान्महाराज तावक्षय्यौ महेषुधी ॥ ३७

अग्निं ततस्ते ददृशुर् दीप्तं शैलमिवाग्रतः ।
मार्गमावृत्य तिष्ठन्तं साक्षात् पुरुषविग्रहम् ॥ ३८

ततो देवस्स सप्तार्चिः पाण्डवानिदमब्रवीत् ॥ ३८॥

अग्निः—

भो भो पाण्डुसुता वीराः पावकं मां निबोधत ॥ ३९

युधिष्ठिर महाबाहो भीमसेन परन्तप ।
अर्जुनाश्विसुतौ वीरौ निबोधत वचो मम ॥ ४०

अहमग्निः कुरुश्रेष्ठा मया दग्धं च खाण्डवम् ।
अर्जुनस्य प्रतापेन तस्य नारायणस्य च ॥ ४१

अयं वः फल्गुनो भ्राता गाण्डीवं परमायुधम् ।
परित्यज्य वनं यातु नानेनार्थोऽस्ति कश्चन ॥ ४२

चक्रं पूर्वं हि यत् कृष्णे स्थितमासीन्महात्मनि ।
गतं चैतत् पुनर्हस्ते कालेनैष्यति तस्य च ॥ ४३

वरुणादाहृतं पूर्वं मयैतत् पार्थकारणात् ।
गाण्डीवं कार्मुकश्रेष्ठं वरुणायैव दीयताम् ॥ ४४

वैशम्पायनः—

ततस्ते भ्रातरस्सर्वे धनञ्जयमचोदयन् ।
स जले प्राक्षिपत् तत्तु तथाऽक्षय्ये महेषुधी ॥ ४५

यथा घनस्य गगने शब्दो भवति भारत ।
सलिले क्षिप्यमाणस्य गाण्डीवस्य तथा ह्यभूत् ॥ ४६

ततोऽग्निर्भरतश्रेष्ठ तत्रैवान्तरधीयत ।
ययुश्च पाण्डवा वीरास् ततस्ते दक्षिणामुखाः ॥ ४७

ततस्ते त्वन्तरेणैव तीरेण लवणाम्भसः ।
जग्मुर्भरतशार्दूल दिशं दक्षिणपश्चिमाम् ॥ ४८

ततः पुनस्समावृत्ताः पश्चिमां दिशमाश्रिताः ॥ ४८॥

ददृशुर्द्वारकां चापि सागरेण परिप्लुताम् ।
हरिपादाङ्कविन्यासतीर्थीकृतमहाभुवम् ॥ ४९॥

मनोभिः पूजयन्तश्च जनार्दनमनिन्दिताः ।
[1]विलोकयन्तः प्रासादम् उपस्थानगृहं हरेः ॥ ५०॥

उदीचीं पुनरावृत्य ययुर्भरतसत्तमाः ।
प्रदक्षिणं चिकीर्षन्तः पृथिव्या योगधर्मिणः॥ ५१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
महाप्रस्थानिकपर्वणि प्रथमोऽध्यायः ॥ १ ॥

॥ १७ ॥ महाप्रस्थानपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[ अस्मिन्नध्याये ५१॥ श्लोकाः ]

---

1. क—कोश एकस्मिन्नेवेदमर्धं दृश्यते

## ॥ द्वितीयोऽध्यायः ॥

मेरुगिरिं प्रति गच्छन्तं युधिष्ठिरं ज्यैष्ठ्यक्रमादनुगच्छत्सु द्रौपद्यादिषु योगभ्रंशात् क्रमेण भूमौ निपतत्सु भीमप्रश्नात् तं प्रति युधिष्ठिरेण तेषां पतने हेतुकथनम् ॥ १ ॥ तथा ततश्शुना केवलमनुगम्यमानेन सता पुरोगमनम् ॥ २ ॥

वैशम्पायनः—

ततस्ते नियतात्मान उदीचीं दिशमास्थिताः ।
ददृशुर्योगयुक्ताश्च हिमवन्तं महागिरिम् ॥ १

तं चाप्यतिक्रमन्तस्ते ददृशुर्वालुकार्णवम् ।
अवेक्षन्तो महामेरुं शैलं शिखरिणां वरम् ॥ २

तेषां तु गच्छतां शीघ्रं सर्वेषां योगधर्मिणाम् ।
याज्ञसेनी भ्रष्टयोगा निपपात महीतले ॥ ३

तां तु प्रपतितां दृष्ट्वा भीमसेनो महाबलः ।
उवाच धर्मराजानं याज्ञसेनीमवेक्ष्य ताम् ॥ ४

भीमः—

नाधर्मश्चरितः कश्चिद् राजपुत्र्या परन्तप ।
कारणं किं नु तद्राजन् यत् कृष्णा पतिता भुवि ॥ ५

युधिष्ठिरः—

पक्षपातो महानस्या विशेषेण धनञ्जये ।
तस्येह फलमद्यैषा भुङ्क्ते पुरुषसत्तम ॥ ६

वैशम्पायनः—

एवमुक्त्वाऽनवेक्ष्यैनां ययौ धर्मसुतो नृप ।
समाधाय मनो विद्वान् धृतात्मा पुरुषर्षभः ॥ ७

सहदेवस्ततो धीमान् निपपात महीतले ।
तं चापि पतितं दृष्ट्वा भीमो राजानमब्रवीत् ॥ ८

भीमः—

योऽयमस्मासु सर्वेषु शुश्रूषुरनहङ्कृतः ।
सोऽयं माद्रवतीपुत्रः कस्मान्निपतितो भुवि ॥ ९

युधिष्ठिरः—

आत्मना सदृशं प्राज्ञो नैषोऽमन्यत कञ्चन ।
तेन दोषेण पतितो विद्वानेष नृपात्मजः ॥ १०

वैशम्पायनः—

इत्युक्त्वा तं समुत्सृज्य सहदेवं ययौ तदा ।
भ्रातृभिस्सह कौन्तेयश् शुना चैव युधिष्ठिरः ॥ ११

कृष्णां निपतितां दृष्ट्वा सहदेवं च पाण्डवम् ।
आर्तो बन्धुप्रियश्शूरो नकुलो निपपात ह ॥ १२

तस्मिन् निपतिते वीरे नकुले चारुदर्शने ।
पुनरेव तदा भीमो राजानमिदमब्रवीत् ॥ १३

भीमः—

योऽयमक्षुद्रकर्मा ते भ्राता वचनकारकः ।

रूपेणाप्रतिमो लोके नकुलः पतितो भुवि ॥ १४

वैशम्पायनः—

इत्युक्तो भीमसेनेन प्रत्युवाच युधिष्ठिरः ।
नकुलं प्रति धर्मात्मा सर्वबुद्धिमतां वरः ॥ १५

युधिष्ठिरः—

रूपेण मत्समो नास्ति कश्चिदित्यस्य दर्शनम् ।
सुरूपश्चाहमेवैक इत्यस्य मनसि स्थितम् ॥ १६

नकुलः पतितस्तस्माद् आगच्छ त्वं वृकोदर ।
यस्य यद्विहितं भीम सोऽवश्यं तदुपाश्नुते ॥ १७

वैशम्पायनः—

तांस्तु प्रपतितान् दृष्ट्वा पाण्डवश्श्वेतवाहनः ।
पपात शोकसन्तप्तस् ततो नु परवीरहा ॥ १८

तस्मिंस्तु पुरुषव्याघ्रे पतिते शक्रतेजसि ।
म्रियमाणे दुराधर्षे भीमो राजानमब्रवीत् ॥ १९

भीमः—

अनृतं न स्मराम्यद्य स्वैरेष्वपि महात्मनः ।
अथ कस्य विकारोऽयं येनायं पतितोऽर्जुनः ॥ २०

युधिष्ठिरः—

एकाह्ना निर्दहेयं वै शत्रूनित्यर्जुनोऽब्रवीत् ।
न च तत् कृतवानेष शूरमानी ततोऽपतत् ॥ २१

अवमेने धनुर्ग्राहान् एष सर्वांस्तु फल्गुनः ।
यथा चोक्तं तथा चैव कर्तव्यं भूतिमिच्छता ॥ २२

वैशम्पायनः—

इत्युक्त्वा प्रस्थितो राजा भीमोऽथ निपपात ह ।
पतितश्चाब्रवीद्भीमो धर्मराजं युधिष्ठिरम् ॥ २३

भीमः—

भो भो राजन्नवेक्षस्व पतितं मां प्रियं तव ।
किंनिमित्तं च पतनं ब्रूहि मे यदि वेत्थ ह ॥ २४

युधिष्ठिरः—

अतिभुक्तं च भवता प्राणेन च विकत्थसे ।
अनवेक्ष्य परं पार्थ तेनासि पतितः क्षितौ ॥ २५

वैशम्पायनः—

इत्युक्त्वा तं महाबुद्धिर् जगामानवलोकयन् ।
श्वा त्वेकोऽनुययौ यस्ते बहुशः कथितो मया ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
महाप्रस्थानिकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

॥ ९७ ॥ महाप्रस्थानपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[ अस्मिन्नध्याये २६ श्लोकाः ]

---

## ॥ तृतीयोऽध्यायः ॥

शुना सह गच्छन्तं युधिष्ठिरं प्रति इन्द्रेण स्वर्गगमनाय निजरथारोहणचोदना ॥ १ ॥ युधिष्ठिरे शुना विना रथारोहणमरोचयमाने यमेन निजस्वरूपप्रकाशनेन तत्प्रशंसनम् ॥ २ ॥ ततो यमेन्द्रादिभी रथेन स्वर्गं प्रापितेन युधिष्ठिरेण तत्र भीमाद्यदर्शनादिन्द्रं प्रति भ्रात्रादीन् विना स्वस्य स्वर्गेऽप्यनभिरुचिकथनपूर्वकं तत्समीपगमनेच्छानिवेदनम् ॥ ३ ॥

---

वैशम्पायनः—

ततस्सन्नादयञ्छक्रो दिवं भूमिं च सर्वशः ।
रथेनोपययौ पार्थम् आरोहेत्यब्रवीत् तदा ॥ १

स्वभ्रातॄन् पतितान् दृष्ट्वा धर्मराजो युधिष्ठिरः ।
अब्रवीच्छोकसन्तप्तस् सहस्राक्षमिदं वचः ॥ २

युधिष्ठिरः—

भ्रातरः पतिता मेऽत्र आगच्छेयुर्मया सह ।
न विना भ्रातृभिस्स्वर्गम् इच्छेयं त्रिदशाधिप ॥ ३

सुकुमारी सुखार्हा च राजपुत्री पुरन्दर ।
साऽस्माभिस्सह गच्छेत तद्भवाननुमन्यताम् ॥ ४

इन्द्रः—

भ्रातॄन् द्रक्ष्यसि पुत्रांस्त्वम् अग्रतस्त्रिदिवं गतान् ।
कृष्णया सहितान् सर्वान् मा शुचो भरतर्षभ ॥ ५

[1]निक्षिप्य मानुषं देहं गतास्ते भरतर्षभ ।
अनेन त्वं शरीरेण स्वर्गं गन्ता न संशयः ॥ ६

युधिष्ठिरः—

अयं श्वा भूतभव्येश मद्भक्तो नित्यमेव ह ।
स गच्छेत मया सार्धम् आनृशंस्ये हि मे मतिः ॥ ७

इन्द्रः—

अमर्त्यत्वं मत्समत्वं च राजन्
श्रियः कृत्स्नां महतीं चैव कीर्तिम् ।
सम्प्राप्तोऽसि स्वर्गसुखानि च त्वं
त्यज श्वानं नात्र नृशंसमस्ति ॥ ८

युधिष्ठिरः—

अनार्यमार्येण सहस्रनेत्र
शक्यं कर्तुं दुष्करमेतदद्य ।
मम श्रिया सङ्गमो नानयाऽस्तु
यस्याः कृते भक्तमहं त्यजेयम् ॥ ९

इन्द्रः—

स्वर्गे लोके श्ववतां नास्ति धिष्ण्यम्
इष्टापूर्तं क्रोधवशा हरन्ति ।
ततो विद्वन् नरदेवाविचार्य
त्यज श्वानं नात्र विचार्यमस्ति ॥ १०

---

1. अ-क—इदमर्धं नास्ति

युधिष्ठिरः—

भक्तत्यागं प्राहुरत्यन्तपापं
तुल्यं लोके ब्रह्महत्याकृतेन ।
तस्मान्नाहं ज्ञातिकल्पं त्यजेयं
भक्तं श्वानं स्वर्गसुखार्थमिन्द्र ॥ ११

भीतं भक्तं नान्यदस्तीति चार्तं
प्राप्तं क्षीणं रक्षणे प्राणलिप्सुम्
प्राणत्यागादप्यहं नैव मोक्तुं
यतेयं वै नित्यमेतद्व्रतं मे ॥ १२

इन्द्रः—

शुना दृष्टं क्रोधवशा हरन्ति
दत्तं भुक्तमिष्टमाशीःप्रदानम् ।
तस्माच्छुनस्त्यागमिमं कुरुष्व
शुनस्त्यागादाप्स्यसि देवलोकम् ॥ १३

त्यक्त्वा भ्रातॄन् दयितां चैव कृष्णां
प्राप्तो ह्येकः कर्मणा स्वेन वीर ।
श्वानं चैनं न त्यजसे कथं नु
त्यागं कृत्वा मुह्यसे संस्थितोऽद्य ॥ १४

युधिष्ठिरः—

न विद्यते सद्भिरथापि विग्रहो
मृतैर्मर्त्यानामिति लोकेषु निष्ठा ।

न ते मया जीवयितुं हि शक्यास्
तस्मात् त्यागस्तेषु कृतास्सुरेन्द्र ॥ १५

प्रतिप्रदानं शरणागतस्य
स्त्रिया वधो ब्राह्मणस्वापहारः ।
मित्रद्रोहस्तानि चत्वारि शक्र
भक्तत्यागश्चैव समं मतं मे ॥ १६

वैशम्पायनः—

तद्धर्मराजस्य निशम्य वाक्यं
धर्मस्वरूपी भगवानुवाच ।
युधिष्ठिरं प्रीतियुक्तो नरेन्द्रं
श्लक्ष्णैर्वाक्यैस्संस्तवसम्प्रयुक्तैः ॥ १७

धर्मः—

अनुमान्योऽसि राजेन्द्र सद्वृत्तेन च मेधया ।
अनुक्रोशेन चैतेन सर्वभूतेषु भारत ॥ १८

पुरा द्वैतवने चासि मया पुत्र परीक्षितः ।
पानीयार्थमपक्रान्ता यदा ते भ्रातरो हताः ॥ १९

भीमार्जुनौ परित्यज्य यत्र त्वं भ्रातरावुभौ ।
मात्रोस्सममभीप्सन् वै नकुलं जीवमिच्छसि ॥ २०

अयं श्वा भक्त इत्येव त्यक्तो देवरथस्त्वया ।
तस्मात् स्वर्गे न तुल्यस्ते कश्चिदस्ति नराधिप ॥ २१

अतस्त्वमक्षयान् लोकान् स्वशरीरेण भारत ।
प्राप्तोऽसि वीरस्थानानि दिव्यां च गतिमुत्तमाम् ॥ २२

वैशम्पायनः—

ततो धर्मश्च शक्रश्च मरुतश्चाश्विनावपि ।
देवा देवर्षयश्चैव रथमारोप्य पाण्डवम् ॥ २३

प्रययुस्स्वैर्विमानैस्ते सिद्धाः कामविहारिणः ॥ २३॥

सर्वे विरजसः प्रीताः पुण्यवाग्बुद्धिकर्मिणः ॥ २४

स तं रथं समास्थाय राजा कुरुकुलोद्वहः ।
ऊर्ध्वमाचक्रमे शीघ्रं तेजसाऽऽवृत्य रोदसी ॥ २५

ततो देवनिकेतस्थो नारदस्सर्वलोकवित् ।
उवाचोच्चैस्तदा वाक्यं बृहद्वादी बृहत्तपाः ॥ २६

नारदः—

ये तु राजर्षयः पूर्वे ये चापि समुपस्थिताः ।
कीर्तिं प्रच्छाद्य तेषां वै कुरुराजोऽधितिष्ठति ॥ २७

लोकानावृत्य यशसा तेजसा वृत्तसम्पदा ।
स्वशरीरेण सम्प्राप्तं नान्यं शुश्रुम पाण्डवात् ॥ २८

तेजांसि यानि दृष्टानि भूमिष्ठेन त्वया विभो ।
वेश्मानि भुवि देवानां पश्यामूनि सहस्रशः ॥ २९

वैशम्पायनः—

[1]नारदस्य वचश्श्रुत्वा राजा वचनमब्रवीत् ।
भ्रातॄनपश्यन् धर्मात्मा स्वपक्षांश्चैव पार्थिवान् ॥　३०

युधिष्ठिरः—

शुभं वा यदि वा पापं भ्रातॄणां स्थानमद्य मे ।
तदेव प्राप्तुमिच्छामि लोकानन्यान् न कामये ॥　३१

वैशम्पायनः—

राज्ञस्तु वचनं श्रुत्वा देवराजः पुरन्दरः ।
आनृशंस्यसमायुक्तं प्रत्युवाच युधिष्ठिरम् ॥　३२

इन्द्रः—

स्थानेऽस्मिन् वस राजेन्द्र कर्मभिर्निर्जिते शुभे ।
किं तन्मानुष्यकं स्नेहम् अद्यापि न विमुञ्चसि ॥　३३

सिद्धिं प्राप्तोऽसि परमां यथा नान्यः पुमान् क्वचित् ।
नैतत् ते भ्रातरस्स्थानं सम्प्राप्ताः कुरुनन्दन ॥　३४

अद्यापि मानुषो भावस् स्पृशति त्वां नराधिप ।
स्वर्गोऽयं पश्य राजर्षीन् सिद्धांश्च त्रिदशालयान् ॥　३५

वैशम्पायनः—

युधिष्ठिरस्तु देवेन्द्रम् एवंवादिनमीश्वरम् ।
पुनरेवाब्रवीद्धीमान् इदं वचनमर्थवत् ॥　३६

---

1. ख-घ—इतः श्लोकद्वयं नास्ति

युधिष्ठिरः—

तैर्विना नोत्सहे वस्तुम् इह दैत्यनिबर्हण ।
गन्तुमिच्छामि तत्राहं यत्र मे भ्रातरो गताः ॥ ३७

यत्रासौ बृहती श्यामा बुद्धिसत्त्वसमन्विता ।
द्रौपदी योषितां श्रेष्ठा यत्र चैव सुता मम ॥ ३८

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां
महाप्रस्थानिकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

॥ ९७ ॥ महाप्रस्थानपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[ अस्मिन्नध्याये ३८ श्लोकाः ]

॥ महाप्रस्थानपर्व समाप्तम् ॥ ॥ महाप्रस्थानिकं पर्व च समाप्तम् ॥

---

॥ अस्मिन् महाप्रस्थानिकपर्वणि श्लोकाः ११५॥* ॥

---

अतः परं स्वर्गारोहणपर्व भविष्यति । तस्यायमाद्यः श्लोकः ॥

---

जनमेजयः—

स्वर्गं त्रिविष्टपं प्राप्य मम पूर्वपितामहाः ।
पाण्डवा धार्तराष्ट्राश्च कानि स्थानानि भेजिरे ॥ १

---

* यद्यप्यनुक्रमणिकाध्यायोक्तरीत्याऽस्मिन् पर्वणि १२० श्लोकैर्भाव्यम् तथाऽपि ११५॥ श्लोका एवोपलभ्यन्ते ॥

॥ श्रीः ॥

# ॥ महाभारतम् ॥

# ॥ स्वर्गारोहणपर्व ॥

[ स्वर्गारोहणपर्व ]

## ॥ प्रथमोऽध्यायः ॥

स्वर्गं गतेन युधिष्ठिरेण तत्र महासमुच्छ्रयेण शोभमानदुर्योधन-दर्शनम् ॥ १ ॥ तथा तदुत्कर्षासहिष्णुतया तदीयदोषोद्घाटनेन तेन सह स्वेन स्वर्गवासानभिरोचननिवेदनपूर्वकं नारदं प्रति स्वस्य भ्रात्रादिदिदृक्षा-निवेदनम् ॥ २ ॥

---

जनमेजयः—

स्वर्गं त्रिविष्टपं प्राप्य मम पूर्वपितामहाः ।
पाण्डवा धार्तराष्ट्राश्च कानि स्थानानि भेजिरे ॥ १

एतदिच्छाम्यहं श्रोतुं सर्वं विद्धीति मे मतिः ।
महर्षिणाऽभ्यनुज्ञातो व्यासेनामितकर्मणा ॥ २

वैशम्पायनः—

स्वर्गं त्रिविष्टपं प्राप्य तव पूर्वपितामहाः ।

युधिष्ठिरप्रभृतयो यदकुर्वन्त तच्छृणु ॥ ३

स्वर्गं त्रिविष्टपं प्राप्य धर्मराजो युधिष्ठिरः ।
दुर्योधनं श्रिया युक्तं ददर्शासीनमासने ॥ ४

भ्राजमानं महावीर्यं वीरलक्ष्म्याऽभिसंवृतम् ।
देवैर्भ्राजिष्णुभिस्साध्यैस् सहितं पुण्यकर्मभिः ॥ ५

ततो युधिष्ठिरो राजा दुर्योधनममर्षितः ।
सहसा सन्निवृत्तोऽभूद् दृष्ट्वा दुर्योधनश्रियम् ॥ ६

ब्रुवन्नुच्चैर्वचस्तान् वै नाहं दुर्योधनेन वै ।
[1]सहितः कामयेयं वै लुब्धेनादीर्घदर्शिना ॥ ७

यत्कृते पृथिवी सर्वा सुहृदो बान्धवास्तथा ।
हतास्माभिः प्रसह्याजौ क्लिष्टैः पूर्वं [2]महावने ॥ ८

द्रौपदी च सभामध्ये पाञ्चाली धर्मचारिणी ।
परिक्लिष्टाऽनवद्याङ्गी गुरुमध्ये तपस्विनी ॥ ९

स्वस्ति देवा न मे कामस् सुयोधनमुदीक्षितुम् ।
तत्राहं गन्तुमिच्छामि यत्र ते भ्रातरो मम ॥ १०

मैवमित्यब्रवीत् तं तु नारदः प्रहसन्निव ॥ १०॥

नारदः—

[3]स्वर्गे निवासे राजेन्द्र विरुद्धं चापि नश्यति ॥ ११

---

1. ख—अर्धत्रयं नास्ति 2. क—महाहवे। 3. ख—इदमर्धं नास्ति

युधिष्ठिर महाबाहो मैवं वोचः कथञ्चन ।
दुर्योधनं प्रति नृपं शृणु राजन् वचो मम ॥ १२

एष दुर्योधनो राजा पूज्यते त्रिदशैस्सह ।
सद्भिश्च राजप्रवरैर् य इमे स्वर्गवासिनः ॥ १३

वीरलोकगतिं प्राप्तो युद्धे हुत्वाऽऽत्मनस्तनुम् ।
यूयं सर्वे सुरसमा तद्देवानेन हिंसिताः ॥ १४

स एष क्षत्रधर्मेण स्थानमेतदवाप्तवान् ।
भये महति योऽभीतो बभूव पृथिवीपतिः ॥ १५

नैतन्मनसि कर्तव्यं पुत्र यद् द्यूतकारितम् ।
द्रौपद्यास्तु परिक्लेशं न चिन्तयितुमर्हसि ॥ १६

ये चान्येऽपि परिक्लेशा युष्माकं द्यूतकारिताः ।
सङ्ग्रामेष्वथवाऽन्यत्र न तान् संस्मर्तुमर्हसि ॥ १७

स्वर्गं गच्छ यथान्यायं राज्ञा दुर्योधनेन च ।
स्वर्गोऽयं नात्र वैराणि भवन्ति मनुजाधिप ॥ १८

वैशम्पायनः—

नारदेनैवमुक्तस्तु कुरुराजो युधिष्ठिरः ।
भ्रातॄन् पप्रच्छ मेधावी वाक्यं चेदमुवाच ह ॥ १९

युधिष्ठिरः—

यदि दुर्योधनस्यैते वीरलोकास्सनातनाः ।
अधर्मज्ञस्य पापस्य पृथिवीसुहृदां द्रुहः ॥ २०

यत्कृते पृथिवी नष्टा सहया सरथद्विपा ।
वयं च मन्युभिर्दग्धा वैरं प्रतिजिहीर्षवः ॥ २१

ये ते वीरा महात्मानो भ्रातरो मे महाव्रताः ।
सत्यप्रतिज्ञा लोकस्य शूरा वै सत्यवादिनः ॥ २२

तेषामिदानीं ये लोका द्रष्टुमिच्छामि तानहम् ॥ २२॥

कर्णं चैव महात्मानं कौन्तेयं सत्यसङ्गरम् ।
धृष्टद्युम्नं सात्यकिं च धृष्टद्युम्नस्य चात्मजान् ॥ २३॥

ये च शस्त्रैर्वधं प्राप्ताः क्षत्रधर्मेण पार्थिवाः ।
क्व नु ते पार्थिवान् ब्रह्मन्नेतान् पश्यामि नारद ॥ २४॥

[1]विराटं द्रुपदं चैव धृष्टकेतुमुखांश्च तान् ।
शिखण्डिनं च पाञ्चाल्यं द्रौपदेयांश्च सर्वशः ॥ २५॥

अभिमन्युं च दुर्धर्षं द्रष्टुमिच्छामि नारद ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्वर्गारोहणपर्वणि प्रथमोऽध्यायः ॥ १ ॥

॥ ९८ ॥ स्वर्गारोहणपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[ अस्मिन्नध्याये २६ श्लोकाः ]

---

1. अ-क-ख—ब्रह्मन् न तान् प्रपश्यामि स्वर्गलोकेऽत्र कर्हिचित् ॥
[ अधिकः पाठः ]

## ॥ द्वितीयोऽध्यायः ॥

स्वर्गे कर्णादिबन्धुजनानपश्यता युधिष्ठिरेण देवान् प्रति यत्र कुत्रापि बन्धुजनैस्सहैव स्वस्य निवासेच्छानिवेदनम् ॥ १ ॥ देवैर्युधिष्ठिराय बन्धुजनप्रदर्शनं चोदितेन देवदूतेन तस्य नरकप्रदेशप्रापणम् ॥ २ ॥ दुर्दर्शनरकदर्शनासहिष्णुतया सह दूतेन प्रतिनिवर्तमानेन युधिष्ठिरेण श्रुतपूर्वकण्ठध्वनिश्रवणम् ॥ ३ ॥ ततो युधिष्ठिरपृष्टैस्तैस्तं प्रति स्वेषां कर्णभीमादित्वकथनम् ॥ ४ ॥ ततस्तेन दूतं प्रति इन्द्रे स्वस्य तत्समीपं प्रत्यनागमनचोदना ॥ ५ ॥ दूतेनेन्द्रे युधिष्ठिरचिकीर्षितनिवेदनम् ॥ ६ ॥

युधिष्ठिरः—

नेह पश्यामि विबुधा राधेयममितौजसम् ।
भ्रातरौ च महात्मानौ युधामन्यूत्तमौजसौ ॥ १

जुहुवुर्ये शरीराणि रणवह्नौ महारथाः ।
राजानो राजपुत्राश्च ये मदर्थे हता रणे ॥ २

क्व ते महारथास्सर्वे शार्दूलसमविक्रमाः ।
तैरप्ययं जितो लोकः कच्चित् पुरुषसत्तमैः ॥ ३

यदि लोकानिमान् प्राप्तास् ते च सर्वे महारथाः ।
[1]स्थितं वित्त हि मां देवास् सहितं तैर्महात्मभिः ॥ ४

कच्चिन्न तैरवाप्तोऽयं नृपैर्लोकोऽक्षयश्शुभः ।
न तैरहं विना वत्स्ये बन्धुभिर्भ्रातृभिस्तथा ॥ ५

मातुर्मे वचनं श्रुत्वा तदा सलिलकर्मणि ।

1. ब—इदमर्धं नास्ति

कर्णस्य क्रियतां तोयम् इति तप्यामि तेन वै ॥ ६
इदं च परितप्यामि पुनः पुनरहं सुराः ॥ ६॥
यन्मातुस्सदृशौ पादौ तस्याहममितौजसः ।
दृष्ट्वैव तं नानुगतः कर्णं परबलार्दनम् ॥ ७॥
न ह्यस्मान् कर्णसहितान् जयेच्छक्रोऽपि संयुगे ॥ ८
तमहं यत्र तत्रस्थं द्रष्टुमिच्छामि सूर्यजम् ।
अविज्ञानान्मया योऽसौ घातितस्सव्यसाचिना ॥ ९
भीमं च भीमविक्रान्तं प्राणेभ्योऽपि प्रियं मम ।
अर्जुनं चेन्द्रसङ्काशं यमौ चापि महाबलौ ॥ १०
द्रष्टुमिच्छामि तां चापि पाञ्चालीं धर्मचारिणीम् । १०॥
न चेह स्थातुमिच्छामि सत्यमेतद् ब्रवीमि वः ॥ ११
किं मे भ्रातृविहीनस्य स्वर्गेण सुरसत्तमाः ।
यत्र ते स मतस्स्वर्गो नायं स्वर्गो मतो मम ॥ १२

देवाः—

यदि तत्र तव श्रद्धा गम्यतां तत्र मा चिरम् ।
प्रिये हि तव वर्तामो देवराजस्य शासनात् ॥ १३

वैशम्पायनः—

इत्युक्त्वा ते ततो देवा देवदूतमथाब्रुवन् ।
युधिष्ठिरस्य सुहृदो दर्शयेति परन्तप ॥ १४
ततः कुन्तीसुतो राजा देवदूतश्च जग्मतुः ।
सहितौ राजशार्दूल यत्र ते पुरुषर्षभाः ॥ १५

अग्रतो देवदूतश्च ययौ राजा च पृष्ठतः ।
पन्थानमशुभं दुर्गं सेवितं पापकर्मभिः ॥ १६

तमसा संवृतं घोरं केशशैवलशाद्वलम् ।
युक्तं पापकृतां गन्धैर् मांसशोणितकर्दमम् ॥ १७

दंशोत्थानं सझल्लीकं मक्षिकामशकान्वितम् ।
इतश्चेतश्च कुणपैस् समन्तात् परिवारितम् ॥ १८

अस्थिकेशसमाकीर्णं कृमिकीटसमाकुलम् ।
ज्वलनेन प्रदीप्तेन समन्तात् परिवारितम् ॥ १९

अयोमुखैश्च काकोलैः गृध्रैश्चैव समन्वितम् ।
सूचीमुखैस्तथा प्रेतैर् विन्ध्यशैलोपमैर्वृतम् ॥ २०

मेदोरुधिरसम्पृक्तैर् भिन्नजानूरुबाहुभिः ।
निकृत्तोदरपादैश्च तत्र तत्र प्रवेशितैः ॥ २१

स तं कुणपदुर्गन्धम् अशिवं रोमहर्षणम् ।
जगाम राजा धर्मात्मा मध्येन बहु चिन्तयन् ॥ २२

सुदुर्गमां वैतरणीं पापपूर्णां ददर्श ह ।
असिपत्रवनं चैव निशितं क्षुरसंवृतम् ॥ २३

करम्भवालुकास्तप्ताः पृथुकाश्च शिलाः पृथक् ।
लोहकुम्भीश्च तैलस्य क्वाथ्यमानास्समन्ततः ॥ २४

कूटशाल्मलिनं चैव दुस्स्पर्शं तीक्ष्णकण्टकम् ।
ददर्श चान्याः कौन्तेयो यातनाः पापकर्मिणाम् ॥ २५

स तं दुर्गन्धमालक्ष्य पुरुषं तमुवाच ह ॥ २५॥

युधिष्ठिरः—

कियदध्वानमस्माभिर् गन्तव्यमिदमीदृशम् ।
क्व च ते भ्रातरो मह्यं तन्ममाख्यातुमर्हसि ॥ २६॥
देशोऽयं कश्च देवानाम् एतदिच्छामि वेदितुम् ॥ २७

वैशम्पायनः—

स तं निवधृते श्रुत्वा धर्मराजस्य भाषितम् ।
[1]देवदूतोऽब्रवीचैनम् एतावद्गमनं तव ॥ २८

निवर्तितव्यो हि मया तथाऽसम्युक्तो दिवौकसैः ।
यदिश्रान्तोऽसि राजेन्द्र त्वमथागन्तुमर्हसि ॥ २९

युधि ष्ठिरस्तु निर्विण्णस् तेन गन्धेन मूर्छितः ।
निवर्तने धृतमनाः पर्यवर्तत भारत ॥ ३०

स सन्निवृत्तो धर्मात्मा दुःखशोकसमन्वितः ।
शुश्राव तत्र वदतां दीना वाचस्समन्ततः ॥ ३१

वाचः—

भो भो धर्मज राजर्षे पुण्याभिजन पाण्डव ।
अनुग्रहार्थमस्माकं तिष्ठ तावन्मुहूर्तकम् ॥ ३२
आयाति त्वयि दुर्धर्षे वाति पुण्यस्समीरणः ।
तव गन्धानुगस्तात तेनास्मान् सुखमागतम् ॥ ३३
ते वयं पार्थ दीर्घस्य कालस्य पुरुषर्षभ ।

---

1. ख—अर्धचतुष्टयं नास्ति

सुखमासादयिष्यामस् त्वां दृष्ट्वा राजसत्तम ॥ ३४
सन्तिष्ठस्व महाबाहो मुहूर्तमिह भारत ।
त्वयि तिष्ठति कौरव्य यातनाऽस्मान् न बाधते ॥ ३५

वैशम्पायनः—

[1]एवं बहुविधा वाचः कृपणा वेदनावताम् ।
तस्मिन् देशे स शुश्राव समन्ताद्वदतां नृप ॥ ३६

तेषां तु वचनं श्रुत्वा दयावान् दीनभाषितम् ।
अहो कृच्छ्रमिति प्राह तस्थौ च स युधिष्ठिरः ॥ ३७

स ता गिरः पुरस्ताद्वै श्रुतपूर्वाः पुनः पुनः ।
ग्लानानां दुःखितानां च नाभ्यजानत पाण्डवः ॥ ३८

अबुध्यमानस्ता वाचो धर्मराजो युधिष्ठिरः ।
उवाच के भवन्तो वै किमर्थं चेह तिष्ठथ ॥ ३९

इत्युक्तास्ते ततस्सर्वे समन्तादपि भाषिरे ॥ ३९॥
कर्णोऽहं भीमसेनोऽहम् अर्जुनोऽहमिति प्रभो ।
नकुलस्सहदेवोऽहं धृष्टद्युम्नोऽहमित्युत ॥ ४०॥
द्रौपदी द्रौपदेयाश्च इत्येवं तत्र चुक्रुशुः ॥ ४१
ता वाचस्स तदा श्रुत्वा तथैव सदृशीर्नृप ।
रोषाद् विममृशे राजा किं न्विदं दैवकारितम् ॥ ४२
किं नु तत् कलुषं कर्म कृतमेभिर्महात्मभिः ॥ ४२॥

---

1. क—शकुनिप्रमुखानां तु तथा शृण्वन् वचो नृपः। [ अधिकः पाठः ]

कर्णश्च द्रौपदेयाश्च पाञ्चाली च सुमध्यमा ।
त इमे पापगन्धेऽस्मिन् देशे सन्नास्सुदारुणे ॥ ४३॥
न हि जानामि सर्वेषां दुष्कृतं पुण्यकर्मणाम् ॥ ४४

किं कृत्वा धृतराष्ट्रस्य पुत्रो राजा सुयोधनः ।
तथा श्रिया धृतः पापस् सह सर्वैस्सहानुगैः ॥ ४५

महेन्द्र इव लक्ष्मीवान् आस्ते परमपूजितः ।
कस्येदानीं विकारोऽयं य इमे नरकं गताः ॥ ४६

सर्वे धर्मविदश्शूरास् सत्यागमपरायणाः ।
क्षत्रधर्मपराः प्राज्ञा यज्वानस्सत्यसङ्गराः ॥ ४७
किं नु सुप्तोऽस्मि जागर्मि खेदवानश्च चिन्तये ।
अहो चित्तविकारोऽयं स्याद्वा मे चित्तविभ्रमः ॥ ४८
एवं बहुविधं राजा विममर्श युधिष्ठिरः ।
दुःखशोकसमाविष्टश् चिन्ताव्याकुलितेन्द्रियः ॥ ४९
क्रोधमाहारयच्चैव तीव्रं धर्मसुतो नृप ।
देवांश्च गर्हयामास धर्मं चैव महामतिः ॥ ५०
स तीव्रशोकसन्तप्तो देवदूतमुवाच ह ॥ ५०॥

युधिष्ठिरः—

गम्यतां भद्र येषां त्वं दूतस्तेषामुपान्तिकम् ।
न ह्यहं तत्र यास्यामि स्थितोऽस्मीति निवेद्यताम् ॥ ५१॥
मत्संश्रयादिमे दूत सुखिनो भ्रातरो हि मे ॥ ५२

वैशम्पायनः—

इत्युक्तस्स तदा दूतः पाण्डुपुत्रेण धीमता ।
जगाम तत्र यत्रास्ते देवराजश्शतक्रतुः ॥ ५३

निवेदयामास च तद् धर्मराजचिकीर्षितम् ।
यथोक्तं धर्मपुत्रेण सर्वमेव जनाधिप ॥ ५४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां स्वर्गारोहणपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

॥ ५८ ॥ स्वर्गारोहणपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[ अस्मिन्नध्याये ५४ श्लोकाः ]

## ॥ तृतीयोऽध्यायः ॥

तत्रैवावस्थानपरीक्षया परितुष्टेषु यमेन्द्रादिषु युधिष्ठिरसमीपमुपागतेषु तद्दृष्टपूर्वनरकादीनां क्षणेनान्तर्धानम् ॥ १ ॥ धर्मेण युधिष्ठिरं प्रति सम्प्रशंसनं तद्दृष्टनरकस्य परीक्षणायेन्द्रमायासृष्टत्वकथनम् ॥ २ ॥ ततो युधिष्ठिरेण गङ्गायामवगाहनान्मानुषशरीरपरित्यागपूर्वकं दिव्यशरीरपरिग्रहणेन महर्ष्यादिभिः स्तूयमानेन सता सह देवैर्भ्रातृभिरधिष्ठितदिव्यस्थानगमनम् ॥ ३ ॥

वैशम्पायनः—

स्थिते मुहूर्तं पार्थे तु धर्मराजे युधिष्ठिरे ।
आजग्मुस्तत्र कौरव्य देवाश्शक्रपुरोगमाः ॥ १

स्वयं विग्रहवान् धर्मो राजानं सम्परीक्ष्य तम् ।
तत्राजगाम यत्रास्ते कुरुराजो युधिष्ठिरः ॥ २

तेषु भास्वरदेहेषु पुण्याभिजनकर्मसु ।
समागतेषु देवेषु व्यगमत् तत् तमो नृप ॥ ३

नादृश्यत तदा यत्र यातनाः पापकर्मणाम् ।
नदीं वैतरणीं चैव कूटशाल्मलिना सह ॥ ४

लोहकुम्भीश्शिलाश्चैव मशकान् दंशकानपि ।
विकृतानि शरीराणि यानि तत्र समन्ततः ॥ ५

ददर्श राजा कौन्तेयस् तान् सर्वान् सुमहाप्रभान् ॥ ५॥

तत्र वायुस्सुखस्पर्शः पुण्यगन्धवहश्शुचिः ।
ववौ देवसमीपस्थश् शीतलो मृदुसम्मितः ॥ ६॥

मरुद्भिस्सह शक्रेण वसवस्तु महाग्निना ।
साध्या रुद्रास्तथाऽऽदित्या ये चान्येऽपि दिवौकसः ॥ ७॥

सर्वे तत्र समाजग्मुस् सिद्धाश्च परमर्षयः ।
यत्र राजा महातेजास् स्थितो धर्मसुतोऽभवत् ॥ ८॥

ततश्शक्रस्सुरपतिश् श्रिया परमया युतः ।
युधिष्ठिरमुवाचेदं सान्त्वपूर्वं हि मानयन् ॥ ९॥

इन्द्रः—

युधिष्ठिर महाबाहो प्रीता देवगणास्त्वया ।
एह्येहि पुरुषव्याघ्र कृतमेतावता विभो ॥ १०॥

सिद्धिः प्राप्ता त्वया राजँल्लोकाश्चाप्यक्षयास्तव ।

भ्रातॄणां सुहृदां चैव गतिर्नित्या सुपूजिता ॥ ११॥

अवश्यं नरकस्तात द्रष्टव्यस्सर्वराजभिः ।
न च मन्युस्त्वया कार्यश् शृणु चेदं वचः परम् ॥ १२॥

शुभानामशुभानां च द्वौ राशी पुरुषर्षभ ॥ १३

यः पूर्वं सुकृतं भुङ्क्ते पश्चान्निरयमेति सः ।
पूर्वं निरयभाग् यश्च पश्चात् स्वर्गमुपैति सः ॥ १४

भूयिष्ठपापकर्मा यस् स पूर्वं स्वर्गमश्नुते ।
भूयिष्ठशुभकर्मा त्वम् अल्पं जिह्मं तवाच्युत ॥ १५

तेन त्वमेवं गमितो मया श्रेयोर्थिना नृप ॥ १५॥

व्याजेन हि त्वया द्रोण उपचीर्णस्सुतं प्रति ।
व्याजेनैव ततो राजन् दर्शितं नरकं तव ॥ १६॥

यथैव त्वं तथा भीमस् तथा पार्थो यमौ तथा ।
तथैव द्रौपदी कृष्णा व्याजेन नरकं गताः ॥ १७॥

आगच्छ नरशार्दूल मुक्तास्ते चापि किल्बिषात् ॥ १८

स्वपक्ष्याश्चैव ये तुभ्यं पार्थिवा निहता रणे ।
सर्वे स्वर्गमनुप्राप्तास् तान् पश्य च नरोत्तम ॥ १९

कर्णश्चैव महेष्वासस् सर्वास्त्रविदुषां वरः ।
स गतः परमां सिद्धिं यदर्थं परितप्यसे ॥ २०

तं पश्य पुरुषव्याघ्रम् आदित्यतनयं विभो ।

स्वस्थो भव महाबाहो जहि शोकं ततो नृप ॥ २१

भ्रातॄन् पुत्रांस्तथा पश्य स्वपक्ष्यांश्चैव पार्थिवान् ।
स्वं स्वं स्थानमनुप्राप्तान् व्येतु ते मानसो ज्वरः ॥ २२

अनुभूय पूर्वं तं कृच्छ्रम् इतः प्रभृति कौरव ।
विहरस्व मया सार्धं गतशोको निरामयः ॥ २३

कर्मणां तव पुण्यानां ज्ञानानां तपसां तथा ।
दानानां च महाभाग फलं प्राप्नुहि पाण्डव ॥ २४

अद्य त्वां देवगन्धर्वा दिव्याश्चाप्सरसो दिवि ।
उपसेवन्तु कल्याण्यो विरजोऽम्बरभूषणाः ॥ २५

राजसूयजिताँल्लोकान् अश्वमेधाभिवर्धितान् ।
प्राप्नुहि त्वं महाबाहो तपसश्च फलं महत् ॥ २६

उपर्युपरि राज्ञां वै तव लोका युधिष्ठिर ।
हरिश्चन्द्रसमः पार्थ येषु त्वं विचरिष्यसि ॥ २७

मान्धाता यत्र राजर्षिर् यत्र राजा भगीरथः ।
दौष्यन्तिर्भरतो यत्र तत्र त्वं विहरिष्यसि ॥ २८

एषा पुण्या देवनदी पार्थ त्रैलोक्यपावनी ।
आकाशगङ्गा राजेन्द्र तत्राप्लुत्य गमिष्यसि ॥ २९

अत्र स्नातस्य भावस्ते मानुषो विगमिष्यति ।
गतशोको निरायासो मुक्तवैरो भविष्यसि ॥ ३०

**वैशम्पायनः—**

एवं ब्रुवति देवेन्द्रे कौरवेन्द्रं युधिष्ठिरम् ।
धर्मो विग्रहवान् साक्षाद् उवाच सुतमात्मनः ॥ ३१

**धर्मः—**

भो भो राजन् महाप्राज्ञ प्रीतोऽस्मि तव पुत्रक ।
मद्भक्त्या सत्यवाक्यैश्च शमेन च दमेन च ॥ ३२

एषा तृतीया जिज्ञासा तव राजन् कृता मया ।
न शक्यसे चालयितुं स्वभावात् पार्थ हेतुभिः ॥ ३३

अत्र स्नातस्य ते भावो मानुषोऽथ गमिष्यति ।
गतशोको निरायासो मुक्तसङ्गो भविष्यति ॥ ३४

पूर्वं परीक्षितोऽसि त्वं प्रश्नाद्वैतवने मया ।
अरणीसहितस्यार्थे तच्च निस्तीर्णवानसि ॥ ३५

सोदर्येषु विनष्टेषु द्रौपद्यां चैव भारत ॥ ३५॥

श्वरूपधारिणा पुत्र पुनस्त्वं मे परीक्षितः ।
इदं तृतीयं भ्रातॄणाम् अर्थे यत् स्थातुमिच्छसि ॥ ३६॥
विशुद्धोऽसि महाभाग सुखी विगतकल्मषः ॥ ३७

न च ते भ्रातरः पञ्च नरकार्हा विशाम्पते ।
मायैषा देवराजेन महेन्द्रेण प्रयोजिता ॥ ३८

अवश्यं नरकं तात द्रष्टव्यं सर्वराजभिः ।

ततस्त्वया प्राप्तमिदं मुहूर्तं दुःखमुत्तमम् ॥ ३९

सव्यसाची भीमसेनो यमौ वा सुकुमारकौ ।
कर्णो वा सत्यवाक् छूरो नरकार्हाश्चिरं न च ॥ ४०

न कृष्णा राजपुत्री सा नरकार्हा युधिष्ठिर ।
एह्येहि भरतश्रेष्ठ पश्य चेमांस्त्रिलोकगान् ॥ ४१

वैशम्पायनः—

एवमुक्तस्स राजर्षिस् तव पूर्वपितामहः ।
जगाम सह धर्मेण सर्वैश्च त्रिदशालयैः ॥ ४२

गङ्गां देवनदीं पुण्यां पावनीमृषिसंस्कृताम् ।
अवगाह्य तु तां राजा तनुं तत्याज मानुषीम् ॥ ४३

ततो दिव्यवपुर्भूत्वा धर्मराजो युधिष्ठिरः ।
निर्वैरो गतसन्तापो जले तस्मिन् समाप्लुतः ॥ ४४

ततो ययौ वृतो देवैः कुरुराजो युधिष्ठिरः ।
धर्मेण सहितो धीमान् स्तूयमानो महर्षिभिः ॥ ४५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्वर्गारोहणपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

॥ ९८ ॥ स्वर्गारोहणपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[ अस्मिन्नध्याये ४५ श्लोकाः ]

---

## ॥ चतुर्थोऽध्यायः ॥

युधिष्ठिरेण स्वर्गे निवसतां कृष्णकर्णादीनां दर्शनम् ॥ १ ॥ इन्द्रेण युधिष्ठिराय द्रौपदेयादीनां तत्तत्स्थानगतानां पृथक्पृथक्प्रदर्शनम् ॥ २ ॥

---

वैशम्पायनः—

ततो युधिष्ठिरो राजा देवैस्सर्षिमरुद्गणैः ।
पूज्यमानो ययौ तत्र यत्र ते कुरुपुङ्गवाः ॥ १

ददर्श तत्र गोविन्दं ब्राह्मेण वपुषाऽन्वितम् ।
तेनैव दृष्टपूर्वेण सादृश्येनैव पूजितम् ॥ २

दीप्यमानं स्ववपुषा दिव्यैर्वस्त्रैरुपासितम् ॥ २॥

चक्रप्रभृतिभिर्देवैर् दिव्यैः पुरुषविग्रहैः ।
उपास्यमानं विष्णुं च फल्गुनं च सुवर्चसम् ॥ ३॥

तथास्वरूपं कौन्तेयो ददर्श मधुसूदनम् ॥ ४

तावुभौ पुरुषव्याघ्रौ समुद्वीक्ष्य युधिष्ठिरम् ।
यथावत् प्रतिपेदाते पूजया देवपूजितौ ॥ ५

अपरस्मिन् वरोद्देशे कर्णं शस्त्रभृतां वरम् ।
द्वादशादित्यसहितं ददर्श कुरुनन्दनः ॥ ६

अपरस्मिंस्ततो देशे मरुद्गणवृतं प्रभुम् ।
भीमसेनमथापश्यत् तेनैव वपुषाऽन्वितम् ॥ ७

अश्विनोस्तु तथा स्थाने दीप्यमानौ स्वतेजसा ।
नकुलं सहदेवं च ददर्श कुरुनन्दनः ॥ ८

तथा ददर्श पाञ्चालीं कृष्णामुत्पलगन्धिनीम् ।
वपुषा स्वर्गमाक्रम्य तिष्ठन्तीं सूर्यवर्चसम् ॥ ९

तत्रैनां सहसा राजा स्प्रष्टुमैच्छद्युधिष्ठिरः ।
ततोऽस्य भगवानिन्द्रः कथयामास देवराट् ॥ १०

इन्द्रः—
श्रीरेषा द्रौपदीरूपा त्वदर्थं मानुषीकृता ।
लक्ष्मीर्देवी लोककान्ता पुण्यगन्धा युधिष्ठिर ॥ ११

रत्यर्थं भवतां ह्येषा निर्मिता शूलपाणिना ।
द्रुपदस्य कुले जाता भवद्भिश्चोपजीविता ॥ १२

एते पञ्च महाभागा गन्धर्वाः पावकप्रभाः ।
द्रौपद्यास्तनया राजन् युष्माकं चामितौजसः ॥ १३

पश्य गन्धर्वराजानं धृतराष्ट्रं च पार्थिवम् ।
एतदर्थं विजानीहि भ्रातरं पूर्वजं पितुः ॥ १४

अयं ते पूर्वजो भ्राता कौन्तेयः पावकद्युतिः ।
सूर्यपुत्रोऽग्रजश्श्रेष्ठो राधेय इति विश्रुतः । १५

आदित्यसहितो भाति पश्यैनं पुरुषर्षभम् ॥ १५॥

साध्यानामपि देवानां वसूनां मरुतामपि ।

गणेषु पश्य राजेन्द्र वासुदेवपदानुगान् ॥ १६॥

सात्यकिप्रमुखान् वीरान् भोजांश्चैव महारथान् ॥ १७

सोमेन सहितं पश्य सौभद्रमपराजितम् ।
अभिमन्युं महेष्वासं निशाकरसमद्युतिम् ॥ १८

एष पाण्डुर्महेष्वासः कुन्त्या माद्र्या च सङ्गतः ।
विमानेन सहाभ्येति पिता तव ममान्तिकम् ॥ १९

वसुभिस्सहितं पश्य भीष्मं शान्तनवं नृपम् ।
द्रोणं बृहस्पतेः पार्श्वे गुरुपुत्रं निशामय ॥ २०

एते चान्ये महीपाला योधास्तव च पाण्डव ।
गन्धर्वसहिता यान्ति यक्षैः पुण्यजनैस्तथा ॥ २१

[1]गुह्यकानां गतिं चापि केचित् प्राप्ता नृसत्तम ।
त्यक्तदेहा जितस्वर्गाः पुण्यवाग्बुद्धिसत्तमाः ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्वर्गारोहणपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

॥ ९८ ॥ स्वर्गारोहणपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[ अस्मिन्नध्याये २२ श्लोकाः ]

---

1. अ—धृष्टकेतुर्जयत्सेनो राजा चैव स सत्यजित् । [ अधिकः पाठः ]

## ॥ पञ्चमोऽध्यायः ॥



वैशम्पायनेन जनमेजयं प्रति भीष्मद्रोणादीनां स्वस्वसुकृतफलत्वेन स्वर्गभोगानन्तरं स्वैस्स्वैरंशिभिः सहैक्यप्राप्तिकथनम् ॥ १ ॥ जनमेजयेन यज्ञान्ते सबहुमानमास्तिकादिप्रेषणपूर्वकं तक्षशिलातो हास्तिनमेत्य प्रजापालनपूर्वकं सुखनिवासः ॥ २ ॥ सूतेन शौनकादीन् प्रति जनमेजयाय वैशम्पायनोक्तभारतकथाकथनसमापनपूर्वकं भारतमहिमप्रशंसनम् ॥३॥



जनमेजयः—

भीष्मद्रोणौ महात्मानौ धृतराष्ट्रश्च पार्थिवः ।
विराटद्रुपदौ चोभौ शङ्खश्चैवोत्तरस्तथा ॥ १

धृष्टकेतुर्जयत्सेनो राजा चैव स सत्यजित् ।
दुर्योधनश्च कर्णश्च शकुनिश्चैव सौबलः ॥ २

कर्णपुत्राश्च विक्रान्ता राजा चैव जयद्रथः ।
घटोत्कचादयश्चैव ये चान्ये नानुकीर्तिताः ॥ ३

एते वै कीर्तिता विप्र राजानो दीप्तमूर्तयः ।
स्वर्गे कालं कियन्तं च तस्थुस्तच्चापि शंस मे ॥ ४

आहोस्विच्छाश्वतं स्थानं तेषां तत्र द्विजोत्तम ।
अन्ते वा कर्मणः कां ते गतिं प्राप्ता नरर्षभाः ॥ ५

एत[1]दिच्छाम्यहं श्रोतुं प्रोच्यमानं त्वया द्विज ।

1. क-ख-घ—दिच्छामि भगवन् ।

तपसा हि प्रदीप्तेन सर्वं त्वमनुपश्यसि ॥ ६

सूतः—

इत्युक्तस्स तु विप्रर्षिर् अनुज्ञातो महात्मना ।
व्यासेन तस्य नृपतेर् आख्यातुमुपचक्रमे ॥ ७

वैशम्पायनः—

गन्तव्यं कर्मणामन्ते सर्वेषां मनुजाधिप ।
शृणु गुह्यमिदं राजन् देवानां भरतर्षभ ॥ ८

त्रैलोक्यदर्शी योगी च दिव्यचक्षुः प्रतापवान् ।
मुनिः पुराणः कौरव्य पाराशर्यो महाव्रतः ॥ ९
अगाधबुद्धिस्सर्वज्ञो गतिज्ञस्सर्वकर्मणाम् ॥ ९॥

वसूनेव महातेजा भीष्मः प्राप महाद्युतिः ।
अष्टावेव हि दृश्यन्ते वसवो भरतर्षभ ॥ १०॥

बृहस्पतिं विवेशाथ द्रोणो ह्यङ्गिरसां वरः ।
कृतवर्मा च हार्दिक्यः प्रविवेश मरुद्गणान् ॥ ११॥

सनत्कुमारं प्रद्युम्नः प्रविवेश यथागतम् ।
धृतराष्ट्रो धनेशस्य लोकान् प्राप दुरासदान् ॥ १२॥

धृतराष्ट्रेण सहिता गान्धारी च यशस्विनी ।
पत्नीभ्यां सहितः पाण्डुर् महेन्द्रसदनं ययौ ॥ १३॥

विराटद्रुपदौ चोभौ धृष्टकेतुश्च पार्थिवः ।

निशठाक्रूरसाम्बाश्च भानुः कण्वो विदूरथः ॥ १४॥
भूरिश्रवाश्शलश्चैव भूरिश्च पृथिवीपतिः ।
उग्रसेनस्तथा राजा वसुदेवश्च वीर्यवान् ॥ १५॥
उत्तरश्च सह भ्रात्रा शङ्खेन नरपुङ्गवः ।
विश्वेषां देवतानां ते गणमाविविशुर्नृप ॥ १६॥
[1]यस्सुवर्चा इति ख्यातस् सोमपुत्रोऽथ वीर्यवान् ।
अभिमन्युर्महाबाहुः फल्गुनस्य सुतोऽभवत् ॥ १७॥
स युद्ध्वा क्षत्रधर्मेण यथा नान्यः पुमान् क्वचित् ।
विवेश सोमं धर्मात्मा अभिमन्युर्महारथः ॥ १८॥
आविवेश रविं कर्णः पितरं पुरुषर्षभ ।
द्वापरं शकुनिः प्राप धृष्टद्युम्नस्तु पावकम् ॥ १९॥
धृतराष्ट्रात्मजास्सर्वे यातुधानान् प्रपेदिरे ।
धर्ममेवाविशत् क्षत्ता राजा चैव युधिष्ठिरः ॥ २०॥
अनन्तो भगवान् रामः प्रविवेश रसातलम् ।
पितामहनियोगाद्धि यो योगाद्गामधारयत् ॥ २१॥
यस्स नारायणो नाम देवदेवस्सनातनः ।
तस्यांशो वासुदेवस्तु कर्मणोऽन्ते विवेश ह ॥ २२॥
षोडश स्त्रीसहस्राणि वासुदेवपरिग्रहाः ।

1. क-ख-ब—इतस्सार्धः श्लोको नास्ति

न्यमज्जन्त सरस्वत्यां कालेन जयतां वर ॥ २३॥
ताश्चाप्यप्सरसो राजन् वासुदेवमुपागमन् ॥ २४

हतास्तस्मिन् महायुद्धे ये वीरास्तु महारथाः ।
घटोत्कचादयस्सर्वे देवान् यक्षांश्च भेजिरे ॥ २५

दुर्योधनसहायास्तु पार्थिवा येऽनुकीर्तिताः ।
[1]ते दानवान् गुह्यकांश्च गन्धर्वांश्च तथाऽविशन् ॥ २६

भवनं च महेन्द्रस्य कुबेरस्य च धीमतः ।
वरुणस्य तथा लोकान् विविशुः पुरुषर्षभाः ॥ २७

एतत् ते सर्वमाख्यातं विस्तरेण महाद्युते ।
कुरूणां चरितं कृत्स्नं पाण्डवानां च धीमताम् ॥ २८

सूतः—

एतच्छ्रुत्वा द्विजश्रेष्ठात् स राजा जनमेजयः ।
विस्मितोऽभवदत्यर्थं यज्ञकर्मान्तरेषु च ॥ २९

ततस्समापयामासुः कर्मान्तं तस्य याजकाः ।
आस्तिकश्चाभवत् प्रीतः परिमोक्ष्य भुजङ्गमान् ॥ ३०

ततो द्विजातीन् सर्वांस्तान् दक्षिणाभिरतोषयत् ।
पूजिताश्चापि ते राज्ञा ततो जग्मुर्यथागतम् ॥ ३१

विसर्जयित्वा विप्रांस्तान् स राजा जनमेजयः ।

---

1. ख—इतः श्लोकद्वयं नास्ति

दृष्टस्तक्षशिलायास्तु पुनरायाद्गजाह्वयम् ॥ ३२
एतद्ब्रह्मस्सर्वमाख्यातं व्यासशिष्येण धीमता ।
व्यासाज्ञया समाख्यातं सर्पसत्रे नृपस्य ह ॥ ३३
पुण्योऽयमितिहासाख्यः पवित्रं चेदमुत्तमम् ।
कृष्णेन मुनिना विप्र रचितं सत्यदर्शिना ॥ ३४
सर्वज्ञेन विधिज्ञेन सर्वज्ञानवता सता ।
अतीन्द्रियेण शुचिना तपसा भावितात्मना ॥ ३५
ऐश्वर्ये वर्तता चैव साङ्ख्ययोगविदा तथा ।
नैकतन्त्रविबुद्धेन दृष्टतन्त्रेण चक्षुषा ॥ ३६
कीर्तिं प्रथयता लोके पाण्डवानां महात्मनाम् ।
अन्येषां क्षत्रियाणां च भूरिद्रविणतेजसाम् ॥ ३७
क्रीडां च वासुदेवस्य देवदेवस्य शार्ङ्गिणः ।
विश्वेषां देवभागानां जन्म सायुज्यमेव च ॥ ३८
य इदं शृणुयाद्विद्वान् पर्वसु द्विजसत्तमः ।
धूतपाप्मा जितस्वर्गो ब्रह्मभूयाय गच्छति ॥ ३९
कार्ष्णं वेदमिमं सर्वं शृणुयाद्यस्समाहितः ।
ब्रह्महत्याकृतं पापं तत्क्षणादेव नश्यति ॥ ४०
यश्चेदं श्रावयेत् पुण्यं ब्राह्मणान् पादमन्ततः ।
अक्षय्यमन्नपानं वै पितॄंस्तस्योपतिष्ठते ॥ ४१

अह्ना यदेनः कुरुते इन्द्रियैर्मनसाऽपि वा ।
महाभारतमाख्याय सर्वपापैः प्रमुच्यते ॥ ४२

त्रिभिर्वर्षैर्महत् सर्वं कृष्णद्वैपायनः प्रभुः ।
निखिलं भारतं चेदं चकार भगवानृषिः ॥ ४३

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥ ४४

वाच्यते यत्र सततं जयाख्यं भारतं महत् ।
यशः कीर्तिश्च विद्या च भवन्ति मुदितास्सदा ॥ ४५

जयो नामेतिहासोऽयं श्रोतव्यो जयमिच्छता ।
राज्ञा राज्ञस्सुतैश्चैव गर्भिण्या चैव योषिता ॥ ४६

यद्यदिष्टतमं कामं लभते श्रद्धयाऽन्वितः ।
शृणुयान्मुदितो भूत्वा आस्तिको बुद्धिसंयुतः ॥ ४७

[1]अप्येकपादश्रवणाद् ब्रह्महत्या विनश्यति ।
भक्त्या द्विपादश्रवणाद् अश्वमेधफलं लभेत् ॥ ४८

त्रिपादश्रवणाद्भक्त्या पठनाद्वा तथैव च ।
पुनरावृत्तिरहिताँल्लभेद् ब्रह्मगतिं शुभाम् ॥ ४९

वासुदेवं स्मरन् विद्वान् पुण्डरीकायतेक्षणम् ।
इतिहासमिमं पुण्यं महार्थं वेदसम्मितम् ॥ ५०

1. क-ख—नास्ति श्लोकद्वयम्

श्रावयेद्यस्तु वर्णांस्त्रीन् कृत्वा ब्राह्मणमग्रतः ।
सर्वपापविशुद्धात्मा शुचिस्तद्गतमानसः ॥ ५१

इह कीर्तिं महत् प्राप्य भोगवान् सुखमश्नुते ।
[1]व्यासप्रसादेन पुनस् स्वर्गलोकं स गच्छति ॥ ५२

एतद्विदित्वा सर्वं तु सर्ववेदार्थविद्भवेत् ।
पूजनीयश्च सततं माननीयो भवेद्द्विजः ॥ ५३

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां स्वर्गारोहणपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

॥ ९८ ॥ स्वर्गारोहणपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[ अस्मिन्नध्याये ५३ श्लोकाः ]

॥ स्वर्गारोहणपर्व समाप्तम् ॥ ॥ स्वर्गारोहणपर्व च समाप्तम् ॥

---

॥ अस्मिन् स्वर्गारोहणपर्वणि श्लोकाः २०० ॥

---

इति श्रीमन्महाभारतं समाप्तम् ॥

---

॥ श्रीरस्तु ॥

# महाभारतस्य आश्वमेधिकपर्वस्थानां विषयाणाम्

## ॥ अक्षरमातृकाक्रमेण सूचनम् ॥



N—55

अध्यायः-पुटम्

अध्यायः-पुटम्

अध्यायः-पृष्ठम्

अध्यायः–पृष्ठम्

———

॥ श्रीरस्तु ॥

## महाभारतस्य आश्रमवासिकपर्वस्थानां विषयाणाम्

## ॥ अक्षरमातृकाक्रमेण सूचनम् ॥



अध्यायः-पृष्ठम्

---

॥ श्रीरस्तु ॥

# महाभारतस्य मौसलपर्वस्थानां विषयाणाम्

## ॥ अक्षरमातृकाक्रमेण सूचनम् ॥



अध्यायः-पुटम्

॥ श्रीरस्तु ॥

## महाभारतस्य महाप्रस्थानिकपर्वस्थानां विषयाणाम्

## ॥ अक्षरमातृकाक्रमेण सूचनम् ॥



॥ श्रीरस्तु ॥

# महाभारतस्य स्वर्गारोहणपर्वस्थानां विषयाणाम्

## ॥ अक्षरमातृकाक्रमेण सूचनम् ॥

---

## ॥ निवेदनम् ॥



| | पुटे. | पङ्क्तौ. | |
|---|---|---|---|
| महाप्रस्थाने | २ | ९ | अर्धम् |
| | ७ | ९ | अर्धद्वयम् |
| | १४ | ६ | ,, |
| | १६ | १७ | ,, |
| स्वर्गारोहणे | ५ | १३ | अर्धचतुष्टयम् |
| | ८ | ९ | अर्धद्वयम् |

एतानि त्रयोदशार्धानि—अ-क-ख-घ कोशेषु नोपलभ्यन्ते। परं तु सन्दर्भे एतेषामावश्यकत्वात्—ग-कोशादुद्धृत्य संयोजितानीत्यवगन्तव्यम् ॥



॥ श्रीः ॥

# महाभारत आश्वमेधिकपर्वस्थानामशुद्धानां शोधनम्

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| १३ | ३ | यज्ञशीलो कर्मरतो | यज्ञशीलःकर्मरतो |
| २४ | १५ | कथञ्चिद्दै | कथञ्चिद्दै |
| २७ | ४ | संवर्तेन | मरुत्तेन |
| ३१ | ११ | स्तत्व- | स्तत्त्व |
| ५२ | ७ | ज्ञातिपबान्धवम् | ज्ञातिबान्धवम् |
| ७२ | १ | —— | वैशम्पायनः |
| ७७ | १५ | मा तेऽभूदत्र | मा ते भूदत्र |
| १०३ | ६ | —— | ब्राह्मणः— |
| १०९ | १४ | विषयाविवदादि | विषयविवादादि |
| १४८ | ८ | श्रीभगवान् | —— |
| १६७ | ११ | —— | ब्रह्मा—— |
| १९५ | २ | इह लोकस्थ | इहलोकस्थ |
| २५० | १५ | शतकुम्भ | शातकुम्भ |
| २५२ | १७ | प्रायच्छत् | प्रायच्छन् |
| २५८ | ६ | शक्योन्यब्द | शक्यान्यब्द |
| २६५ | २० | नम्नास्मि | नाम्नास्मि |
| ३४९ | ८ | न्यवातयत् | न्यपातयत् |
| ३५२ | १९ | अध | अर्ध |
| ३६६ | २ | सम्स्कारादि | सङ्कारादि |

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ३९८ | १२ | योऽह्यपण्डितः. | यो ह्यपण्डितः |
| ४०३ | १७ | तपो वलम् | तपोवलम् |
| ४१३ | ६ | मद्भाक्तानां | मद्भक्तानां |
| ४१६ | ६ | तस्मिस् | तस्मिंस् |
| ४३५ | १८ | मन्तणां | मन्तृणां |
| ४४३ | १ | मरियेत् | मीरयेत् |
| ४४५ | ७ | पृछसि | पृच्छसि |
| ४५६ | १० | चक्रावाक | चक्रवाक |
| ६०३ | ३ | दधिक्राविण्णोति | दधिक्राऽण्णोति |
| ६१५ | ११ | विवर्धत | विवर्धते |
| ६१८ | १३ | सप्ताधिक १०७ | अष्टाधिक १०८ |

महाभारत आश्रमवासिकपर्वस्थानामशुद्धानां शोधनम्

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ३५ | २ | युधिष्ठिरात् | युधिष्ठिरेण |
| ५५ | ७ | विप्रेभ्यो स ददौ | विप्रेभ्यस्स ददौ |
| ५६ | ३ | तताऽनन्तर | ततोऽनन्तर |
| १२९ | ३ | ममपि | ममापि |
| | ४ | तद्रूपवषे | तद्रूपवेष |
| १३४ | १० | वैशम्पायनः- | — |
| १३६ | १७ | — | वैशम्पायनः |

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| १३८ | ६ | सञ्चयं | सञ्चयं |
| | १७ | देशाः भवता | देशा भवता |
| १४२ | १८ | दग्धो तथा | दग्धम् तथा |
| १४८ | ३ | शोचन्तो वर्तयन्तस्ते | शोकं निवर्तयन्तस्ते |

महाभारतस्वर्गारोहणपर्वस्याशुद्धशोधनम्

| | | | |
|---|---|---|---|
| ८ | ९ | तथाऽसम्युक्तो | तथाऽसम्युक्तो |

PRINTED BY V. RAMASWAMY SASTRULU & SONS
AT THE 'VAVILLA' PRESS, MADRAS.—1933.